शोधप्रकाशन ग्रन्थमाला–103

।।श्रीशिवयोगिशिवाचार्यविरचितः।।

# श्रीसिद्धान्तशिखामणिः

## ( राजशेखरीसंस्कृतव्याख्यासहितः )




व्याख्याकर्ता :

विद्वान् बि. राजशेखरार्यः

शोधप्रकाशन ग्रन्थमाला–103

।।श्रीशिवयोगिशिवाचार्यविरचितः।।

# श्रीसिद्धान्तशिखामणिः

## ( राजशेखरीसंस्कृतव्याख्यासहितः )

व्याख्याकर्ता

**विद्वान् बि. राजशेखरार्यः**

विश्रान्तसंस्कृतप्राध्यापकः,

ब्रह्मसन्द्रमठः, ब्रह्मसन्द्र (पोस्ट)

कोरहोबलि, कुमुकुरु ता।।जि।।

कर्नाटकदेशः–572128

*सम्पादकः*

**प्रोफेसरकमलेशझाविद्यावाचस्पतिः**

आचार्यः–धर्मागमविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः

काशीहिन्दूविश्वविद्यालयः, वाराणसी।

**शैवभारतीशोधप्रतिष्ठानम्**

जंगमवाडीमठ-वाराणसी-221001

॥श्रीः॥



# ग्रन्थसमर्पणम्

श्रीसिद्धान्तशिखामणिग्रन्थस्यास्य
संस्कृतव्याखानमिदंश्रीमद्भगवच्चरणानाम्
श्रीमत्काशीज्ञानसिंहासनाधीश्वराणाम्
1008 जगद्गुरुपुङ्गवानाम्
डॉ. श्रीश्रीश्रीचन्द्रशेखरशिवाचार्यभगवत्पादानाम्
दिव्यसन्निधौ सश्रद्धं सभक्तिकं सप्रणामञ्च
॥ समर्पितम् ॥

विद्वान् बि. राजशेखरार्यः

# ।।शुभाशिष:।।

विविधभाषासाहित्यसेवको विद्वान् शलाकापुरुष: श्रीराजशेखरार्य्य: पारम्परिकसंस्कृतविद्वत्सु अन्यतम: काव्यालंकारशास्त्रेषु दर्शनशास्त्रेषु च निष्णात: सुरुचिप्रवृत्तो विद्वत्परीक्षामुत्तीर्य बी.एस.सी., संस्कृत एम.ए., कन्नड एम.ए. इत्युपाधिं लब्ध्वा मैसूरनगरे महाराजासंस्कृतपाठशालायाम् प्राध्यापकपदे सेवारत आसीत्।

छात्रावस्थायां मैसूरनगरं गतोऽहं विद्वत्प्रवरेण एनेन सह परिचितो निरन्तरम् विद्यावैभवसमाकर्षण-वशाद् सम्पर्कसूत्रेणाबद्धोऽभवम्। काशी-ज्ञानपीठे जगद्गुरुपदे अभिषिक्ताय मह्यम् नानाविधासु विद्वद्-गोष्ठीसु शलाकापुरुषस्यास्य धर्मदर्शनसमयवचांसि श्रोतुमवसरो लब्ध:। संस्कृतभाषायां प्रभुतामेतस्य विलोक्य साहित्यसेवा एतदीया ममाभिलषिता समभूत्। वीरशैवधर्मग्रन्थस्य श्रीसिद्धान्तशिखामणे: विदुषा मरितोण्टदार्येण रचिता तत्त्वप्रदीपिकाख्या व्याख्या आसीत् किन्तु सा अत्यन्तं संक्षिप्ता विदुषामेव उपकारमादधाति। सामान्यजिज्ञासूनां छात्राणाम् पदपदार्थज्ञानपुर:सरं व्याकरणव्युत्पत्तिसिद्धये प्रतिपदव्युत्पत्तिमण्डितां व्याख्यामारचितुमेष सूचितोऽस्माभि: सहर्षं प्रतिश्रुतवता विदुषा चैनेन अभिनवां राजशेखरीं व्याख्यां विरच्य सम्पूर्णो हस्तलेख: पञ्चभ्य: वर्षेभ्य: पूर्वमेव अस्मभ्यम् समर्पित:। परमदृष्टवशाद् राजशेखरीव्याख्याभूषितस्यास्य ग्रन्थरत्नस्य मुद्रणं विलम्बितम्। इतस्तु व्याख्याकर्तु: विदुषोऽस्य शिवैक्यमपि संवृत्तम्। अथास्माभिश्चिन्तितं ग्रन्थप्रसिद्ध्या अस्य समवाप्तशिवैक्यस्य आत्मन: शान्तिप्रसादसन्तुष्टिरावर्जनीयेति। ततश्चास्माभि: व्याख्याविभूषितग्रन्थस्य सम्पाद्य मुद्रणं संविधातुं दायित्वभार: काशीहिन्दूविश्वविद्यालयस्य धर्मागमविभागप्राचार्ये आचार्यकमलेशझामहोदये न्यासीकृत:।

आचार्यवरेण श्रीझामहोदयेन पूर्वमपि अस्माकं विद्यावाचस्पतिप्रबन्धस्य शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शशीर्षकस्य स्फीतो राष्ट्रभाषानुवादो विहित: ततोऽपि पूर्वमस्यैव झामहोदयस्य निर्देशने अस्माकं विद्यावारिधिप्रबन्धस्य श्रीसिद्धान्तशिखामणिसमीक्षाग्रन्थस्य राष्ट्रभाषानुवाद: एतत्सुपुत्र्या श्रीमत्या

भुवनेश्वरीभारद्वाजया आचार्यया विहितोऽभूत्। धर्मागमविभागे वीरशैवागम-पाठ्यक्रमस्य स्थापनायाम् झामहोदयस्य सुमहद् योगदानं सर्वथा अविस्मरणीयमस्ति। व्यासक्तचेतसो बुधवरस्यास्य वीरशैव-धर्मदर्शनसम्प्रबोधो नितरामभ्यस्तो विभाति।

व्याकरणन्यायवेदान्ततन्त्रदर्शनशास्त्रादिषु प्रगाढाभ्यासशालिने वीरशैव-धर्मदर्शनसिद्धान्तसम्बद्धान् सूक्ष्मातिसूक्ष्मतत्त्वार्थानप्यात्मसात्कुर्वते प्राचार्यायास्मै सुविचिन्त्यैवास्माभिः अभिनव-राजशेखरीसंस्कृतव्याख्याग्रन्थस्य सम्पादनकार्यभारः समर्पितः।

सारस्वतसामर्थ्यशालिना अनेन व्याख्यातुः भाषाव्याकरणादिपरिमार्जनद्वारा संस्कृतव्याख्याविभूषितः एष श्रीसिद्धान्तशिखामणिग्रन्थः चारु सम्पादितः।

भगवान् श्रीकाशीविश्वनाथः आचार्यकमलेशझावर्याय सुमहद् आयुष्यम् सत्स्वास्थ्यं समृद्धिं च विदध्याद् येनायं संस्कृतसाहित्यसपर्याविधिना राष्ट्रं सुसमृद्धं विदध्यात्। भगवान् अस्याचार्यवरस्य सर्वेषां पारिवारिकसदस्यानाम् अभ्युदयं कुर्यादिति अस्माकं मङ्गलमयी शिवकामना।

सम्प्रति श्रीराजशेखरार्य - रचितायाः सुविशदायाःसंस्कृतव्याख्यायाः तदिच्छानुरूपम् प्रकाशनं संजायते। अनेन सत्प्रकाशनकर्मणा लिङ्गाङ्गसामरस्य-विधिना व्याख्याकर्तुरात्मनः शान्तिसन्तुष्टिः परां काष्ठां गच्छेदिति श्रीविश्वाराध्यं प्रभुं प्रभूतमभ्यर्थये।

अस्य ग्रन्थस्य श्रद्धया टङ्कणं विधातुः श्रीगौरीशंकरसिंहस्य सपरिवारस्य कृते मम मङ्गलाशीर्वचांसि लसन्तु।

ग्रन्थप्रकाशने सहयोगमाचरतां समेषामन्येषामपि पुण्यात्मनां कृते मङ्गलाशिषो प्रवर्तन्ताम्।

विद्वत्प्रवरस्य बी. राजशेखरार्यस्य सुविशदसंस्कृतव्याख्यया जिज्ञासवो विशिष्य छात्राः व्युत्पत्तिम् अधिगच्छेयुरिति जिज्ञासुमङ्गलशतं प्रवर्तताम्।

—इत्याशिषः

**महास्वामिनः श्रीचन्द्रशेखरशिवाचार्याः**

काशीज्ञानपीठम्, जङ्गमवाडीमठः

वाराणसी।

# ।।सम्पादकीयम्।।

**अष्टावरणसम्पुष्ट एकोत्तरशतस्थलः ।**
**पञ्चाचारजयी भातु श्रीसिद्धान्तशिखामणिः ।।**

श्रीसनातनधर्म-प्रभेदः श्रीवीरशैवधर्मः स्वं विशिष्टं माहात्म्यं किमपि संबिभर्ति। अस्य संस्थापकेषु श्री रेणुक-दारुक घण्टाकर्ण-धेनुकर्ण-विश्वकर्ण-समाख्य-शिवगणेषु श्रीजगद्गुरुपञ्चाचार्येषु अन्यतमो रम्भापुरी (कर्णाटक) पीठाधीश्वरो रेणुकाचार्यः महर्षिम् अगस्त्यम् पड्विदिसूत्रमुपदिश्य आगमोक्त-वीरशैवसिद्धान्तान् उपदिशति स्म। अथोपदिष्टानां तेषां सिद्धान्तसुमानां श्रीशिवयोगिशिवाचार्येण समुद्ग्रथितो मालामणिः श्रीसिद्धान्तशिखामणिर्नाम आकरग्रन्थो श्रीशिवेच्छया भूतले प्रसरन् ग्रन्थरत्नमणिरवबभाषे। कामिकादि-वातुलान्तानाम् अष्टाविंशत्यागमानां सारसर्वस्वभूत एष शिखामणिः 1400 श्लोकान् सुश्लोकान् आत्मसात्कृत्य षट्स्थलसिद्धान्तान् 101 संख्याकान् अवान्तरस्थलान् विधाय सुविशदं कोमलकान्तपद्यात्मा विभाति। काव्यमयं श्रीसिद्धान्तशिखामणि - समाख्यं ग्रन्थरत्नं जग्रन्थाष्टमशताब्द्यां जीवन्नेव समवाप्तलिङ्गाङ्गसामरस्योऽत्रभवान् शिवयोगि-शिवाचार्यः सुमहानाचार्य इति विदुरैतिह्यविदः।

**सर्वेषां शैवतन्त्राणामुत्तरत्वान्निरुत्तरम्।**
**नाम्ना प्रतीयते लोके यत्सिद्धान्तशिखामणिः।।**

राष्ट्रस्य प्रादेशिकभाषासु अन्ताराष्ट्रियासु च सम्मिल्य षोडशभाषासु विहितानुवादैः विभूषितस्य पृथक् पृथक् असकृत्संस्करणेषु प्रकाशितस्य श्रीमद्भगवद्गीताया इव पारायणतामुपागतस्य श्रीसिद्धान्तशिखामणिग्रन्थस्य बहुविधासु लोकरमणीयासु भाषासु रचितानां बहूनां प्रवचनग्रन्थानां प्रकाशनमप्येतस्य जीवनधन्यतासम्पादकस्य ललितकाव्यमयस्य सहृदयग्राह्यस्य मनोज्ञमञ्जुलस्य माहात्म्यं सरस्वत्या अपि निखिलतया न शक्यते गातुमिति विदाङ्कुर्वन्तु सुधियस्तदनुशीलनेन तत्रभवन्तो भवन्तः।

एकविंशतिपरिच्छेदेषु संविभक्तः शान्तिरसात्मा संसारवैरस्येन शिवसामरस्यप्रीतिजननपरायणः महाकाव्यात्मा ग्रन्थ एषः आलंकारिकैरपि

जेगीयते। अस्य अविकत्थनः श्लाघाविरही धीरोदात्तादप्युत्तमनायको गणेश्वरः श्रीरेणुकः। महानायकौ त्वस्य प्रपञ्चमातापितरौ आद्यदम्पती गौरीमहेश्वरौ। कविवंशवर्णनयुतस्य प्रकृतिवर्णनाञ्चितस्य विविधालङ्काररच्छन्दोनिधेः वैदर्भीग्रथितस्य कियद्वा माहत्म्यमुपगीयतां शास्त्रकाव्यस्येति जङ्गमगुरवः यतयः सद्गृहस्थ-भक्ताश्चैतदीयरसपानलम्पटाः स्वयमेव प्रमाणमिति अवाङ्मनसगोचरीभूते वाचः प्रपञ्चेनालमिति विरमामि नमामि च गणेशाम्बिकाभ्यां युतं शिवमिति शम्।।

अथ मरितोण्डदार्यवर्येण रचितया संस्कृतव्याख्यया अतिसंक्षिप्तया छात्राणां व्युत्पित्सूनामन्येषां जिज्ञासूनाञ्च प्रारम्भिकं सम्यगवबोधमनाकलयतां हितमुद्दिश्य श्रीचन्द्रशेखरेणेव श्रीचन्द्रशेखरेण यतिवरेण महास्वामिना आज्ञप्ताः शुभाशीर्भिर्योजिताश्चालङ्कारिकदार्शनिकाः जङ्गमस्वामिचरणेषु बद्धादराः श्री बि. राजशेखरार्याः इहान्वयमुखेनैव सर्वं व्याख्यास्यते मयेति-मल्लिनाथोक्तनयेन काव्याङ्गपरिशीलनोन्मीलनमयीं श्रीराजशेखरीं संस्कृतव्याख्यां व्यधुरिति शिवैक्यं गतेषु तेषु जगद्गुरुभिः श्रीचन्द्रशेखरशिवाचार्यैः अगणितगुणगणशालिभिः बाल्येन तिष्ठासुभिरादिष्टेन मया श्रीराजशेखरीसंस्कृत-व्याख्ययाऽभिनवया रससरित्प्रवाहिन्या संवलितस्य श्रीसिद्धान्तशिखामणिग्रन्थरत्नस्य सम्पादनकर्मानुष्ठितम्। अनुष्ठितेनानेन धर्मकर्मणा भगवान् अन्नपूर्णानाथो विश्वनाथः प्रीयताम् अनुगृह्णातु चैतदनुशीलनपरान् शास्त्रोचितभोगमोक्षान्वितान् कुर्वन् सुजनानिति स्तुतिपुरःसरं त्वत्कृतिर्मेकृतिर्ननु-भावभरितेन मया सम्पादितः शिवसामरस्यसम्पादको ग्रन्थ एषः अन्नपूर्णा-विश्वनाथयोः समर्पितोऽनेन प्रीणितौ प्रीयेताम् निरन्तरम्।

**प्रीत्यानया तोषमुपागतौ तौ क्रीडापरौ विश्वविलासभाजौ।**
**गौरीमहेशौ कुरुतां समन्ताद् दासान्निजोल्लासभरान् विशुद्धान्।।**

**कमलेशझा**

बी. 34/140 ए-3-के, गायत्रीनगर,
शुकुलपुरा, वाराणसी-221010

॥श्रीः॥

# प्रास्ताविकी वाक्

भारतदेशोऽयं नानाविधानां मतानां नानाविधानां धर्माणां नानाविधानां दर्शनानाञ्च मूलाधारस्थानं वर्तते। वेदादिद्रष्टारः महर्षयः, दर्शनस्थापकाः महर्षयः, आचार्यपुरुषाश्च अत्रैव देशे जन्म लब्धवन्तः। निगमागमोपनिषच्छास्त्र-पुराणेतिहासादयश्च अत्रैव सुप्रचलिताः। सांख्यादिषु षड्दर्शनेषु उत्तरमीमांसादर्शनमेव सर्वेषां सिद्धान्तानां मूलमाकरस्थानम्। तत्र च द्वैतमद्वैतं विशिष्टाद्वैतं शक्तिविशिष्टाद्वैतमिति चत्वारः सिद्धान्ताः अथवा चत्वारि दर्शनानि सुप्रसिद्धानि। तत्र च वीरशैवदर्शनम् वीरशैवसिद्धान्तः इति नामान्तराभिधानकं शक्तिविशिष्टाद्वैतदर्शनमेकतमम्। श्रीमज्जगद्गुरवः पञ्चाचार्याः सिद्धान्तस्यास्य संस्थापकाः इति शिवागमविदां सुविदितं वर्तते।

स्वकीयदर्शनस्य वैशिष्ट्यप्रतिपादनार्थं व्यासमहर्षिप्रणीतानां ब्रह्म-सूत्राणामाचार्यपुरुषैः स्वस्वसिद्धान्तानुसारं संस्कृतभाषामाश्रित्य भाष्याणि विरचितानि। एवमेव शक्तिविशिष्टाद्वैतसिद्धान्तमाश्रित्य प्रथमतया श्रीनीलकण्ठशिवाचार्यैः स्वकीयं श्रीनीलकण्ठभाष्यं विरचितम्। परं भाष्यमिदमस्माकं दौर्भाग्यवशात् अद्यावधि नोपलब्धम्। अथापि भाष्यस्यास्य प्रभावस्तु श्रीशिवानुभवशिवाचार्यविरचितेषु शिवाद्वैतदर्पणः, शिवानुभवसिद्धान्तः, शक्तिसन्दोहः इत्यादिग्रन्थेषु दरीदृश्यते इति तु सुनिश्चितम्। क्रियासारग्रन्थस्तु श्रीनीलकण्ठभाष्यस्य वृत्तिरूपः एव ग्रन्थः।

एवमेव श्रीपतिपण्डितैः श्रीकरभाष्यमिति नाम्ना विरचितं ब्रह्मसूत्रवीरशैवभाष्यमेव इदानीं सुप्रसिद्धं सम्पूर्णमुपलभ्यते। वीरशैवसिद्धान्त-प्रतिपादकाः ग्रन्थास्तु प्रभूतमेव विद्यन्ते। वीरशैवसिद्धान्तस्यास्य शिवाद्वैतम्, विशेषाद्वैतम्, द्वैताद्वैतम्, शक्तिविशिष्टाद्वैतम्, षट्स्थलसिद्धान्तः, शिवयोगः इत्यादीनि पर्यायनामानि वर्तन्ते। यद्यपि दर्शनेऽस्मिन् पञ्चाचाराः, अष्टावरणानि षट्स्थलानि चेति भागत्रयं विद्यते, अथापि, षट्स्थलानामेव प्रतिपादनमत्र दर्शने प्राधान्येनैव परिगण्यते। षट्स्थलानां नित्याचरणे पञ्चाचाराणामष्टावरणानाञ्च

अनुस्यूतत्वरूपेण आचरणं स्वस्वाभाविकतया अनुष्ठीयते एव। भक्तः, महेशः, प्रसादी, प्राणलिङ्गी, शरणः, ऐक्यः इत्यवस्थाभेदेन षट्स्थलानि निर्दिष्टानि। अत्र च षट्स्थलेषु मध्ये एकैकस्मिन्नपि स्थले अवान्तरस्थलभेदाः वर्तन्ते। ते च आहत्य एकोत्तरशतस्थलानि इति नाम्ना व्यवह्रियन्ते। प्रप्रथमतया एतेषाम् एकोत्तरशतस्थलानां विवरणं तावत् श्रीशिवानुभवशिवाचार्यविरचिते शिवानुभवसिद्धान्तनामके ग्रन्थे विद्यते। एतत्तु तैरेव विरचिते शिवाद्वैतदर्पणनामके ग्रन्थ उल्लिखितम्। परं शिवानुभवसिद्धान्तनामकोऽयं ग्रन्थः नेदानीं यावदुपलब्धः। किन्तु शिवाद्वैतदर्पणस्य तृतीयपरिच्छेदान्ते— 'एवं पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थलानां क्रमोऽप्यनुसन्धेयः। स चास्मत्कृतशिवानुभवसिद्धान्ते विस्तरेण प्रतिपादित इति अत्रैव विरम्यते इत्युक्तमस्ति।

अनन्तरेषु ग्रन्थेषु न कुत्रापि एकोत्तरशतस्थलानां विवरणं दृश्यते श्रीसिद्धान्तशिखामणिग्रन्थं विना। वचनशास्त्राचार्येति प्रसिद्धैः फ.गु.हलकट्टिमहोदयैः सम्पादिते वचनशास्त्रनामके ग्रन्थे श्रीबसवेश्वरादिभिः वचनकारैः विरचितानां वचनानां सम्यक्तया एकोत्तरशतस्थलानामानुगुण्येन समायोजनं कृतं वर्तते। एतेषां वचनानामायोजनसरणिस्तावत् सिद्धान्तशिखामणिप्रयुक्तैकोत्तरशतस्थलानां सरणिमेव अनुसरन्ती दृश्यते। एतद्द्वयस्यायोजनक्रमं, स्थूलानां सर्वेषां लक्षणादिकम् आश्रित्य क्रियमाणः समन्वयस्तु अत्युत्कृष्टसंशोधनात्मकः नितरां तुलनात्मकश्च महानेव संशोधनप्रबन्ध एव भवितुं शक्नोति इत्यत्र न कोऽपि सन्देहः।

प्रकृते श्रीसिद्धान्तशिखामणिः संस्कृतभाषामाश्रित्य श्लोकरूपेण सुनिबद्धः शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकः सुप्रसिद्धः ग्रन्थः। एतत्प्रणेता श्रीशिवयोगिशिवाचार्यः। अयञ्च बहुश्रुतः, बहुज्ञः, नानाशास्त्रेषु परिणतमतिः, महानेव सहृदयः इति तु निश्चितम्। प्रायः सर्वत्र सिद्धान्तप्रतिपादकेषु ग्रन्थेषु काव्यसौन्दर्यस्य लवलेशोऽपि द्रष्टुं नैव शक्यः। परमयं ग्रन्थः अपवादरूपः। यतः ग्रन्थोऽयं काव्यमय इव अथवा काव्यमय एव।

श्रीमद्वीरशैवसिद्धान्तस्य परमतत्त्वमिति प्रख्यातस्य षट्स्थलसिद्धान्त-प्रतिपादकस्य ग्रन्थस्यास्य श्री नि।।प्र।।श्रीमरितोण्टदार्यस्वामिनः अत्युत्कृष्टं संस्कृतभाषामाश्रित्य व्याख्यानं कृतवन्तः अथापि श्लोकानां सुलभतया

अर्थस्य अवगमनं पाठकसहृदयानां भवतु इति विशालया दृष्ट्या श्रीमत्काशीज्ञानसिंहासनाधीश्वरैः डा0 श्रीश्रीचन्द्रशेखरशिवाचार्य-भगवत्पादैः– 'तत्रभवद्भिः मल्लिनाथेन यथा कुमारसम्भवादिमहाकाव्यानां व्याख्यानं कृतमस्ति तथैव विग्रहवाक्यक्रियापदादिपरिचयद्वारा शब्दार्थचमत्कारादीनां च प्रदर्शनपूर्वकं श्रीसिद्धान्तशिखामणिग्रन्थस्यापि संस्कृतभाषायां व्याख्यानं कर्तव्यम्' इति आज्ञा तु दत्ता। परं सः सर्वज्ञः मल्लिनाथः क्व? अत्यल्पमतिः अत्यल्पबुद्धिश्चाहं क्व? अथापि पूज्यपादानामाज्ञां भक्त्या शिरसि धृत्वा, श्रीगुरूणां श्रीगृहदेवतादीनां च कृपा-प्रसादानुग्रहात् तेषामनुग्रहे अतीव विश्वासं सम्भावयन् — 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति महाकविवाक्यमनुस्मरन् सुमहति कार्येऽस्मिन् प्रवृत्तः सन् मम अत्यल्पबुद्धि-स्वल्पज्ञानपरिमितावेव यथामति यथाशक्ति व्याख्यानमिदं कृतवानस्मि।

परं व्याकरणशास्त्रस्य अल्पज्ञानवशादेव अस्मिन् व्याख्याने भवेयुरनेके व्याकरणदोषाः। ते यदि सहृदयैः समीक्ष्य कथ्यन्ते चेत् तेषां शुद्धीकरणमवश्यं करिष्यते।

वीरशैवसिद्धान्तोऽपि मया न विधिपूर्वकमधीतः। किन्तु श्रीमत्काशीजगद्गुरु-पूज्यपादैः आयोजितेषु विचारसङ्किरणसन्दर्भेषु केवलं प्रबन्धमण्डनार्थं केषाञ्चन दार्शनिकग्रन्थानां श्रीसिद्धान्तशिखामणेः आगमवचनानां च यत्किञ्चिद् अध्ययनमनिवार्यमासीत्। एतदनुभवबलात् शिवाद्वैतपरिभाषा, वीरशैवेन्दुशेखरः, शिवाद्वैतदर्पणः, तत्त्वप्रकाशः, तर्कसङ्ग्रहः, वीरशैवदर्शनामृतम् इत्यादिग्रन्थानां-कन्नडानुवादः मया कृतः। एतादृशेन अल्पैनैवानुभवेन श्रीसिद्धान्तशिखामणिग्रन्थ-स्यास्य यथामति यथाशक्तिव्याख्यानं विरचितम्।

कन्नडभाषायामनूदितग्रन्थानां शिवाद्वैतपरिभाषादीनां प्रकटनद्वारा मम प्रोत्साहाशीर्वादं दत्तवतां श्रीमद्रम्भापुरीवीरसिंहासनाधीश्वराणां 1008 जगद्गुरुवर्याणां श्रीश्रीप्रसन्नरेणुकवीरसोमेश्वरशिवाचार्यभगवत्पादानां सश्रद्धं पवित्रचरणकमलयोः सहस्रं प्रणामाः समर्प्यन्ते। एवमेव श्रीसिद्धान्तशिखामणिग्रन्थस्य व्याख्यानंरचनायां प्रेरकशक्तिरूपेण प्रोत्साहाशीर्वादं दत्तवतां श्रीमत्काशी-ज्ञानसिंहासनाधीश्वराणामपि पवित्रपादारविन्दयोः सश्रद्धं सहस्रं प्रणामाः समर्प्यन्ते।

संस्कृतवेदाङ्ग्लविद्यादानादिना पुत्रवात्सल्यभावेन मामनुगृहीतवन्तः श्रीसिद्धगङ्गाक्षेत्राधीश्वराः श्री.नि।।प्र।।श्रीश्रीशिवकुमारमहास्वामिनः एतादृशव्याख्यान-करणे मूलं कारणमिति तेषां परमपूज्यानां भगवत्पादानामपि पवित्रचरणारविन्दयोः सश्रद्धं सभक्तिकाः सहस्रं प्रणामाः समर्प्यन्ते।

हंसक्षीरन्यायवत् अत्रस्थाः गुणाः मान्यैः सहृदयैः अङ्गीकर्तव्याः, दोषास्तु क्षन्तव्याः - इति सप्रश्रयं प्रार्थये।

*मातृभ्यो नमः, पितृभ्यो नमः, आचार्येभ्यो नमः*

*मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव*

*इत्याद्युपनिषद्वाक्यानि मे मार्गदर्शकानि भवन्तु।।*

*।।इति शिवम्।*

**—विद्वान् बि.राजशेखरार्यः**

॥श्रीः॥

# व्याख्याकर्तुः संक्षिप्तः परिचयः

| | | |
|---|---|---|
| अभिधानम् | – | बि. राजशेखरार्यः |
| पितुः अभिधानम् | – | श्रीबसवाराध्यः |
| मातुः अभिधानम् | – | श्रीमती सिद्धवीराम्बा |
| ग्रामः | – | ब्रह्मसन्द्रः |
| जन्मदिनम् | – | 26.01.1935 |

प्राथमिकः विद्याभ्यासः स्वग्रामे अभवत्अनन्तरं श्रीसिद्धगङ्गाक्षेत्रे माध्यमिकादिः वेदः संस्कृतम् इत्यादि अध्ययनम्। मैसूरुनगरे वर्तमानायां सर्वकारीय - महाराजसंस्कृतमहापाठशालायाम् अलङ्कारशास्त्रविभागे सहायकप्राध्यापकत्वेन प्राध्यापकत्वेन च कार्यनिर्वहणम्।

विद्याभ्यासविवरः — पदवीत्यादयः—

(1) अलङ्कारशास्त्रविद्वान्

(2) बि.एस्सि.

(3) कन्नडपण्डितः

(4) शिक्षाशास्त्री (संस्कृत बि.एड्)

(5) संस्कृत - एम्.ए.

(6) कन्नड एम्.ए.

॥श्रीः॥

# लिङ्गाङ्गसामरस्यम्

1. भक्तस्तावत् निवृत्तिकालयुक्तस्य क्रियाशक्तियुक्तस्य च आचारलिङ्गस्य श्रद्धाभक्त्या सुचित्तहस्तेन गन्धपदार्थं धृत्वा नकारमन्त्रम् अनुस्मरन् घ्राणेन्द्रियमुखे समर्प्य गन्धप्रसादभोगी भूत्वा गन्धानन्दीभवति।

2. माहेश्वरस्तावत् प्रतिष्ठाकलायुक्तस्य ज्ञानशक्तियुक्तस्य च गुरुलिङ्गस्य नैष्ठिकभक्त्या सुबुद्धिहस्तेन रसपदार्थं धृत्वा मकारमन्त्रमनुस्मरन् रसनेन्द्रियमुखे समर्प्य रसप्रसादभोगी भूत्वा रसानन्दीभवति।

3. प्रसादी तावत् विद्याकलायुक्तस्य इच्छाशक्तियुक्तस्य च शिवलिङ्गस्य सावधानभक्त्या निरहंकारहस्तेन रूपपदार्थं धृत्वा शिकारमन्त्रमनुस्मरन् नेत्रेन्त्रियमुखे समर्प्य रूपप्रसादभोगी भूत्वा रूपानन्दीभवति।

4. प्राणलिङ्गी तावत् शान्तिकलायुक्तस्य आदिशक्तियुक्तस्य च जङ्गमलिङ्गस्य अनुभवभक्त्या सुमनोहस्तेन स्पर्शपदार्थं धृत्वा वाकारमन्त्रमनुस्मरन् त्वगिन्द्रियमुखे समर्प्य स्पर्शप्रसादभोगी भूत्वा स्पर्शानन्दीभवति।

5. शरणस्तावत् शान्त्यतीतकलायुक्तस्य पराशक्तियुक्तस्य च प्रसादलिङ्गस्य आनन्दभक्त्या सुज्ञानहस्तेन शब्दपदार्थं धृत्वा यकारमन्त्रमनुस्मरन् श्रोत्रेन्द्रियमुखे समर्प्य शब्दप्रसादभोगी भूत्वा शब्दानन्दीभवति।

6. ऐक्यस्तावत् शान्त्यतीतोत्तरकलायुक्तस्य चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा ओंकारप्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तृप्तिप्रसादभोगी भूत्वा तृप्त्यानन्दीभवति।

## षट्स्थलसम्बन्धिनां

| क्रम संख्या | (१) अङ्ग स्थलानि | (२) लिङ्गानि | (३) कलाः | (४) शक्तयः | (५) भक्तयः |
|---|---|---|---|---|---|
| १ | भक्तस्थलम् | आचारलिङ्गम् | निवृत्तिकला | क्रियाशक्तिः | श्रद्धाभक्तिः |
| २ | महेशस्थलम् | गुरुलिङ्गम् | प्रतिष्ठाकला | ज्ञानशक्तिः | निष्ठाभक्तिः |
| ३ | प्रसादिस्थलम् | शिवलिङ्गम् | विद्याकला | इच्छाशक्तिः | अवधानभक्तिः |
| ४ | प्राणलिङ्गस्थलम् | जङ्गमलिङ्गम् | शान्तिकला | आदिशक्तिः | अनुभवभक्तिः |
| ५ | शरणस्थलम् | प्रसादलिङ्गम् | शान्त्यतीतकला | पराशक्तिः | आनन्दभक्तिः |
| ६ | ऐक्यस्थलम् | महालिङ्गम् | शान्त्यतीतोत्तरकला | चिच्छक्तिः | समरसभक्तिः |

# अङ्गलिङ्गादीनां विवरणम्

| (६) हस्ताः | (७) पदार्थाः | (८) मन्त्राः | (९) इन्द्रियाणि | (१०) प्रसादः | (११) आनन्दः |
|---|---|---|---|---|---|
| सुचित्तम् | गन्धः | नकारः | घ्राणेन्द्रियम् | गन्धप्रसादः | गन्धानन्दः |
| सुबुद्धिः | रसः | मकारः | रसनेन्द्रियम् | रसप्रसादः | रसानन्दः |
| निरहंकारः | रूपम् | शिकारः | नेत्रेन्द्रियम् | रूपप्रसादः | रूपानन्दः |
| सुमनस् | स्पर्शः | वाकारः | त्वगिन्द्रियम् | स्पर्शप्रसादः | स्पर्शानन्दः |
| सुज्ञानम् | शब्दः | यकारः | श्रोत्रेन्द्रियम् | शब्दप्रसादः | शब्दानन्दः |
| सद्भावः | तृप्तिः | ओंकारः | मानसेन्द्रियम् | तृप्तिप्रसादः | तृप्त्यानन्दः |

# विषयानुक्रमणी

।।श्रीः।।

# ।।अथ श्रीसिद्धान्तशिखामणिः।।

## (सव्याख्यः)

## ।।मङ्गलाचरणम्।।

**नन्दीश्वरं नमस्कृत्य प्राचार्यं दारुकं तथा।**
**श्रीगुरोराज्ञया व्याख्यां तनुते राजशेखरः।।**

ग्रन्थारम्भे विघ्नविघाताय ग्रन्थस्य निर्विघ्नपरिसमात्यर्थञ्च मङ्गलं तावत्कर्तव्यमिति सम्प्रदायः शिष्टाचारश्च। मङ्गलं तावत्-नमस्कारात्मकम्, आशीर्वादात्मकम् वस्तुनिर्देशात्मकञ्चेति त्रिधा वर्तते। तत्र मङ्गलश्लोके नमः वन्दे इत्यादिपदप्रयोगात् नमस्कारात्मकं मङ्लम्। 'दूरीकरोतु दुरितम्, तनोतु मङ्गलम्' इत्येवमादिप्रयोगादाशीर्वादात्मकं मङ्गलम्। अथ 'अस्त्युत्तरस्याम्, कश्चित्कान्ताविरहगुरुणा' इत्यादि प्रयोगाद् वस्तुनिर्देशात्मकं मङ्गलम् भवति।

एवमेव मङ्गलाचरणकृते योग्या देवतापि त्रिविधा उचितदेवता, इष्टदेवता, उचितेष्टदेवता चेति। तत्र कामशास्त्रस्य कामदेवः उचितदेवता। 'वागर्थाविव-' इत्यादिरूपेण कृते च मङ्गलपद्ये शिवपार्वत्यौ महाकवेः कालिदासस्य यतः इष्टदेवते, तस्मात् पार्वतीपरमेश्वरौ तस्य इष्टदेवते। अथ 'नियतिकृतनियमरहिताम्-, अपूर्वं यद्वस्तु-' इत्यादिरूपेण कृते मङ्गलपद्ये वाग्देवी भारती तावत् यतः स्वयं विद्याधिदेवता, शास्त्राधिदेवता च वर्तते तस्मादेव वाग्देवी भारती उचितेष्टदेवता।

एवमेव श्रीशिवयोगिशिवाचार्येण स्वविरचितेऽस्मिन् सिद्धान्तशिखामणौ 'त्रैलोक्यसम्पदालेख्य...' इत्यादिरूपेण यन्मङ्गलं कृतं तत् उचितेष्टदेवतात्मकमिति निर्णेतुं शक्यते। यतः - वीरशैवदर्शनप्रतिपादनात्मकस्य एकोत्तरशतस्थलस्य प्रतिपादनमेवात्र विषयः। फलं तावत् लिङ्गाङ्गसामरस्यरूपो मोक्षः। अस्य च मोक्षस्य प्रदायकः शक्तिविशिष्टात् शिवादन्यो नैव। अतः शक्तिविशिष्टशिवविषयकं नमस्कारात्मकं मङ्गलमेतद् उचितेष्टदेवतात्मकमिति तु निश्चितम्।

एवमेव व्याख्याकर्त्रा मयापि अस्मद्गृहदेवतात्मकस्य श्रीनन्दीश्वरस्य, अस्मद्गोत्रपुरुषस्य श्रीमज्जगद्गुरुदारुकाचार्यस्य च विषये नमस्कारात्मकं मङ्गलं विहितम्।

'ग्रन्थस्यास्य व्याख्या भवता अवश्यं कर्तव्या' इति परमपूज्यानां श्रीमत्काशीज्ञानसिंहासनाधीश्वराणां १००८ जगद्गुरुवर्याणां डॉ. श्रीश्रीचन्द्रशेखर-शिवाचार्यभगवत्पादानाम् आज्ञां शिरसि सन्धार्य यथामति यथाशक्ति च श्रीसिद्धान्तशिखामणिग्रन्थस्यास्य संस्कृतभाषामाश्रित्य व्याख्यानं तावत् समग्रतया कर्तुं कृतप्रयत्नोऽहं मम इष्टदेवतानमस्कारात्मकं मङ्गलं कुर्वन् व्याख्यानं कर्तुमारभे। ममास्मिन् प्रयत्ने श्रीमज्जगद्गुरुवर्याणां, गृहदेवतानां, जगद्गुरुपञ्चाचार्याणां, श्रीशिवकुमारमहास्वामिनां च महानेव मया कृपाशीर्वादः अपेक्षितः। तदाशीर्वादानुसारेण यथामति यथाशक्ति च व्याख्यानकरणे प्रयत्नवानस्मि।

व्याख्यानेऽस्मिन् अध्येतॄणां सौकर्यार्थं सन्ध्यादिकम् अधिकतया न कृतम्। विग्रहवाक्यादीनि यथामति योजितानि। यद्यपि सन्ध्यकरणादिक्रमोऽयं संस्कृतव्याकरणनियमस्य विरोधी वर्तते, अथापि सुगमतया अध्ययनार्थावगमकृते व्याकरणनियमः कुत्रचिद् नानुसृतः, कुत्रचिदनुसृतः।

अस्मिन् व्याख्याने भवेयुरपि व्याकरणादि-दोषाः, अथापि विद्वद्भिः सहृदयैः ते दोषाः क्षन्तव्याः, अपि च ते मह्यं शुद्धरूपेणावश्यं बोधनीयाः इति सम्प्रार्थ्यते।।

।।श्रीः।।

# ।।प्रथमः परिच्छेदः।।

**सप्तभिः श्लोकैः शिवस्य स्तुतिरूपं मङ्गलाचरणम्–**

**त्रैलोक्य-सम्पदालेख्य - समुल्लेखनभित्तये।**
**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः।।१।।**

पदविभागस्तु सुलभः। अत्र श्लोके शिवाय नमः इति प्रधानं वाक्यम्। शिवाय इति पदं विशेष्यम्, त्रैलोक्य...- भित्तये, सच्चिदानन्दरूपाय, ब्रह्मणे इति पदत्रयं विशेषणम्। अन्वयोऽपि सुलभः।

'यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य।
तल्लिङ्गं तद्वचनं सा च विभक्तिः विशेषणस्यापि।।'

इति नियमानुसारं विशेष्यपदं विशेषणपदानि च अत्र पुल्लिङ्गचतुर्थ्येक-वचनान्तानि। प्रथमं पदन्तु नित्यस्त्रीलिङ्गम्।

सम्पत्+आलेख्य - जश्त्वसन्धिः, सम्+उत्+लेखन—इत्यत्र 'तोर्लि' इति सूत्रेण 'उल्लेखन' इति परसवर्णत्वम्। सत्+चित् - सच्चित् श्चुत्वसन्धिः। चित्+आनन्द - चिदानन्द - इति जश्त्वसन्धिः। नमः इति अव्ययम्। 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति सूत्रेण शिवाय इत्यत्र चतुर्थी-विभक्तिः।

त्रैलोक्य - सम्पदालेख्यसमुल्लेखनभित्तये - त्रयाणां लोकानां समाहारः त्रिलोकी (समाहारद्विगुः, ईकारान्तः स्त्रीलिङ्गः), त्रिलोकी एव त्रैलोक्यम् (स्वार्थे ष्यञ् नपुंसकलिङ्गत्वम्), त्रैलोक्यस्य सम्बन्धिनी या सम्पत् - सृष्टि-स्थिति-लय-तिरोधानानुग्रहात्मकं यद् वैभवं, सा सम्पदेव यद् आलेख्यं चित्रम् तस्य आलेख्यस्य, सम् - उत् - लेखनं यत् समीचीनतया अत्युत्कृष्टतया च चित्रलेखनकार्यं, तस्य उल्लेखनार्थं या भित्तिरिव भित्तिः मध्यमपदलोपिसमासः आधार इति यावत्, शिवाय नमः इत्यत्र अन्वयः।

यथा चित्रकारस्य कस्यचन चित्रलेखनार्थं काचन भित्तिरावश्यकी, तद्वदेव जगच्चित्रकारस्यापि शिवस्य त्रैलोक्य - सम्पद्रूपचित्रलेखनार्थं कस्याश्चन भित्तेः आवश्यकता। परमत्र परशिवः स्वयमेव भित्तिरूपः सन् सर्वं जगदिदं चराचरात्मकं सम्यक् उत्कृष्टतया च चित्रयति इति भावः। तादृशाय भित्तिरूपाय शिवाय नमः।

सच्चिदानन्दरूपाय - इत्यत्र 'द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमानुसारं रूपशब्दस्य सर्वत्र सम्बन्धः। तथा च सद्रूपं यस्य स सद्रूपः, चिद्रूपं यस्य सः चिद्रूपः, आनन्दः रूपं यस्य सः आनन्दरूपः। तस्मै। अत्र अस्मि इति ज्ञानेन शिवस्य सद्रूपतानुसन्धानम्, प्रकाशे इति ज्ञानेन तस्य चिद्रूपतानुसन्धानम्, नन्दामि इति ज्ञानेन तस्यैव आनन्दरूपतानुसन्धानम् सम्भवति। अतः एतादृशाय सच्चिदानन्दरूपाय शिवाय नमः इत्यन्वयः।

ब्रह्मणे इत्यत्र ब्रह्मन् - शब्दः नकारान्तः नपुंसकलिङ्गः। अतः ब्रह्म ब्रह्मणी ब्रह्माणि—इत्यादिकं रूपम्। यद्ययं पुल्लिङ्गः तदा ब्रह्मा ब्रह्माणौ ब्रह्माणः - इत्यादिरूपम्। पुल्लिङ्गविधानेन सृष्टिकर्तुः चतुर्मुखब्रह्मणः ग्रहणम्। नपुंसकलिङ्गविधानेन त्रिमूर्त्यात्मकस्य परशिवब्रह्मणः ग्रहणम्। तथा च—

'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय शिवलिङ्गाय ते नमः।।'

इति लोकप्रसिद्धः श्लोक एव शिवस्य त्रिमूर्त्यात्मकत्वकथने प्रमाणम्। अतः तादृशे ब्रह्मणे नमः इत्यन्वयः। ब्रह्मणः स्वरूपं तावत् 'सूक्ष्मचिदचिद्रूप-शक्तिविशिष्टत्वम्' इति। शिवाय-शिवः मङ्गलकरः, स्वयं मङ्गलमयरूपवत्त्वात् भक्तानामपि सकलमङ्गलकरः, स्वयं मङ्गलमयरूपवत्त्वात् भक्तानामपि सकलमङ्गलप्रदातृत्वाच्च शिवः, तस्मै शिवाय नमः।

शिवशब्दः शीङ्-स्वप्ने इति धातोः निष्पन्नः। अतः शेते सर्वं चराचरं जगत् अस्मिन् इति शिवः। अथवा शिवं करोति। इति शिवः। अथवा श्यैङ् - गतौ इति धातोः श्यायते जगत् अस्मिन्-इति शिवः। अथवा शाम्यति संसारदुःखमिति शिवः-इत्यादिरूपेण शिव शब्दस्य

निष्पत्तिः। अथवा शुद्धत्वात् शिवः इत्यपि निष्पत्तिः। अत्र प्रमाणम् वायुसंहितायाम्—

'अनादिमलसंश्लेषप्रागभावात्स्वभावतः।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते।।'इति।

अत्र ब्रह्मणे इति पदस्य विशेष्यत्वस्वीकारेऽपि न कापि हानिः। अथापि ब्रह्मणे शिवाय इति पदयोः क्रमेण विशेषणत्वविशेष्यत्वसम्पादनेन शिवाय इति पदे अधिकस्य औचित्यस्य सम्पादनं स्यात्, परब्रह्मस्वरूपिणे शिवाय नमः इत्यन्वयात्।

अत्र चित्रकारवृत्तान्तः उपमानवाक्यम्, चित्रकारत्वारोपितशिवविषयकः अथवा आरोपित-चित्रकारत्वशिवविषयकः वृत्तान्तः उपमेयवाक्यम्। उभयोः वाक्ययोः औपम्यस्य गम्यत्वात् वाक्यार्थोपमायाः ध्वनित्वम्। शिवे चित्रकारत्वस्य समारोपणात् भित्तित्वसमारोपणाच्च उभयत्र रूपकध्वनिः। अत्र विशेषणत्रयस्यापि साभिप्रायत्वात् परिकरालङ्कारः। 'अलङ्कारः परिकरः साभिप्राये विशेषणे' इति लक्षणम्। अत्र अनुष्टुप् छन्दः। लक्षणं तु—

'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतच्छ्लोकस्य लक्षणम्।।'इति।

**ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते।**
**वेदान्तिनो जगन्मूलं तं नमामि परं शिवम्।।२।।**

पदविभागः— ब्रह्म, इति, व्यपदेशस्य, विषयम्, यम्, प्रचक्षते, वेदान्तिनः, जगन्मूलम्, तम्, नमामि, परम्, शिवम्।।

ब्रह्म+इति - ब्रह्मेति - गुणसन्धिः, जगतः मूलम् जगन्मूलम् - तत्पुरुषसमासः, जगत् + मूलम् - जगन्मूलम् - अनुनासिकसन्धिः।

**अन्वयः–** वेदान्तिनः, ब्रह्म, इति व्यपदेशस्य, यं, विषयं प्रचक्षते, जगन्मूलं, तं, परं शिवं, नमामि।

वेदान्तिनः वेदान्तः अस्ति येषु ते वेदान्तिनः सर्वोपनिषत्-सार-

सर्वस्वस्वरूपज्ञानवन्तः द्वैताद्वैतविशिष्टाद्वैतशक्तिविशिष्टाद्वैतरूपवेदान्तानां यथाशास्त्रं-ज्ञानस्य प्रतिपादकाः आचार्यपुरुषाः, ब्रह्म इति-परब्रह्मेति अभिधानयोग्यः परमेश्वरः इत्येवं रूपेण, व्यपदेशस्य - शिव इति यः व्यवहारः तस्य व्यवहारस्य, यम्- यं शिवाभिधानकं परमेश्वरमेव, विषयम् - विषयत्वेन सर्वथा अर्हमिति योग्यमिति वा, प्रचक्षते - कीर्तयन्ति प्रशंसन्ति वा, जगन्मूलम् - चराचरात्मकस्य स्थूलचिदचिद्रूपशक्तिविशिष्टस्य सर्वस्यापि जगतः अभिन्ननिमित्तोपादान-कारणरूपः मूलाधाररूपः यः परमशिवः तम्, परं शिवम् - सर्वात्मना सकलमङ्गलगुणगण-विशिष्टत्वात् मङ्गलकरं तं मङ्गलमूर्तित्वेन सुप्रसिद्धं शिवं नमामि नमस्करोमि।

प्रथमश्लोकस्य द्वितीयस्यास्य श्लोकस्य च समन्वयत्वेन संवादिरूपं किञ्चन मङ्गलपद्यं महाकविना बाणेन एवं कृतमस्ति—

'नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे।।' इति।

**प्रचक्षते** - प्र-इति उपसर्गपूर्वकात् चक्षिङ् - व्यक्तायां वाचि - इति धातोः लट्-लकारस्य रूपम्।

प्रचष्टे प्रचक्षाते प्रचक्षते इत्यादि।

**नमामि**-णमु-प्रह्वत्वे शब्दे च इति धातोः लटि रूपम्।

नमति नमतः नमन्ति,.....नमामि इत्यादि।

**यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्-तत्त्वसञ्चयः।**
**निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्।।३।।**

**पदविभागः**–यस्य, ऊर्मिबुद्बुदाभासः, षट्त्रिंशत् - तत्त्वसञ्चयः, निर्मलम्, शिवनामानम्, तम्, वन्दे, चिन्महोदधिम्।

यस्य+ऊर्मि - यस्योर्मि - गुणः, बुद्बुद+ आभासः - सवर्णदीर्घः, चित्+महोदधिम् - जश्त्वम्, अनुनासिकः, महा+उदधिम् - गुणः।

**अन्वयः–** यस्य षट्त्रिंशत्तत्त्वसञ्चयः ऊर्मिबुद्बुदाभासः निर्मलं शिवनामानं तं चिन्महोदधिं वन्दे।

यस्य चिन्महोदधेः - चित् एव महोदधिः चिन्महोदधिः तस्य चिन्महोदधेः - चिन्महासमुद्ररूपस्य चिज्ज्योतिःस्वरूपमहासमुद्ररूपस्य यस्य परमेश्वरस्य, सम्बन्धी यः, षट्त्रिंशत्तत्त्वसञ्चयः - षट्त्रिंशत्संख्याकानि शिवादिभूम्यन्तानि यानि प्रसिद्धानि तत्त्वानि, तेषां षट्त्रिंशत् - तत्त्वानां सञ्चयः - षट्त्रिंशत्तत्त्वसञ्चयः (तत्पुरुषसमासः), शिवतत्त्वमारभ्य भूमितत्त्वपर्यन्तानां षट्त्रिंशत्तत्त्वानां यः समूहः, सः, ऊर्मिबुद्बुदाभासः - **ऊर्मयश्च बुद्बुदाश्च** एतेषां समाहारः ऊर्मिबुद्बुदम् (समाहारद्वन्द्वः), तद्वत् ऊर्मिबुद्बुदवत्, आभासते इति आभासः - आसमन्तात् सम्यगेव भासमानः प्रकाशमानः सन् वर्तते, निर्मलम् - निर्गतं मलं यस्मात् सः निर्मलः, तम् (बहुव्रीहिः) - मलत्रयरहितत्वादेव सर्वात्मना परिशुद्धम् शिव-नामानम्- शिवः इति नाम यस्य सः तम् (बहुव्रीहिः) परशिवः इत्यभिधानकम्, तम् - सकलजगन्नियन्तृत्वेन सुप्रसिद्धम्, चिन्महोदधिम् - महान् च असौ उदधिश्च महोदधिः (कर्मधारयः), चिदेव महोदधिः तम् (कर्मधारयः) - चिदात्मकं महासमुद्रं, वन्दे-नमस्करोमि।

यथा महासमुद्रे ऊर्मयः बुद्बुदाश्च वर्तन्ते प्रकाशन्ते च, तद्वदेव चिदात्मकपरशिवब्रह्मरूपे महासमुद्रे शिवादिभूम्यन्तानि षट्त्रिंशत्तत्त्वानि प्रकाशन्ते - इति वाक्यार्थोपमाध्वनिः। षट्त्रिंशत्तत्त्वानां ऊर्मिबुद्बुदरूपेण आरोपणात्, शिवे च चिन्महोदधित्वरूपसमारोपाद् उभयत्र रूपकालङ्कारः। प्रसिद्धः समुद्रस्तावत् मत्स्य-मकरादिसङ्कुल-युक्तत्वात् समलः, किन्तु परशिवाभिधानकः चिदात्मकः महासमुद्रस्तावत् नितरां निर्मलः इति व्यतिरेकत्ववर्णनात् व्यतिरेकालङ्कारः। लक्षणं तु—

व्यतिरेको विशेषश्चेद् उपमानोपमेययोः।' इति।

**वन्दे** वदि-अभिवादनस्तुत्योः - इति धातोः लटि रूपम्।

वन्दते वन्देते वन्दन्ते - इत्यादि।

**यद्भासा भासते विश्वं यत्सुखेनानुमोदते।**
**नमस्तस्मै गुणातीतविभवाय परात्मने।।४।।**

यद्भासा, भासते, विश्वम्, यत्सुखेन, अनुमोदते, नमः, तस्मै,

गुणातीतविभवाय, परात्मने।

यत् + भासा यद्भासा जश्त्वम्, सुखेन + अनुमोदते - सवर्ण - दीर्घः, नमः + तस्मै - विसर्गसन्धिः, गुण + अतीत - सवर्णदीर्घः, पर+आत्मने - सवर्णदीर्घः।

यस्य भासा यद्भासा तत्पुरुषसमासः, यस्य सुखं यत्सुखम् - (तत्पुरुषः) तेन यत्सुखेन (तत्पुरुषः), गुणातीतविभवाय गुणेभ्यः अतीतः विभवः यस्य सः तस्मै - बहुव्रीहिः। परश्च असौ आत्मा च परात्मा, तस्मै परात्मने - कर्मधारयः।

यस्य षट्त्रिंशत्तत्त्वात्मकस्य - परमेश्वरस्य, भासा कान्त्या, विश्वम् - सकलमपि चराचरात्मकं जगत्, भासते प्रकाशते, यत्सुखेन यस्य परमेश्वरस्य सुखेन आनन्देन, अर्थात् यस्य भासा करणेन विश्वं भासते, यस्य च सुखेन करणेन, अनुमोदते अनुसृत्य मोदते आनन्दयद्वर्तते, गुणातीतविभवाय - सत्त्वं रजः तमः इत्यात्मकगुणेभ्यः अतीतः विभवः यस्य तस्मै-दूरीकृतगुणत्रयसंसर्गवते, अष्टमूर्त्यात्मकपञ्चविंशतिलीलात्मक-अणिमाद्यष्टसिद्धिप्रदायकत्वादिरूपविभवविशेषवते, परात्मने - जगति वर्तमानेभ्यः कोटिकोटिसंख्याकेभ्यः आत्मभ्यः सकाशात् श्रेष्ठतमात्मवते, हृदि तेषां वर्तमानत्वात् तेषां प्रेरकत्वाच्च श्रेष्ठतमाय, तस्मै-निगमागमस्मृतिपुराणोपनिषदितिहासकाव्यादिषु सर्वात्मना स्तूयमानत्वात् सुप्रसिद्धात्मने, शिवाय नमः।

**भासते**-भासृदीप्तौ, आत्मने लट् - भासते भासेते इत्यादि। अनुमोदते - अनु+मुद - हर्षे, आत्मनेपदम्, लट् - अनुमोदते इत्यादि। श्लोकस्यास्य संवादित्वेन महाकविना बाणेन कृतः मङ्गलश्लोकः एवम्-

'रजोजुषे जन्मनि सत्त्ववृत्तये
स्थितौ प्रजानां प्रलये तमःस्पृहे।
अजाय सर्गस्थितिनाशहेतवे
त्रयीमयाय त्रिगुणात्मने नमः।।'इति।

**सदाशिवमुखाशेषतत्त्वोन्मेषविधायिने ।**
**निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे।।५।।**

मुख+अशेष - मुखाशेष - सवर्णदीर्घः, तत्त्व + उन्मेष - तत्त्वोन्मेष - गुणः, उत् + मेष - उन्मेष - अनुनासिकः।

सदाशिवः - सदाशिवतत्त्वम् मुखम् आदिः येषां तानि सदाशिवमुखानि (बहुव्रीहिः), सदाशिवमुखानि च तानि अशेषाणि च सदाशिवमुखाशेषाणि सदाशिवमुखाशेषाणि (कर्मधारयः), सदाशिवमुखाशेषाणि च तानि तत्त्वानि च सदाशिवमुखाशेषतत्त्वानि (कर्मधारयः), तेषां सदाशिवमुखाशेषतत्त्वानाम् उन्मेषः सदाशिवमुखाशेषतत्त्वोन्मेषः (तत्पुरुषः), तम् उन्मेषं विधातुं शीलम् अस्य अस्ति इति सदाशिवमुखाशेषतत्त्वोन्मेषविधायी (ताच्छील्ये णिनिः) तस्मै सदाशिवमुखाशेष-तत्त्वोन्मेषविधायिने - शिवतत्त्वं जगदादेः निमित्तकारणम्, शक्तितत्त्वं तावदुपादानकारणम्, शक्तितत्त्वादेव सदाशिवतत्त्वादिचतुस्त्रिंशत्तत्त्वानि शक्तितत्त्वस्य परिणामरूपेण प्रादुर्भवन्ति। अतएव सदाशिवतत्त्वादारभ्य सर्वेषामपि तत्त्वानाम् उन्मेषः यः - यत्प्रकाशनं तस्य विधायिने तत्कर्त्रे, निष्कलङ्कस्वभावाय - निष्क्रान्तः दूरीकृतः कलङ्कः यस्मात् सः (बहुव्रीहिः) निष्कलङ्कः, निष्कलङ्कः स्वभावः यस्य सः तस्मै (बहुव्रीहिः) - निष्कलङ्कस्वभावाय - आणवादिमलत्रयरहितत्वात् एव सूक्ष्मचिदचिद्रूपशक्तिमत्त्वम्, एतादृशशक्तिमत्त्वमेव निष्कलङ्कत्वम्, एवञ्च निष्कलङ्कः स्वभावः यस्य सः तस्मै सर्वात्मना कलङ्करहितशुद्धस्वाभाविकगुणविज्ञप्ताय, शान्ताय शान्तस्वरूपाय, शम्भवे नमः। अस्पृष्टविषयसुखत्वात्, नादबिन्दुकलातीतत्वात्, नाशरहितत्वात्, अव्ययत्वात्, अहंब्रह्ममयत्वादेव च शिवे शान्तत्वं गुणः, शम्-सुखं भक्तानां भावयति इति शम्भुः, तस्मै शम्भवे नमः।

**स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।**
**स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे।।६।।**

स्व+इच्छा - स्वेच्छा - गुणः। स्वेच्छाविग्रहयुक्ताय - स्वेच्छया एव न तु इतरैः प्रचोदितः, स्वीकृतः विग्रहः येन सः स्वेच्छाविग्रहयुक्ताय - परैः अप्रचोदितः सन् स्वयमेव स्वेनैव स्वीकृतचन्द्रशेखरत्वविष-कण्ठत्वादिविशेषशरीरयुक्ताय, स्वेच्छावर्तनवर्तिने स्वेच्छया एव अथवा स्वेच्छायाः वर्तनं स्वेच्छावर्तनं, तस्मिन् स्वेच्छावर्तने वर्तितुं शीलम् अस्य

अस्तीति स्वेच्छावर्तनवर्ती तस्मै स्वेच्छावर्तनवर्तिने (तत्पुरुषः) - स्वच्छन्दतया सर्वत्र सञ्चरणशीलाय, स्वेच्छाकृत-त्रिलोकाय - स्वेच्छया कृतं त्रिलोकं येन सः स्वेच्छाकृतत्रिलोकः, तस्मै स्वेच्छाकृतत्रिलोकाय (बहुव्रीहिः) - स्वस्मिन् अविनाभूततया वर्तमानया इच्छाशक्त्या निर्मित-लोकत्रयाय, साम्बाय अम्बया सह वर्तते इति साम्बः तस्मै साम्बाय (तत्पुरुषः) - स्वस्मिन् अविनाभावरूपेण वर्तमानया अम्बया गिरिजया सहिताय शिवाय नमः।

**यत्र विश्राम्यतीशत्वं स्वाभाविकमनुत्तमम्।**
**नमस्तस्मै महेशाय महादेवाय शूलिने।।७।।**

अनुत्तमम् - न विद्यते उत्तमं यस्मात् तत् (बहुव्रीहिः), महान् चासौ ईशश्च महेशः तस्मै (कर्मधारयः), महान् चासौ देवश्च तस्मै, (कर्मधारयः) शूलमस्य अस्तीति शूली तस्मै।

यत्र यस्मिन् परशिवे, स्वाभाविकं सहजतयैव वर्तमानम्, अनुत्तमम् - अनितरसाधारण्यात् अत्यन्तं श्रेष्ठतमम्, ईशत्वम् - ईष्टे इति ईशः, तस्य भावः ईशत्वम् - अणिमाद्यष्टसिद्धिप्रदायकत्वात् शिवजीवैक्यमोक्ष-प्रदायकत्वात्, ब्रह्मविष्ण्वादि-देवतान्तरेषु अदृश्यमानत्वात्, तेषामपि अधीश्वरत्वात् यत् परमेश्वरत्वम्, यत्र यस्मिन् परशिवे, विश्राम्यति - तादात्म्यं भजते, केवलं शिवे एव अन्वेति नान्यत्र इति यावत्, तादृशाय महेशाय, महादेवाय, शूलिने शूलायुधधराय, तस्मै देवतासार्वभौमत्वेन प्रसिद्धाय तस्मै शिवाय नमः।

**विश्राम्यति** - वि+श्रमु - तपसि, खेदे च। लट्।

विश्राम्यति विश्राम्यतः विश्राम्यन्ति इत्यादि।

इतः परं पञ्चभिः श्लोकैः शक्तिं स्तौति–

**यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः।**
**तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम्।।८।।**

शास्त्रपारगाः - शास्त्रेषु पारं गच्छन्ति ये ते शास्त्रपारगाः (तत्पुरुषः) वेदागमोपनिषत्स्मृतिपुराणेतिहासादिशास्त्रेषु परिपूर्णज्ञानवन्तः शास्त्रवेत्तारः,

याम् - यां शिवाम्, सर्वलोकानाम् - सर्वे च ते लोकाश्च सर्वलोकाः (कर्म.धा.) तेषां सर्वलोकानां - स्थूलचिदचिदात्मकशक्तियुक्तानां चराचरात्मकानां सर्वेषामपि जगताम्, प्रकृतिम् - चतुस्त्रिंशत्-तत्त्वानामपि उपादानकारणीभूतत्वात् सर्वलोकमूलकारणीभूतज्ञानक्रिया-सामरस्यात्मिकां मूलप्रकृतिमिति, आहुः- कथयन्ति शम्भोः परमेश्वरस्य, धर्मचारिणीम् - धर्मेण चरितुं शीलमस्ति अस्याः इति धर्मचारिणी,ताम् (तत्पुरुषः) - धर्मस्वरूपाम्, अविनाभावरूपेण शिवे शरीरार्धरूपत्वेन वर्तमानत्वात् सहधर्मचारिणीम्, ताम् - शक्तितत्त्वमिति सुप्रसिद्धाम्, पराम् - श्रेष्ठतमाम्, शिवाम् - मङ्गलस्वरूपत्वात् सर्वासामपि स्त्रीणां सौमङ्गल्यवृद्धिप्रदात्रीम् उमाम्, प्रणमामि-नमस्करोमि।

**आहुः** - ब्रूञ् - व्यक्तायां वाचि, लट् - आह आहतुः इत्यादि।

**प्रणमामि** - प्र + नम् - प्रणमति इत्यादि लटि।

**यया महेश्वरः शम्भुर्नामरूपादिसंयुतः।**
**तस्यै मायास्वरूपायै नमः परमशक्तये।।९।।**

यथा– स्वस्मिन् समवायरूपेण वर्तमानया जगत्कारणीभूतया शक्त्या, तस्याः हेतोरेव महेश्वरः महान् चासौ ईश्वरश्च महेश्वरः (क.धा.), शम्भुः, नामरूपादिसंयुतः - नाम च रूपं च आदिनीयस्य तत् नामरूपादि (बहु.), तेन नामरूपादिना संयुतः - चन्द्रशेखरः, शूलपाणिः इत्यादिभिः नामभिः, विरूपाक्षः, भुजगभूषणः इत्यादिभिश्च रूपैः युक्तः समभवत्, मायास्वरूपायै - माया एव स्वरूपं यस्याः सा मायास्वरूपा (बहु.), तस्यै मायास्वरूपायै - प्रकृतेः स्फुरणगत्या जगदुपादानकारणीभूतसत्त्वरजस्तमो-गुणात्मिकायै मायाख्यमलप्रकृत्यै, तस्यै - परमेश्वरे अविनाभावरूपेण वर्तमानायै गिरिजा - पार्वती - प्रभृतिनामभिः प्रसिद्धायै, परमशक्तये श्रेष्ठशक्तिरूपायै, नमः।

परं ब्रह्म विमर्शशक्तेः क्षोभात्मिकायाः विना नामरूपादिरहितात्मकं सत्, अनन्तरम् अस्याः विमर्शशक्तेः सम्पर्कात् नामरूपादियुक्तं भवतीति भावः।

**शिवाद्यादिसमुत्पन्नशान्त्यतीतपरोत्तराम् ।**
**मातरं तां समस्तानां वन्दे शिवकरीं शिवाम्।।१०।।**

शिवात्, या, आदिसमुत्पन्नशान्त्यतीतपरोत्तराम् - इतिच्छेदः। शिवात् - परशिवब्रह्मणः सकाशात्, या-या शक्तिरूपिणी शिवा, आदिसमुत्पन्नशान्त्यतीतपरोत्तराम् - आदौ पूर्वम् समुत्पन्ना या निवृत्तिकला प्रतिष्ठाकला विद्याकला शान्तिकला शान्त्यतीतोत्तरकला - इत्यपरनामक-कुण्डलिनीशक्तिः तस्याः अपेक्षया परा चासौ उत्तरा च परोत्तरा ताम् षट्कलाः अपि अतीत्य वर्तमानत्वात् श्रेष्ठतमाम्, समस्तानां मातरं सदाशिवतत्त्वमारभ्य सर्वेषाम् अपि चतुस्त्रिंशत्तत्त्वानाम्, स्वस्याः एव परिणामरूपत्वात् उपादानकारणत्वेन वर्तमानत्वात् मातृस्वरूपिणीम्, शिवकरीम् शिवं करोति इति शिवकरी ताम् - सर्वमङ्गलगुणगणानाश्रित्य वर्तमानत्वादेव स्त्रीणामपि .सर्वमङ्गलसौभाग्यादिप्रदात्रीम्, शिवां परमेश्वरीं वन्दे नमस्करोमि।

**इच्छाज्ञानादिरूपेण या शम्भोर्विश्वभाविनी।**
**वन्दे तां परमानन्दप्रबोधलहरीं शिवाम्।।११।।**

या - शिवाभिधाना शक्तिः, शम्भोः परमेश्वरस्य, इच्छाज्ञानादि-रूपेण इच्छा च ज्ञानं च इच्छाज्ञाने, इच्छाज्ञाने आदिनी यस्य तत् (द्वन्द्व-बहु.) इच्छाज्ञानादि, इच्छाज्ञानादि एव रूपम् इच्छाज्ञानादिरूपं (तत्पु.), तेन इच्छाज्ञानादिरूपेण - इच्छाशक्तिः ज्ञानशक्तिः क्रियाशक्तिः इति शक्तित्रयरूपेण, विश्वभाविनी-विश्वं भावयितुं शीलमस्ति अस्याः इति विश्वभाविनी (तत्पुरुषः) - तत्त्वानाम् उत्पत्तौ उपादानकारणरूपिणी अतएव विश्वस्य समस्तस्यापि सृष्टिस्थित्यादिकार्येषु सहकारकारिणी सती वर्तते, परमानन्दप्रबोधलहरीम् - परमश्चासौ आनन्दश्च परमानन्दः (क.धा.), तस्य परमानन्दस्य प्रबोधः परमानन्दप्रबोधः (तत्पु.), तस्य लहरी परमानन्द-प्रबोधलहरी, ताम् परमानन्दप्रबोधलहरीम् (तत्पुरुषः) - परमानन्दस्य शिवानन्दात्मकस्य अनुपमस्य आनन्दस्य यः प्रबोधः जागृतिः तस्य प्रबोधस्य प्रकाशस्य लहरी इव लहरी प्रवाहरूपिणी या सा ताम्, निरन्तरशिवानन्दप्रकाशिकाम्, तां शिवां वन्दे।

**अमृतार्थं प्रपन्नानां या सुविद्याप्रदायिनी।**
**अहर्निशमहं वन्दे तामीशानमनोरमाम्।।१२।।**

सुविद्याप्रदायिनी सुष्ठु विद्या सुविद्या, तां सुविद्यां प्रदातुं प्रकर्षेण दातुं शीलमस्ति अस्यामिति (तत्पुरुषः) सुविद्याप्रदायिनी।

अमृतार्थम् - अमृतरूपः च असौ अर्थश्च अमृतार्थः तम् अमृतार्थम् (कर्मधा.) लिङ्गाङ्गसामरस्यरूपम् अमृतात्मकम् अर्थात् पुनर्जन्मरहितात्मकं मोक्षं प्राप्तुम्, प्रपन्नानाम् - भक्त्या शरणम् आगतानाम्, या - शिवे अविनाभावरूपेण वर्तमाना शक्तिः, सुविद्याप्रदायिनी - तत्त्वमसि, अहं ब्रह्मास्मि इत्यादिरूपवेदान्तादिमहावाक्यानां बोधनेन प्रकाशिता या शिवजीवैक्यबोधरूपा विद्या तस्याः विद्यायाः प्रदात्री या, तादृशीम् ईशानमनोरमाम् - ईशानस्य परमेश्वरस्य मनः रमयतीति मनोरमा प्राणप्रिया, ताम् ईशानमनोरमाम् परमेश्वरस्य प्राणप्रियाम्, ताम् - शिवस्य शक्तिस्वरूपिणीं पार्वतीम्, अहर्निशम् - अहश्च निशा च अहर्निशम् (अव्ययम्) अहोरात्रम्, अहम् वन्दे नमस्करोमि।

शिवयोगिशिवाचार्यस्य वंशवर्णनम्

**कश्चिदाचारसिद्धानामग्रणीः शिवयोगिनाम्।**
**शिवयोगीति विख्यातः शिवज्ञानमहोदधिः।।१३।।**

कः+चित् - कश्चित् - विसर्गसन्धिः, श्चुत्वम्, महा+उदधिः - महोदधिः - गुणः, कश्चित्+आचारः - कश्चिदाचारः - ज़श्त्वम्, शिवयोगी+इति शिवयोगीति सवर्णदीर्घः।

आचारसिद्धानाम् - आचारे सिद्धाः आचारसिद्धाः तेषाम् आचारसिद्धानाम् - समुदाचारसम्पन्नानाम्, शिवयोगिनाम् - शिवे योगः शिवयोगः एषु अस्तीति शिवयोगिनः, तेषाम्, शिवयोगसम्पन्नानां मध्ये, अग्रेनयति-अग्रणीः अग्रेसरत्वात् श्रेष्ठतमः, शिवज्ञानमहोदधिः - शिवस्य ज्ञानं शिवज्ञानम्, महान् च असौ उदधिश्च महोदधिः, शिवज्ञानस्य महोदधिः विद्या - महोदधिः। शिवज्ञानमहोदधिः - शिवसम्बन्धिनः शिवाद्वैतज्ञानस्य महासमुद्रः महासमुद्रे यथा प्रभूतं जलराशिः वर्तते, तथैव

शिवाद्वैतविद्याराशिः अस्मिन् आसीत् इति भावः। कश्चित् - अनिर्वचनीयशैवविद्यापरिणतः अतएव विख्यातः-प्रख्यातः, शिवयोगी इति-शिवयोगीति अभिधानकः आसीत्।

शिवज्ञानमहोदधिः - इत्यत्र उपमालङ्कारः।

**आसीत्** - अस-भुवि, लङ् - आसीत् आस्ताम् आसन् इत्यादि।

**शिवभक्तिसुधासिन्धु - जृम्भणामलचन्द्रिका।**
**भारती यस्य विदधे प्रायः कुवलयोत्सवम्।।१४।।**

शिवभक्तिसुधासिन्धुजृम्भणामलचन्द्रिका शिवस्य भक्तिः शिवभक्तिः, शिवभक्तिः एव सुधायाः सिन्धुः शिवभक्तिसुधासिन्धुः तस्य शिवभक्तिसुधासिन्धोः जृम्भणं शिवभक्तिसुधासिन्धुजृम्भणं, तस्मिन् शिवभक्ति - सुधासिन्धु - जृम्भणे विषये, अमला चासौ चन्द्रिका च अमलचन्द्रिका, शिवभक्तिसुधासिन्धुजृम्भणे विषये अमलचन्द्रिका इव चन्द्रिका या सा शिवभक्तिसुधासिन्धुजृम्भणामलचन्द्रिका - शिवभक्तिरूपक्षीरसागरस्य यद्वर्धनं तस्य वर्धनस्य पूर्णचन्द्रसम्बन्धिनी अतएव परिशुद्धा चन्द्रिका इव वर्तमाना, शिवाद्वैतविद्याप्रसारः (यस्याः सा) या सा, यस्य शिवयोगिनः सम्बन्धिनी या, भारती-शिवाद्वैतात्मिका दिव्या वाक्, प्रायःआधिक्येन, कुवलयोत्सवम्-कोःवलयः कुवलयः 'गोत्रा कुः पृथिवी पृथ्वी' - इत्यमरः, कुवलयः एव कुवलयम् नीलकमलम् तस्य उत्सवः, तम् कुवलयोत्सवम्, भूमण्डलस्य विद्वत्समूहस्य, कुवलयसमूहस्य च आनन्दम्, विदधे-अकरोत् - तादृशः कश्चित् शिवयोगी आसीत्।

पूर्णचन्द्रस्य उदयेन सुधासागरः विजृम्भते, अपि च नीलकमलं विकासमेति-इति कविसमयप्रसिद्धिः। तथैव, शिवयोगिनः शिवभक्तिः परिशुद्ध-चन्द्रिका इव परिशुद्धा सती लोके शिवभक्तिं विजृम्भयामास, अपि च तस्य शिवयोगिनः शिवाद्वैतप्रसारादिरूपा दिव्या वाणी तावत्, चन्द्रिका यथा कुवलयपुष्पवृन्दस्य विकासे कारणं भवति अथवा कुवलय-समूहं विकासयति, तथैव भूमण्डलस्य विद्वत्समूहहृदयं विकासयति इति उपमाध्वनिः।

शिवभक्तिः एव सुधासिन्धुः, जृम्भणमेव जृम्भणम्, इत्यत्र रूपकम्, चन्द्रिका इव चन्द्रिका-इति उपमा, कुवलयः एव कुवलयम् - इति रूपकम्। उत्सवः उत्सवः इव इति उपमा। कुवलयशब्दे श्लेषः। इत्येवं श्लेषः, उपमा, रूपकम्-एषां सङ्करः अत्र अलङ्कारः।

**विदधे** - वि+धाञ् - धारणपोषणयोः, लिट्-

विदधे विदधाते विदधिरे इत्यादि।

**तस्य वंशो समुत्पन्नो मुक्तामणिरिवामलः।**
**मुद्ददेवाभिधाचार्यो मूर्धन्यः शिवयोगिनाम्।।१५।।**

वंशे-उत्तमवेणोः ग्रन्थौ अमलः परिशुद्धः, मुक्तामणिः इव श्रेष्ठस्य वेणोः ग्रन्थिभागे यथा मुक्तामणिः सम्भवति, तथा, तस्य वंशे-पूर्ववर्णितस्य शिवयोगिनः अन्वये 'वंशोऽन्ववायः' इत्यमरः, अमलः - न विद्यते मलादिः यस्य सः अमलः - निर्मलचरित्रः निर्मलाचारादियुक्तः, शिवयोगिनां मूर्धन्यः - शिवयोगिषु मध्ये श्रेष्ठतमः शिखामणिवत् वर्तमानः, मुद्ददेवाभिधाचार्यः - मुदं ददाति इति मुद्दः मुदश्चासौ देवश्च मुद्ददेवः, मुद्ददेवः इति अभिधा यस्य सः मुद्ददेवाभिधः, मुद्ददेवाभिधश्च असौ आचार्यश्च मुद्ददेवाभिधाचार्यः मुद्ददेवः इत्यभिधानवान् शिवाचार्यः समुत्पन्नः जातः। मुद्ददेवः - मुद् - धातोः प्रीतिः इत्यर्थः। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः, मुद्ददेवस्यास्य जननात् अस्य मातापित्रोः महानेव प्रमोदो जातः इति अस्य नाम्नः औचित्यम्। यथा वंशे अमलः मुक्तामणिः समुत्पद्यते तथैव अस्य शिवयोगिनः अमले वंशे शिवयोगिश्रेष्ठः मुद्ददेवशिवाचार्यः जन्म लब्धवान् इत्युपमाध्वनिः। अयं च वंशे इत्यत्रस्थेन श्लेषेण अनुप्राणितः।

**मुद्दानात्सर्वजन्तूनां प्रणतानां प्रबोधतः।**
**मुद्ददेव इति ख्याता समाख्या यस्य विश्रुता।।१६।।**

यस्य मुद्ददेवशिवाचार्यस्य मुद्ददेवः इति यदभिधानं तत् तावत्, सर्वजन्तूनां सर्वे च ते जन्तवश्च सर्वजन्तवः, तेषां सर्वजन्तूनाम् सर्वेषाम् अपि जनानाम्, मुद्दानात् मुदः दानं मुद्दानम्, तस्मात् मुद्दानात्

आनन्ददायकत्वात्, प्रणतानां शरणमागतानां सर्वजन्तूनां सर्वेषां जनानाम्, प्रबोधतः - शिवज्ञानप्रबोधात् शिवज्ञानस्य सदुपदेशात् च, समाख्या समीचीना आख्या समाख्या श्रेष्ठाभिधानम्, ख्याता सती प्रसिद्धा सती, मुद्ददेवः इति विश्रुता मुद्ददेवः इति नाम्ना लोके विख्याता, तादृशः मुद्ददेवः समुत्पन्नः।

**तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।**
**शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः।।**

तस्य पूर्वोक्तरीत्या वर्णितस्य मुद्ददेवाचार्यस्य, शान्तः रागद्वेषादि-दुर्गुणरहितत्वात् शिवगुणसम्पन्नत्वाच्च प्रशान्तचित्तः, शुचिः- शिवाचारादिसम्पन्नत्वात् परमपवित्रः, शिवसिद्धान्तनिर्णेता शिवस्य सिद्धान्तः शिवसिद्धान्तः तस्य शिवसिद्धान्तस्य निर्णेता शिवसिद्धान्तनिर्णेता, निगमागमोपनिषदादिषु प्रतिपादितत्वात् प्रसिद्धस्य शिवसिद्धान्तस्य निर्णायकः, शिवाचार्यः शिवसमयस्थापनात् अन्वर्थनामकः शिवाचार्यः, शिवात्मकः शिवः आत्मा यस्य सः शिवात्मकः शिवस्वरूपवान्, सिद्धनाथाभिधः - सिद्धनाथः इति अभिधा यस्य सः सिद्धनाथाभिधः नन्दनः पुत्रः आसीत् अभवत्।

**आसीत्** - अस-भुवि, लङ् - आसीत् आस्ताम् आसन् इत्यादि।

**वीरशैवशिखारत्नं विशिष्टाचारसम्पदम्।**
**शिवज्ञानमहासिन्धुं यं प्रशंसन्ति देशिकाः।।१८।।**

यं - सिद्धनाथशिवाचार्यं, देशिकाः शिवाचारसम्पन्नाः आचार्याः, वीरशैवशिखारत्नं - शिखायाः रत्नं शिखारत्नम्, वीराश्च ते शैवाश्च वीरशैवाः, वीरशैवानां शिखारत्नं वीरशैवशिखारत्नं वीरशैवेषु अत्यन्तं श्रेष्ठतमम्, विशिष्टाचारसम्पदं विशिष्टश्च असौ आचारश्च विशिष्टाचारः, विशिष्टाचारः एव सम्पत् यस्य सः विशिष्टाचारसम्पत् तम् विशिष्टाचार-सम्पदम् - वैशिष्ट्यपूर्णशिवाचारवैभवोपेतम्, शिवज्ञानमहोदधिं शिवस्य ज्ञानं शिवज्ञानं, शिवज्ञानमेव महोदधिः शिवज्ञानमहोदधिः यः तम् शिवज्ञानमहोदधिं-वैशाल्येन अगाधतया च महासमुद्रवत् वैशाल्यपूर्णस्य

अगाधतायुक्तस्य शिवज्ञानस्य आगरम् इति प्रशंसन्ति प्रशंसां कुर्वन्ति, तादृशः सिद्धनाथाचार्यः आसीत्।

विशेषणत्रयेऽपि यथाक्रमं शिखारत्नत्वस्य सम्पदः महासिन्धोश्च समारोपात् रूपकालङ्कारः।

**यस्याचार्यकुलाज्जाता सतामाचारमातृका।**
**शिवभक्तिः स्थिरा यस्मिन् जज्ञे विगतविप्लवा।।१९।।**

यस्य सिद्धनाथाचार्यस्य, आचार्यकुलात् आचार्यस्य कुलम् आचार्यकुलम्, तस्मात् आचारमातृका - आचारस्य मातृका आचारमातृका सदाचार-शिवाचारादिरूपाणामाचाराणां मूलम्, जाता-उत्पन्ना, अपि च यस्मिन् - सिद्धनाथशिवाचार्ये, शिवभक्तिः शिवस्य भक्तिः शिवभक्तिः, विगतविप्लवा सती विगतः विप्लवः यस्याः सा विगतविप्लवा-सकलेभ्यः दोषेभ्यः निर्मुक्तत्वात् दोषरहिता नितरां परिशुद्धा सती, अतएव स्थिरा-शाश्वतरूपेण वर्तमाना सती, जज्ञे अभवत्, तादृशः सः सिद्धनाथाचार्यः अभवत्।

**जज्ञे**-जनी-प्रादुर्भावे, लिट्, जज्ञे जज्ञाते जज्ञिरे इत्यादि।

**तस्य वीरशिवाचार्य-शिखारत्नस्य नन्दनः।**
**अभवच्छिवयोगीति सिन्धोरिव सुधाकरः।।२०।।**

वीरशिवाचार्य - शिखारत्नस्य-वीराश्च ते शिवाचार्याश्च वीर-शिवाचार्याः तेषां तेषु वा शिखारत्नं यः तस्य वीरशिवाचार्यशिखारत्नस्य, सिद्धनाथशिवाचार्यस्य, सिन्धोः क्षीरसमुद्रात् सुधाकरः इव सुधायाः आकरः चन्द्रः इव, शिवयोगी इति शिवयोगीति अभिधानवान् शिवयोगिशिवाचार्यः इति अभिधानकः, नन्दनः नन्दयति इति नन्दनः सत्पुत्रः अभवत्। अभवत् + शिवयोगी - तकारस्य चुत्वम् (च्) शकारस्य धत्वम् (छ)। अत्र उपमालङ्कारः। **अभवत्**-भू-सत्तायाम्, लङ्,

अभवत् अभवताम् अभवन् इत्यादि।

**"इतः परं चतुर्भिः श्लोकैः स्वस्यैव सङ्कीर्तनम्"**

**चिदानन्दपराकाश - शिवानुभव - योगतः।**
**शिवयोगीति नामोक्तिर्यस्य याथार्थ्ययोगिनी।।२१।।**

यस्य - शिवयोगिशिवाचार्यस्य, शिवयोगी इति नामोक्तिः एवं रूपमभिधानं तावत्, चिदानन्दपराकाश - शिवानुभवयोगतःचिदानन्दश्च असौ पराकाशश्च चिदानन्दपराकाशः, स चासौ शिवश्च चिदानन्दपराकाशशिवः, तस्य अनुभवः चिदानन्दपराकाशशिवानुभवः - तस्य शिवानुभवस्य योगः तस्मात् चिदानन्दपराकाशशिवानुभव - योगतः (पञ्चम्याःतसिल्) - सच्चिदानन्दरूपः यः पराकाशः एतद्रूपः यः शिवः अस्य शिवस्य सम्बन्धिनः अनुभवस्य अर्थात् शिवानुभवस्य योगात् नित्यानुष्ठित-शिवानुभववैभवात्, याथार्थ्ययोगिनी-यथार्थस्य भावः याथार्थ्यम्, याथार्थ्यं यथा स्यात् तथा योगः अस्याःअस्ति इति याथार्थ्ययोगिनी अन्वर्थाभिधानयुक्तवती वर्तते, तादृशः सः शिवयोगी-इति उत्तरत्र अन्वयः।

**शिवागमपरिज्ञानपरिपाकसुगन्धिना ।**
**यदीयकीर्तिपुष्पेण वासितं हरितां मुखम्।।२२।।**

शिवागमपरिज्ञानपरिपाकसुगन्धिना-शिवागमानां कामिकादिवातुलान्तानाम् अष्टाविंशत्यागमानाम् अर्थापत्त्या श्रुतीनामुपनिषदादीनां च अध्ययनादिना प्राप्तं यत् तेषां परिज्ञानं परिपूर्णं ज्ञानं तस्य परिज्ञानस्य यः परिपाकः या परिपक्वता तेन परिपाकेन कारणेन, सुगन्धः अस्मिन् अस्ति इति सुगन्धि परिपाकेन सुगन्धि परिपाकसुगन्धि यत् तेन शिवागमपरिज्ञान-परिपाकसुगन्धिना,निगमागमादीनामध्ययनेन परिशीलनेन प्रवचनादिना च प्राप्तं यत् परिपूर्णं ज्ञानं तस्य ज्ञानस्य पुष्पवत् परिपाकात् सुगन्धभरितेन, यदीयकीर्तिपुष्पेण-यस्य इयं यदीया यदीया च असौ कीर्तिश्च यदीयकीर्तिः सा एव पुष्पं तेन यदीयकीर्तिपुष्पेण-अस्यैव शिवयोगिनः शिवाचार्यस्य कीर्तिकुसुमेन, हरितां मुखं दशदिशां प्रारम्भः दशदिशः इति यावत्, वासितं सुवासनायुक्तं सत् अभवत्, तादृशः सः शिवयोगिशिवाचार्यः—

पुष्पेषु परिपक्वेषु सत्स्वेव पुष्पेभ्यः सुगन्धः सर्वत्र दिक्षु प्रसरति। सर्वमपि

प्रकृतिजातं सुवासितं च भवति। तथैव अस्य शिवयोगिशिवाचार्यस्य निगमागमोपनिषत्स्मृतिशास्त्रपुराणेतिहासकाव्यादि-सकलशास्त्रपरिज्ञानं तावत् परिपक्वत्वं प्राप्तं सद् बोधनद्वारा प्रवचनद्वारा अस्य सत्कीर्तेः प्रसरणस्य सर्वत्र दिक्षु प्रधानमेव कारणमासीत्। सुगन्धप्रसार उपमानम्, कीर्तिः उपमेयम् - इत्युभयोः सादृश्यवर्णनात् उपमाध्वनिः। ज्ञाने सुगन्धस्य, कीर्तौ पुष्पस्य च समारोपात् रूपकध्वनिः। उभयोः सङ्करः।

**येन रक्षावती जाता शिवभक्तिः सनातनी।**
**बौद्धादिप्रतिसिद्धान्त-महाध्वान्तांशुमालिना।।२३।।**

बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना-बुद्धस्य अयं बौद्धः, बौद्धः आदिः यस्य सः बौद्धादिः बौद्धादिश्च असौ प्रतिसिद्धान्तः बौद्धादिप्रतिसिद्धान्तः, बौद्धादिप्रतिसिद्धान्तः, एव महत् च तत् ध्वान्तं च बौद्धादिप्रतिसिद्धान्तमहाध्वान्तं, तस्य महाध्वान्तस्य अंशुमाली यः सः तेन बौद्धादिप्रतिसिद्धान्तमहाध्वान्तांशुमालिना-आदिपदेन जैनचार्वाक-सिद्धान्तावपि ग्राह्यौ। एतैः जैनबौद्धचार्वाकरूपनास्तिकदर्शनैः वेदप्रामाण्यस्य अनङ्गीकारात् ते प्रतिसिद्धान्ताः इत्युक्ताः। अतः बौद्धजैनचार्वाकरूप-प्रतिसिद्धान्ताः एव महत् च तत् ध्वान्तं च बौद्धादिप्रतिसिद्धान्तध्वान्तम्, महान् अन्धकारः, तस्य महाध्वान्तस्य अंशुमाली सूर्य इव वर्तमानः, तेन अंशुमालिना सूर्येण इव वर्तमानेन-यथा सूर्यः महाध्वान्तस्य निवारणे समर्थः, तथैव बौद्धादि-प्रतिसिद्धान्तानां स्वकीय-ज्ञानप्रभया दूरीकरणं कृतवता, शिवसमय-प्रतिष्ठापन-द्वारा दूरीकरणसमर्थेन येन अनेन शिवयोगिशिवाचार्येण, सनातनी प्राचीना शिवभक्तिः रक्षावती सुष्ठु रक्षा भवति अस्याः इति रक्षावती सुष्ठु रक्षणं प्राप्तवती सती जाता अभवत्, सः शिवयोगी—प्रतिसिद्धान्तेषु महाध्वान्तत्वसमारोपः, शिवयोगिशिवाचार्ये अंशुमालित्वसमारोपः, अतः रूपकालङ्कारध्वनिः, यथा अंशुमाली ध्वान्तं दूरीकरोति तथैव अयं शिवाचार्योऽपि प्रतिसिद्धान्तं दूरीकरोति-इति उपमाध्वनित्वम्।

**स महावीरशैवानां धर्ममार्गप्रवर्तकः।**
**शिवतत्त्वपरिज्ञानचन्द्रिकावृतचन्द्रमाः ।।२४।।**

सः एवंरूपेण वर्णितः शिवयोगिशिवाचार्यः तावत्, महावीरशैवानां महान्तः च ते वीरशैवाश्च महावीरशैवाः तेषां महावीरशैवानां पूज्यतम-शिवाचारसम्पन्नानां वीरशैवधर्मीयाणाम्, धर्ममार्गप्रवर्तकः - धर्मस्य मार्गः धर्ममार्गः तस्य धर्ममार्गस्य प्रवर्तकः धर्ममार्गप्रवर्तकः-पञ्चाचाराष्टावरणषट्-स्थलाचरणात्मकस्य धर्ममार्गस्य बोधनादि-द्वारा प्रवर्तकः प्रवर्धकः, अपि च, शिवतत्त्वपरिज्ञानचन्द्रिकावृतचन्द्रमाः-शिवस्य तत्त्वं-शिवतत्त्वम्, तस्यं परिज्ञानम्। तदेव चन्द्रिका शिवतत्त्वपरिज्ञानचन्द्रिका- तया आवृतः चन्द्रमाः इव चन्द्रमाः शिवतत्त्वपरिज्ञानचन्द्रिकावृतचन्द्रमाः - शिवतत्त्वपरिज्ञानरूपया चन्द्रिकया आवृतः चन्द्रः इव वर्तमानः सन् सः-

परिज्ञानंचन्द्रिका-अत्र रूपकम्, चन्द्रमाः इव चन्द्रमाः - अत्र उपमाध्वनिः, उभयोः सङ्करः।

(एतादृशगुणगणविशिष्टः शिवयोगिशिवाचार्यः तावत्)

**आलोक्य सर्वतन्त्राणि कामिकाद्यानि सादरम्।**
**वातुलान्तानि शैवानि पुराणान्यखिलानि तु।।२५।।**

सादरम् आदरेण सह वर्तते इति सादरम् प्रीतिपूर्वकम् विश्वासपूर्वकं, कामिकाद्यानि कामिकागमः आद्यः आदिः येषां तानि कामिकाद्यानि, वातुलान्तानि वातुलागमः अन्तः येषां तानि वातुलान्तानि कामिकादिवातुलान्तानि, शैवानि शिवादागतानि, सर्वतन्त्राणि-सर्वाणि च तानि तन्त्राणि सर्वतन्त्राणि सर्वाणि अष्टाविंशतिसंख्याकानि शिवतन्त्राणि शिवागमान्, अपि च अखिलानि पुराणानि व्यासप्रणीतानि अष्टादशपुराणानि च, आलोक्य तु सम्यक् परिशील्य, उपलक्षणया श्रुतीः-उपनिषदश्च आलोक्य (वीरशैवमहातन्त्रमेकोत्तरशतस्थलमभ्यधात्-इत्युत्तरत्र अन्वयः)।

**वेदमार्गाविरोधेन विशिष्टाचारसिद्धये।**
**असन्मार्गनिरासाय प्रमोदाय विवेकिनाम्।।२६।।**

वेदमार्गाविरोधेन वेदस्य मार्गः वेदमार्गः, तस्य वेदमार्गस्य विरोधः न भवति इति अविरोधः वेदमार्गस्य अविरोधः वेदमार्गाविरोधः तेन वेदमार्गाविरोधेन वेदोक्तसमुदाचारमार्गस्य विरोधः यथा न स्यात् तथा,

वेदमार्गानुसारेणैव, विशिष्टाचारसिद्धये विशिष्टश्चासौ आचारश्च विशिष्टाचारः तस्य सिद्धिः विशिष्टाचारसिद्धिः तस्यै विशिष्टाचारसिद्धये-पञ्चाचाराद्यनुष्ठानरूपस्य अनितरसाधारणस्य समुदाचारस्य सिद्ध्यर्थम्, असन्मार्गनिरासाय सन्मार्गः न भवतीति असन्मार्गः तस्य असन्मार्गस्य निरासः असन्मार्गनिरासः तस्मै असन्मार्गनिरासाय जैनबौद्ध-चार्वाकरूपस्य वेदविरोधिमार्गस्य सयुक्तिकं सदृष्टान्तं दूरीकरणार्थम्, विवेकिनां विवेकः अस्ति येषां तेषां विवेकिनां परिशुद्धशिवज्ञानसम्पन्नानां प्रमोदाय अध्ययनाध्यापनादि-द्वारा एतद् ग्रन्थस्य सारसङ्ग्रहप्राप्त्या आनन्दप्राप्त्यर्थम् - अभ्यधात्।

**सर्वस्वं वीरशैवानां सकलार्थप्रकाशनम्।**
**अस्पृष्टमखिलैर्दोषैरादृतं शुद्धमानसैः।।२७।।**

वीरशैवानां सर्वस्वं सर्वस्वरूपम्, सकलार्थप्रकाशनं सकलानामपि अर्थानां-सकलाश्च ते अर्थाः च सकलार्थाः तेषां सकलार्थानां प्रकाशनं प्रकाशकम् - भुक्तिमुक्त्यादिरूपप्रयोजनानां निधिरूपं सकलानां प्रयोजनानां च प्रकाशकम्, अखिलैः समस्तैः दोषैः आणवादिसमस्तदोषैः अस्पृष्टं न स्पृष्टमस्पृष्टं संस्पर्शरहितम्, शुद्धमानसैः निगमागमादीनामभ्यासेन शुद्धं मानसं येषां तैः परिशुद्धमनस्कैः सर्वदा आदृतं ससन्तोषम् अङ्गीकृतम् एकोत्तरस्थलमभ्यधात्।

**तेष्वागमेषु सर्वेषु पुराणेष्वखिलेषु च।**
**पुरा देवेन कथितं देव्यै तन्नन्दनाय च।।२८।।**

तेषु सर्वेषु आगमेषु-कामिकादिवातुलान्तेषु प्रसिद्धेषु सर्वेषु तेषु आगमेषु, तथैव अखिलेषु च पुराणेषु व्यासप्रणीतेषु सर्वेषु अष्टादशपुराणेषु च, पुरा पूर्वं देवेन परमेश्वरेण देव्यै गिरिजायै, तन्नन्दनाय च तस्य नन्दनः तन्नन्दनः तस्मै तन्नन्दनाय तस्य शिवस्य पुत्राय षण्मुखाय च यत् कथितम् एकोत्तरशतस्थलात्मकं तदभ्यधात्।

आसमन्तात् गच्छन्ति इति आगमाः, गम् - धातोः 'सर्वे गत्यर्थकाः ज्ञानार्थकाः' इति वचनानुसारम् आगमाः अपि 'ज्ञानराशिः'। वेदाः शिवस्य निःश्वसितम्, परम् आगमाः तन्मुखादेव निःसृताः। तन्त्रम् इति

आगमपदस्य पर्यायः। 'तनुते विस्तार्यते ज्ञानमनेन, अथवा, त्रायते ज्ञानम् - इति तन्त्रम्'

**तत्सम्प्रदायसिद्धेन रेणुकेन महात्मना।**
**गणेश्वरेण कथितमगस्त्याय पुनः क्षितौ।।२९।।**

तत्सम्प्रदायसिद्धेन तस्य सम्प्रदायः तत्सम्प्रदायः तस्मिन् सिद्धः तत्सम्प्रदायसिद्धः तेन तत्सम्प्रदायसिद्धेन-तादृशशैवागमसम्प्रदाये परिपूर्णज्ञानिना महात्मना रेणुकेन गणेश्वरेण श्रीरेणुकगणेश्वरेण पुनः क्षितौ भूमण्डले अगस्त्याय अगस्त्यमहर्षये कथितं प्रोक्तं यत् एकोत्तरशतस्थलं तदभ्यधात्।

**वीरशैव - महातन्त्रमेकोत्तरशतस्थलम्।**
**अनुग्रहाय लोकानामभ्यधात् सुधियांवरः।।३०।।**

वीरशैवमहातन्त्रं वीरशैवमहाशास्त्रम् इत्यभिधानकम् एकोत्तरशतस्थलम् एकम् उत्तरं यस्मात् शतात् तत् एकोत्तरशतम् एकोत्तरशतं च तत् स्थलं च एकोत्तरशतस्थलम्, तत्, सुधियांवरः परमश्रेष्ठशिवज्ञानवान् शिवयोगिशिवाचार्यः, लोकानाम् अनुग्रहाय जनानाम् उद्धारणाय जनान् उद्धर्तुम् अभ्यधात् प्रोक्तवान् विरचितवान्।

**अभ्यधात्** - अभि+डु-धाञ् - धारणपोषणयोः, लुङ्लकारः— अभ्यधात् अभ्यधाताम् अभ्यधुः इत्यादि।

**सर्वेषां शैवतन्त्राणामुत्तरत्वान्निरुत्तरम्।**
**नाम्ना प्रतीयते लोके तत्सिद्धान्तशिखामणिः।।३१।।**

यत् वीरशैवतन्त्रं तावत्, सर्वेषां शैवतन्त्राणां सर्वेषामपि शैवतन्त्राणाम् उत्तरत्वात् श्रेष्ठत्वात्, निरुत्तरं निर्गतम् उत्तरं यस्मात् तत् निरुत्तरम् - एतस्मात् शैवतन्त्रात् श्रेष्ठतमं तन्त्रान्तरं नैव विद्यते यस्मात् कारणात् तस्मादेव कारणात् तत् वीरशैवतन्त्रम् लोके तावत् सिद्धान्तशिखामणिः इति नाम्ना प्रतीयते सर्वत्र प्रतिभाति प्रख्यातो वर्तते।

**प्रतीयते** - प्रति+ईङ् - गतौ, कर्मणि लट्-प्रतीयते प्रतीयेते- इत्यादि।

**अनुगतसकलार्थे शैवतन्त्रैः समस्तैः**
**प्रकटितशिवबोधाद्वैतभावप्रसादे ।**
**विदधतु मतिमस्मिन् वीरशैवा विशिष्टाः**
**पशुपतिमतसारे पण्डितश्लाघनीये।।३२।।**

अस्मिन् सिद्धान्तशिखामणिविषये वीरशैवाः मतिं विदधतु। इत्यस्य ग्रन्थस्य औचित्यं वैशिष्ट्यं च एवं वर्णयति—

समस्तैरपि शैवतन्त्रैः सर्वैरपि वीरशैवदर्शनप्रतिपादकैः शैवागमैः कारणभूतैः, अनुगतसकलार्थे सकलश्चासौ अर्थश्च सकलार्थः अनुगतः सकलार्थः यस्मिन् तस्मिन् अनुगतसकलार्थे समस्तरहस्यार्थवति, प्रकटित-शिवबोधाद्वैतभावप्रसादे-प्रकटितः शिवबोधः यस्मात् सः प्रकटित-शिवबोधः तस्मात् शिवबोधात् उत्पन्नश्च असौ अद्वैतस्य भावः प्रकटित-शिवबोधाद्वैतभावः, सः एव प्रसादः यस्मात् तस्मिन् प्रकटितशिवबोधा-द्वैतभावप्रसादे-प्रकाशितशिवज्ञानादेव समुत्पन्नः शिवजीवयोः तादात्म्यरूपा-द्वैतभावः, तेन अद्वैतभावेन सम्प्राप्तमनःप्रसादात्मके शिवप्रसादात्मके च अस्मिन् ग्रन्थ-विषये, अपि च, पशुपतिमतसारे पशुपतेः मतम् पशुपतिमतम् तस्य सारः पशुपतिमतसारः यः तस्मिन् पशुपतिमतसारे पशुपतिमतस्य शिवाद्वैतस्य परशिवाज्ञानस्य मूलागारत्वात् शिवज्ञानराशियुक्ते, अपि च पण्डितश्लाघनीये श्लाघितुं योग्यः श्लाघनीयः पण्डितैः श्लाघनीयः यः तस्मिन् निगमागमादिपरिपूर्णपरिज्ञानवद्भिः विद्वज्जनैः प्रशंसनीये अस्मिन् सिद्धान्तशिखामणिग्रन्थविषये, विशिष्टाः वीरशैवाः विशेषेण वीरशैवा-चारानुयायिनः वीरशैवाचारानुसारिणश्च वीरशैवाः मतिम्-अध्ययनाध्यापन-पारायणादिविषये बुद्धिं विदधतु कुर्वन्तु। सर्वदैव अध्ययनशीलैः अध्यापनशीलैः प्रवचनपारायणादिशीलैश्च भाव्यम्।

**विदधतु** - वि+डु-धाञ्- धारणे, लोट् - विदधातु-विधत्तात् विधत्ताम् विदधतु-इत्यादि

मालिनीवृत्तम् - 'ननमयययुतेयं मालिनी भोगिलोकैः' - इति लक्षणम्।

*।।इति सिद्धान्तशिखामणौ प्रथमः परिच्छेदः।।*

# ।।द्वितीयः परिच्छेदः।।

## ।।शिवस्य नमनरूपः मङ्गलश्लोकः।।

**सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे।**
**नमः शिवाय साम्बाय सगणाय स्वयम्भुवे।।१।।**

सत् च चित् च आनन्दश्च सच्चिदानन्दाः सच्चिदानन्दाः एव रूपं यस्य सः तस्मै सच्चिदानन्दरूपाय सच्चिदानन्दस्वरूपाय, सदसद्व्यक्तिहेतवे सत् च असत् च सदसती तयोः व्यक्तिः सदसद्व्यक्तिः तस्याः सदसद्व्यक्तेः हेतुः यः तस्मै सदसद्व्यक्तिहेतवे-भावाभावमण्डलरूपप्रपञ्चस्य आविर्भावकारणाय, साम्बाय अम्बया सहितः साम्बः तस्मै साम्बाय पार्वतीपतये, सगणाय गणैः सहितः सगणः तस्मै सगणाय, स्वयम्भुवे स्वयं भूः यः सः तस्मै स्वयम्भुवे अयोनिजाय शिवाय नमः।

## ।।पार्वत्याः नमनरूपः मङ्गलश्लोकः।।

**सदाशिवमुखाशेषतत्त्वमौक्तिक - शुक्तिकाम्।**
**वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्।।२।।**

सदाशिवमुखाशेषतत्त्वमौक्तिकशुक्तिकाम्-अशेषाणि च तानि तत्त्वानि अशेषतत्त्वानि, सदाशिवः मुखं येषां तानि सदाशिवमुखानि, सदाशिवमुखानि च तानि अशेषतत्त्वानि सदाशिवमुखाशेषतत्त्वानि तानि एव मौक्तिकानि सदाशिवमुखाशेष-तत्त्वमौक्तिकानि तेषां शुक्तिका इव शुक्तिका ताम् शिवतत्त्वादिभूमितत्त्वान्तषट्त्रिंशत्तत्त्वरूपमौक्तिकानाम् आविर्भावकारणं या शुक्तिका तामिव वर्तमानाम् षट्त्रिंशत्-तत्त्वकारणीभूताम्, महामायादिरूपिणीं महामाया आदिःयस्य तत्, महामायादि रूपम् अस्ति अस्यामिति तां महामायादिरूपिणीम् शुद्धविद्याख्यमहामाया-प्रकृतिस्वरूपिणीम्, माहेश्वरीं शक्तिं महेश्वरस्य इयं माहेश्वरी तां शक्तिं शिवे अविनाभावरूपेण वर्तमानां शक्तिस्वरूपिणीं विमर्शाख्यां शक्तिं वन्दे नमस्करोमि। तत्त्वेषु मौक्तिकसमारोपात् रूपकम्, शक्तौ शुक्तिकायाः सादृश्यवर्णनात् उपमाध्वनिः।

।।विश्वसृष्टिक्रमस्य प्रतिपादनार्थं भूमिका।।

**अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम्।**
**निर्विकल्पं निराकारं निरस्ताशेषविप्लवम्।।३।।**

सच्चित्सुखाकारम् सत् च चित् च सुखं च सच्चित्सुखानि एतानि एव आकारः यस्य तत् सच्चित्सुखाकारं सच्चिदानन्दात्मकम्, अलक्षणपदास्पदम् - न विद्यते लक्षणं यस्य तत् अलक्षणम्, अलक्षणं च तत् पदं च अलक्षणपदं तस्य अलक्षणपदस्य आस्पदं यत् तत् अलक्षणपदास्पदम् - लक्षणरहितस्य अर्थात् चिह्नरहितस्य पदस्य मूलकारणम् - अर्थात् - जले जलमिव न्यस्तम् इत्युक्तप्रकारेण रूपादिरहितस्य लिङ्गाङ्गसामरस्य - रूपमोक्षस्य प्रदायकम्, निर्विकल्पं विकल्परहितम्, निराकारम् आकारादिरहितम्, निरस्ताशेषविप्लवम् न शेषः अशेषः अशेषाश्च ते विप्लवाश्च अशेषविप्लवाः, निरस्ताः अशेषविप्लवाः यस्मिन् तत् निरस्ताशेषविप्लवम् - समस्तैः उपद्रवैरपि शून्यम् ब्रह्म अस्ति। अस्ति-अस-भुवि, लट्, अस्ति स्तः सन्ति इत्यादि।

विश्वसृष्टिक्रमस्य प्रतिपादनार्थं भूमिकाकृते 'अस्ति' इति वस्तुनिर्देशात्मकं मङ्गलमिति ज्ञेयम्।

**परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम्।**
**प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम्।।४।।**

परिच्छेदकथाशून्यम् परिच्छेदस्य कथा परिच्छेदकथा तया शून्यं परिच्छेदकथाशून्यम् - देशकालादिरूप-विभागरहितम्, प्रपञ्चातीतवैभवम् - प्रपञ्चात् अतीतं वैभवं यस्य तत् प्रपञ्चातीतवैभवम् - सीमातीतवैभवयुक्तम्, प्रत्यक्षादिप्रमाणानाम् प्रत्यक्षम् आदि येषां तानि प्रत्यक्षादीनि प्रत्यक्षादीनि च तानि प्रमाणानि तेषाम् प्रत्यक्षादिप्रमाणानाम्, प्रत्यक्षम् अनुमानम् शब्दः अर्थापत्तिः इत्यादिप्रमाणानाम्, अगोचरपदे न गोचरम् अगोचरम् अगोचरं च तत् पदं च अगोचरपदं तस्मिन् अगोचरपदे रूपादिरहितत्वात् ज्ञातुम साध्यवति पदे स्थाने स्थितं वर्तमानं ब्रह्म अस्ति।

**स्वप्रकाशं विराजन्तमनामयमनौपमम्।**
**सर्वज्ञं सर्वगं शान्तं सर्वशक्तिं निरङ्कुशम्।।५।।**

स्वप्रकाशं स्वस्यैव प्रकाशः यस्मिन् तत् स्वप्रकाशं स्वेनैव प्रकाशेन शोभमानम् विराजन्तम् वि-विशेषेण राजते इति विराजन्तं विशेषेण प्रकाशमानम्, अनामयम् आमयः न विद्यते यस्मिन् तत् अनामयम् जननमरणादिदोषरहितम्, अनौपमम् उपमायाः भावः औपमं न विद्यते औपमं यस्य तत् अनौपमम् उपमातीतम्, सर्वज्ञं सर्वं जानाति इति सर्वज्ञम्, सर्वगं सर्वत्र गच्छति इति सर्वगं सर्वत्र व्यापकम्, शान्तं परमशान्तस्वभावात्मकम्, सर्वशक्तिं सर्वाभिः शक्तिभिः युक्तम् निरङ्कुशम् निर्गतः अङ्कुशः यस्मात् तत् निरर्गलम् निरोधाद्विरहितम् अनर्गलम्, एतादृशं ब्रह्म अस्ति।

**शिवरुद्रमहादेवभवादिपद - संज्ञितम्।**
**अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम्।।६।।**

शिवरुद्रमहादेवभवादिपदसंज्ञितम् शिवश्च रुद्रश्च महादेवश्च भवश्च आदिः यस्य तत् शिवरुद्रमहादेवभवादि, शिवरुद्रमहादेवभवादि च तत् पदं च शिवरुद्रमहादेवभवादिपदं तेन संज्ञितं शिवरुद्रमहादेवभवादिपदसंज्ञितम् - शिवः, रुद्रः, महादेवः, भवः इत्यादिभिः अभिधानैः सञ्ज्ञितं व्यवहरणीयम्, अद्वितीयं न विद्यते द्वितीयं यस्मात् तत् अद्वितीयं द्वितीयवस्तुरहितम्, निर्देशयितुं न शक्यम् अनिर्देश्यम् इदमित्थमिति वक्तुमशक्यम्, सनातनं प्राचीनं च परं ब्रह्म अस्ति।

विश्वसृष्टिप्रकारः

**तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्।**
**स्वात्मलीनं जगत्कार्यं स्वप्रकाश्यं तदद्भुतम्।।७।।**

तत्र पूर्वोक्तलक्षणात्मके परब्रह्मणि पूर्वं जगतः सृष्टेः प्राक् चेतनाचेतनं चेतनं च अचेतनं च एतयोः समाहारः चेतनाचेतनं चराचरात्मकं जगत् सर्वम् लीनम् अभूत् ज्ञानेन्द्रियकर्मेन्द्रियोभयकरणस्य अगोचरत्वेन अतएव तादात्म्येन स्थितमभूत् तत् च अद्भुतम्। अनन्तरं च, स्वात्मलीनं स्वात्मनि लीनं स्वात्मनः शक्तौ लीनं सत् जगत् योग्यस्य उपादानान्तरस्य राहित्यात्कारणात्, स्वप्रकाश्यं द्वितीयस्य वस्तुनः अभावात् स्वस्मिन्नेव प्रकाशयितुं योग्यं यत् कार्यं ज्ञानेन्द्रियकर्मेन्द्रियोभयगोचरत्वेन कर्तुं योग्यमभूत्-कार्यरूपं सदभवत्।

**अभूत्**-भू - सत्तायाम्, लुङ्, अभूत् अभूताम् अभूवन् - इत्यादि।

**शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया।**
**स्वरूपमादधे किञ्चित् सुखस्फूर्तिविजृम्भितम्।।८।।**

शिवाभिधं शिवः इत्यभिधा यस्य तत् शिवाभिधं शिव इति अभिधानकम् परं ब्रह्म जगन्निर्मातुम् जगत् स्रष्टुं जगत्सृष्ट्यर्थम् इच्छया अपेक्षया स्वापेक्षया सुखस्फूर्तिविजृम्भितं सुखस्य स्फूर्तिः सुखस्फूर्तिः तया विजृम्भितं सुखस्य स्वानन्दस्य बाहुल्येन विजृम्भितं यत् किञ्चित् स्वरूपम् अनिर्वचनीयं स्वरूपम् आदधे स्वीचकार। समुद्रवत् किञ्चिदिव उच्चलितुमारेभे इत्यर्थः। **आदधे** - आ+डु-धाञ् - धारणपोषणयोः, लिट्, आदधे आदधाते आदधिरे इत्यादि।

**निरस्तदोषसम्बन्धं निरुपाधिकमव्ययम्।**
**दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम्।।९।।**

निरस्तदोषसम्बन्धं निरस्तः दोषस्य सम्बन्धः यत्र तत् निरस्तदोषसम्बन्धं जननमरणादिरूपैः सकलैः दोषैः निर्मुक्तम्, निरुपाधिकम् उपाधिशून्यम्, अव्ययं नाशरहितम्, अप्राकृतं प्राकृतरहितम् अतएव दिव्यम् नित्यं शाश्वतिकम्, नीलकण्ठं नीलः कण्ठे यस्य तत् नीलकण्ठम् त्रिलोचनं त्रीणि लोचनानि यत्र तत् त्रिलोचनम् - एतादृशं स्वरूपमादधे।

**चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम्।**
**शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः।।१०।।**

चन्द्रार्धशेखरं चन्द्रस्य अर्धः चन्द्रार्धः चन्द्रार्धः एव शेखरं यस्य तत् चन्द्रार्धशेखरम् चन्द्रशेखरम्, शुद्धं स्वयं परिशुद्धम् स्वयं पवित्रम्, शुद्धस्फटिकसन्निभं शुद्धं च तत् स्फटिकं च शुद्धस्फटिकं, तेन सन्निभम् सदृशम् यत् तत् शुद्धस्फटिकसन्निभम् परिशुद्धस्फटिककान्तिमत्, शुद्धमुक्ताफलाभासम् शुद्धं च तत् मुक्ताफलं शुद्धमुक्ताफलम्, आभासते इति आभासः, शुद्धमुक्ताफलस्य आभासः इव आभासः यस्य तत् शुद्धमुक्ताफलाभासं शुद्धमुक्ताफलसदृशकान्तिमत्, गुणमूर्तिभिः गुणाः मूर्तयः येषां तैः गुणमूर्तिभिः सत्त्वादिगुणयुक्तैः ब्रह्मादिदेवैः, उपास्यम् उपासितुं

योग्यम् उपास्यम् पूजार्हं स्वरूपमादधे।

स्फटिकसन्निभ-मुक्ताफलाभास-इत्यत्र उपमालङ्कारः।

**विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम्।**
**कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम्।।११।।**

**अप्राकृतगुणाधारमनन्तमहिमास्पदम् ।।१२।।**

विशुद्धं च तत् ज्ञानं विशुद्धज्ञानम् विशुद्धज्ञानमेव करणं चक्षुरादिज्ञानेन्द्रियप्रपञ्चः यस्य तत् विशुद्धज्ञानकरणम् - परिशुद्धज्ञानम-चक्षुरादिप्रपञ्चयुक्तम्, सर्वयोगिनां सर्वेषामपि शिवयोगिनां विषयं प्रत्यक्षविषयभूतम्, कोटिसूर्यप्रतीकाशं कोटिसंख्याकाः सूर्याः कोटिसूर्याः तेषां प्रतीकाशः इव प्रतीकाशः यस्य तत् कोटिसूर्यप्रतीकाशं कोटिसूर्य-समानकान्तियुक्तम्, चन्द्रकोटिसमप्रभं चन्द्रानां कोटिः चन्द्रकोटिः तेन समाप्रभा यस्य तत् चन्द्रकोटिसमप्रभम् कोटिसंख्याकचन्द्रसदृशकान्तियुक्तम्, अप्राकृतगुणाधारम् प्राकृताः न भवन्ति इति अप्राकृताः, अप्राकृताश्च ते गुणाश्च अप्राकृतगुणाः तेषाम् आधारः आधारभावः यस्मिन् तत् अप्राकृतगुणाधारम् प्राकृतगुणरहितत्वात् परिशुद्धसर्वमङ्गलगुणानामाश्रयस्थानम्, अनन्तमहिमास्पदम् न विद्यते अन्तः येषां ते अनन्ताः अनन्ताश्च ते महिमानश्च अनन्तमहिमानः तेषाम् आस्पदम् यत् तत् अनन्तमहिमास्पदम् अघटितघटनाद्यनन्तमहिमाश्रय-स्थानम् - स्वरूपमादधे। कोटिसूर्यप्रतीकाश-चन्द्रकोटि - समप्रभ-इत्यत्र उपमालङ्कारः। कोटिसूर्यवत् अत्यन्तमौज्ज्वल्यम् कोटिचन्द्रवत् सौम्यकान्तिमत्त्वं च ब्रह्मणि ध्वन्यते।

**।।शिवस्य शक्तेः स्वरूपवर्णनम्।।**

**तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।**
**समस्त - लोकनिर्माणसमवायस्वरूपिणी।।**
**तदिच्छयाभवत् साक्षात् तत्स्वरूपानुसारिणी।।१२।।**

तदीया तस्य इयं तदीया परब्रह्मणः सम्बन्धिनी, सच्चिदानन्दलक्षणा सत् च चित् च आनन्दश्च सच्चिदानन्दाः सच्चिदानन्दाः एव लक्षणं यस्याः सा सच्चिदानन्दलक्षणा सच्चिदानन्दस्वरूपिणी, या परमा शक्तिः श्रेष्ठतमा

विमर्शशक्तिः, समस्त-लोकनिर्माण-समवायस्वरूपिणी समस्ताश्च ते लोकाश्च समस्तलोकाः तेषां निर्माणं समस्त-लोकनिर्माणं तत्र समवायस्वरूपिणी समस्तलोकनिर्माण-समवायस्वरूपिणी समस्त-प्रपञ्चानां निर्माणविषये शिवेन साकं समवायसम्बन्धेन अविनाभावरूपेण वर्तमाना सती, तदिच्छया तस्य शिवस्य इच्छया शिवस्य इच्छानुसारमेव साक्षात् प्रत्यक्षरूपेण, तत्स्वरूपानुसारिणी. तस्य स्वरूपं तत्स्वरूपं तस्य अनुसरणं शीलमस्ति यस्यामिति तत्स्वरूपानुसारिणी अहमिति तत्स्वरूपानुकारिणी शिवाभिन्नस्वरूपवती एव अभवत्।

**इतः परं सृष्टिक्रमं निरूपयति**

**जगत्सिसृक्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम्।**
**कर्तारं सर्वलोकानां विदधे विश्वनायकः।।१३।।**

विश्वनायकः विश्वस्य नायकः परमेश्वरः जगत् सिसुक्षुः स्रष्टुम् इच्छुः सन् प्रथमं, सर्वलोकानां सर्वे च ते लोकाश्च सर्वलोकाः तेषां सर्वलोकानां चतुर्दशभुवनानाम् सर्वदेहिनां सर्वे च ते देहिनश्च सर्वदेहिनः तेषां सर्वदेहिनां समस्तान् लोकान् आश्रित्य विद्यमानानां सर्वेषामपि प्राणिनां कर्तारं सृष्टिकर्तारं ब्रह्माणं चतुर्मुखब्रह्माणं विदधे सृष्टवान्।

**तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः।**
**सर्वज्ञः सकला विद्याः सानुग्रहमुपादिशत्।।१४।।**

शक्तिमान् स्वस्मिन् समवेतशक्तियुक्तः सर्वज्ञः विभुः शङ्करः प्रथमपुत्राय प्रथमश्चासौ पुत्रः प्रथमपुत्रः तस्मै प्रथमपुत्राय चतुर्मुखब्रह्मणे सकलाः विद्याः वेदादिसकलशास्त्रजातं सानुग्रहं यथा स्यात् तथा अनुग्रहेण सहितं यथा स्यात्तथा **उपादिशत्** उपदिष्टवान्। उप+दिश-अतिसर्जने, लङ्,

उपादिशत् उपादिशताम् उपादिशन् इत्यादि।

**समस्तलोकान् निर्मातुं समुद्यपरोऽभवत्।**
**कृतोद्योगोऽपि निर्माणे जगतां शङ्कराज्ञया।।**
**अज्ञातोपायसम्पत्तेरभवन्माययावृतः ।।१५।।**

विश्वनियामकात् महादेवात् प्राप्तविद्यः ब्रह्मा तावत् शङ्कराज्ञया शङ्करस्य

आज्ञया समस्तलोकान् निर्मातुं समुद्यमपरः प्रयत्नशीलवान् अभवत्, किन्तु जगतां निर्माणे सृष्टिकार्ये कृतोद्योगः सन्नपि कृतः उद्योगः येन सः कृतोद्योगः कृतप्रयत्नः सन्नपि, अज्ञातोपायसम्पत्तेः कारणात् उपायः एव सम्पत्तिः उपायसम्पत्तिः अज्ञाता चासौ उपायसम्पत्तिश्च अज्ञातोपायसम्पत्तिः तस्याः कारणात्, मायया आवृतः अभवत्। सृष्टिकार्ये असमर्थः अभवत्।

**विधातुमखिलान् लोकानुपायं प्राप्तुमिच्छया।**
**पुनस्तं प्रार्थयामास देवदेवं त्रियम्बकम्।।१६।।**

अखिलान् लोकान् विधातुं स्रष्टुम् उपायं प्राप्तुम् इच्छया पुनः त्रियम्बकं त्रिलोचनं देवदेवं तं परमेश्वरं प्रार्थयामास। **प्रार्थयामास**-प्रार्थयाम् - अस-गतिदीप्त्यादानेषु, लिट्, प्रार्थयामास प्रार्थयामासतुः प्रार्थयामासुः इत्यादि।

**नमस्ते देवदेवेश नमस्ते करुणाकर।**
**अस्मदादि - जगत्सर्वनिर्माणनविधिक्षम।।१७।।**

हे देवदेवेश ते नमः हे करुणाकर ते नमः, अस्मदादिजगत्सर्व-निर्माणनविधिक्षम - अहम् आदिः यस्य तत् अस्मदादि, अस्मदादि च तत् जगत् च अस्मदादिजगत् तस्य सर्वम् अस्मदादिजगत्सर्वं तस्य जगत्सर्वस्य निर्माणने यः विधिः तस्मिन् क्षमते इति क्षमः तत्सम्बुद्धौ-अस्मदादि-जगत्सर्वनिर्माणनविधिक्षम ब्रह्मविष्ण्वादिजगतः सर्वस्य निर्माणकार्ये सर्वथा समर्थ? ते नमः।

**उपायं वद मे शम्भो जगत्स्रष्टः! जगत्पते।**
**सर्वज्ञः सर्वशक्तिस्त्वं सर्वकर्ता सनातनः।।१८।।**

हे शम्भो! हे जगत्स्रष्टः जगत्सृष्टौ समर्थ! जगत्पते! मे माम् उपायं जगत्सृष्टिविषये उपायं वद कथय। यतः त्वं सर्वज्ञः, सर्वशक्तिः सर्वा शक्तिः अस्ति अस्मिन्, इति सर्वशक्तिः सर्वशक्तिमान्, सर्वकर्ता, सनातनश्च असि।

**वद**-वद-व्यक्तायां वाचि, लोट्, वदतु-वदतात्-इत्यादि।

**इति सम्प्रार्थितः शम्भुर्ब्रह्मणा विश्वनायकः।**
**उपायमवदत्तस्मै लोकसृष्टिप्रवर्तनम्।।१९।।**

इति एवं रीत्या ब्रह्मणा सम्प्रार्थितः विश्वनायकः शम्भुः तस्मै ब्रह्मणे लोकसृष्टिप्रवर्तनं लोकस्य सृष्टिः लोकसृष्टिः तत्र प्रवर्तनं प्रवर्तनयोग्यम् उपायम् अवदत् कथयामास।

**अवदत्** - वद-व्यक्तायां वाचि, लङ् - अवदत् अवदताम् इत्यादि।

**उपायमीश्वरेणोक्तं लब्ध्वापि चतुराननः।**
**न समर्थोऽभवत् कर्तुं नानारूपमिदं जगत्।।२०।।**

ईश्वरेण उक्तम् उपायं लब्ध्वा प्राप्य अपि चतुराननः ब्रह्मा नानारूपं नानारूपात्मकम् इदं जगत् कर्तुं समर्थः न अभवत्।

**पुनस्तं प्रर्थयामास ब्रह्मा विह्वलमानसः।**
**देवदेव महादेव जगत्प्रथमकारण।।२१।।**

विह्वलमानसः विह्वलं मानसं यस्य सः विह्वलमानसः व्याकुलचित्तः सन् ब्रह्मा पुनश्च तं परमेश्वरं प्रार्थयामास–हे देवदेव, हे महादेव! जगत्प्रथमकारण जगतः प्रथमं कारणं यः सः तत्सम्बुद्धौ जगतां प्रथमकारण!

**नमस्ते सच्चिदानन्द स्वेच्छाविग्रहराजित!।**
**भव शर्व महेशान सर्वकारणकारण!।।२२।।**

हे सच्चिदानन्द! हे स्वेच्छाविग्रहराजित स्वेच्छया स्वीकृतः विग्रहः येन सः स्वेच्छाविग्रहः तेन राजित-स्वस्यैव इच्छया स्वीकृतचंद्रशेखरत्व-नीलकण्ठत्वादिरूपशरीरक! भव, शर्व, महेशान, सर्वकारणकारण सर्वेषामपि कारणानां स्वयं कारण, बिन्दुमायादिसर्वकारणकारण! ते नमः।

**भवदुक्तो ह्युपायो मे न किञ्चिज्ज्ञायतेऽधुना।**
**सृष्टिं विधेहि भगवन् प्रथमं परमेश्वर!।।**
**ज्ञातोपायस्ततः कुर्यां जगत्सृष्टिमुमापते!।।२३।।**

हे परमेश्वर! मे भवदुक्तः भवता उक्तः भवदुक्तः उपायः हि उपायः तावत् अधुना किंचिदपि न ज्ञायते, अतः हे भगवन्! हे परमेश्वर! प्रथमं सृष्टिं विधेहि कुरु, हे उमापते! ततः भवता क्रियमाणसृष्टेः अनन्तरं ज्ञातोपायः सन् ज्ञातः उपायः येन सः ज्ञातोपायः सन् अहं जगत्सृष्टिं जगतः सृष्टि कुर्यां

करिष्यामि।

**ज्ञायते**-ज्ञा-अवबोधने, लट्, ज्ञायते ज्ञायेते ज्ञायन्ते इत्यादि।

**कुर्याम्** - डु-कृञ् - करणे, विधिलिङ्, कुर्यात् कुर्याताम् इत्यादि।

**इत्येवं प्रार्थितः शम्भुर्ब्रह्मणा विश्वयोनिना।**
**ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान्।।२४।।**

इत्येवं रीत्या विश्वयोनिना विश्वस्य योनिः यः तेन विश्वयोनिना विश्वस्य मूलकारणीभूतेन, ब्रह्मणा प्रार्थितः शम्भुः आत्मसमप्रख्यान् आत्मना समा प्रख्या येषां तान् आत्मना समानगुणविशिष्टान् सर्वगान् सर्वत्र गच्छन्ति इति सर्वगाः तान् स्वेच्छया सर्वत्र गमनशीलान् सर्वशक्तिकान् सर्वाः शक्तयः सन्ति येषां तान् सर्वाभिः इच्छादिशक्तिभिः प्रमथान् ससर्ज सृष्टवान्।

**ससर्ज**-सृज-विसर्गे, लिट्, ससर्ज ससृजतुः ससृजुः इत्यादि।

**प्रबोधपरमानन्दपरिवाहितमानसान् ।**
**प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान्।।२५।।**

प्रबोधपरमानन्दपरिवाहितमानसान् परमश्चासौ आनन्दश्च परमानन्दः प्रबोधेन प्राप्तः परमानन्दः प्रबोधपरमानन्दः तेन परमानन्देन परिवाहितं मानसं येषां तान् प्रबोधपरमानन्दपरिवाहितमानसान् शिवविषयकेण प्रकृष्टज्ञानेन प्राप्तेन परमशिवानन्दानुभवेन परिपक्वतां प्राप्तमानसान्, विश्वनिर्माण-प्रलयापादनक्षमान् निर्माणं च प्रलयश्च निर्माणप्रलयौ विश्वस्य निर्माणप्रलयौ विश्वनिर्माणप्रलयौ तयोः आपादने क्षमान् विश्वनिर्माण-प्रलयापादनक्षमान् विश्वस्य सृष्टि-प्रलयकरणे नितरां समर्थान्, प्रमथान् रेणुकादिप्रमथगणान् ससर्ज सृष्टवान्।

**तेषु प्रमथवर्गेषु सृष्टेषु परमात्मना।**
**रेणुको दारुकश्चेति द्वावभूतां शिवप्रियौ।।२६।।**

परमात्मना परमेश्वरेण सृष्टेषु तेषु प्रमथवर्गेषु मध्ये रेणुकः दारुकश्च इति द्वौ एतौ शिवप्रियौ शिवस्य प्रियौ अभूताम्।

**अभूताम्** - भू - लुङ्। अभूत् अभूताम् अभूवन् इत्यादि।

**सर्वविद्याविशेषज्ञौ सर्वकार्यविचक्षणौ।**
**मायामलविनिर्मुक्तौ महिमातिशयोज्ज्वलौ।।२७।।**

सर्वाश्च ताः विद्याश्च सर्वविद्याः ताः विशेषेण जानीतः इति सर्वविद्याविशेषज्ञौ सर्वासु च विद्यासु विशेषपरिज्ञानवन्तौ, सर्वकार्यविचक्षणौ सर्वाणि च तानि कार्याणि सर्वकार्याणि तेषु विचक्षणौ सर्वेषु च कार्येषु नितरां विचक्षणौ कुशलतरौ, मायामलविनिर्मुक्तौ मायायाः मलेन मायामलेन निर्मुक्तौ परिपूर्णतया रहितौ, महिमातिशयोज्ज्वलौ महिम्नः अतिशयः महिमातिशयः तेन महिमातिशयेन उज्ज्वलौ महिमातिशयोज्ज्वलौ स्वमहिमातिशयेन अत्यन्तोज्ज्वलकान्तियुक्तौ सन्तौ शिवप्रियौ अभूताम्।

**आत्मानन्दपरिस्फूर्तिरसास्वादनलम्पटौ ।**
**शिवतत्त्वपरिज्ञानतिरस्कृतभवामयौ ।।२८।।**

आत्मनः आनन्दः आत्मानन्दः तेन परिस्फूर्तिः आत्मानन्दपरिस्फूर्तिः तस्याः परिस्फूर्तेः रसः आत्मानन्द-परिस्फूर्तिरसः तस्य आस्वादने लम्पटौ आत्मानन्दपरिस्फूर्तिरसास्वादनलम्पटौ शिवानन्दानुभूतेः परिस्फूर्तिपरिणामत्वेन अनुभूयमानस्य रसस्य आस्वादनासक्तौ सदा शिवानन्दतुन्दिलौ, शिवतत्त्व-परिज्ञानतिरस्कृतभवामयौ-शिवतत्त्वस्य परिज्ञानं शिवतत्त्वपरिज्ञानम्, तेन परिज्ञानेन तिरस्कृतः भवः एव आमयः याभ्यां तौ शिवतत्त्वप्रतिपादक-परिज्ञानेन कारणेन दूरीकृतजननमरणभयौ तौ द्वौ शिवप्रियौ अभूताम्।

**नानापथमहाशैवतन्त्रनिर्वाहतत्परौ ।**
**वेदान्तसारसर्वस्वविवेचनविचक्षणौ।।२९।।**

नाना च ते पन्थानश्च नानापन्थानः नानापन्थानश्च ते महाशैवाश्च नानापथमहाशैवाः ते च तानि तन्त्राणि च नानापथमहाशैवतन्त्राणि तेषां निर्वाहे तत्परौ अनेकविधेषु महाशैवागमेषु विषये बोधनपरिशीलनादि-रूपनिर्वहणसमर्थौ, वेदान्तसारसर्वस्वविवेचनविचक्षणौ-वेदान्तानां सार-सर्वस्वस्य विवेचनं वेदान्तसारसर्वस्वविवेचनं तत्र विचक्षणौ सर्वासामपि उपनिषदां सारसर्वस्वस्य परिशीलनादिविषये अतीव विचक्षणौ तौ शिवप्रियौ अभूताम्।

**नित्यसिद्धौ निरातङ्कौ निरङ्कुशपराक्रमौ।**
**तादृशौ तौ महाभागौ संवीक्ष्य परमेश्वरः।।३०।।**

नित्यसिद्धौ नित्या सिद्धिः ययोः तौ नित्यसिद्धौ शाश्वतिकैः अणिमाद्यष्टसिद्धिजातैः युक्तौ, निरातङ्कौ आतङ्करहितौ निर्भीकौ, निरङ्कुश-पराक्रमौ-निर्गतः अङ्कुशः निरङ्कुशः निरङ्कुशश्च असौ पराक्रमश्च ययोः तौ निरङ्कुशपराक्रमौ अङ्कुशरहितपराक्रमवन्तौ अमितपराक्रमौ, तादृशौ तादृशगुणगणयुक्तौ तौ महाभागौ महात्मानौ रेणुकदारुकौ गणाधीश्वरौ परमेश्वरः संवीक्ष्य दृष्ट्वा–

**समर्थौ सर्वकार्येषु विश्वासपरमाश्रितौ।**
**अन्तःपुरद्वारपालौ निर्ममे नियतौ विभुः।।३१।।**

सर्वकार्येषु समर्थौ विश्वासपरमाश्रितौ विश्वासस्य परमः विश्वासपरमः तम् आश्रितौ परमविश्वासभाजनभूतौ नियतौ शुद्धात्मानौ तौ विभुः परमेश्वरः अन्तःपुरद्वारपालौ अन्तःपुरस्य द्वारपालौ द्वारपालकौ सन्तौ निर्ममे नियोजितवान्।

**निर्ममे**-निर् + माङ्-माने, लिट्

निर्ममे निर्ममाते निर्ममिरे इत्यादि।

**गणेश्वरौ रेणुकदारुकावुभौ**
**विश्वासभूतौ नवचन्द्रमौलेः।**
**अन्तःपुरद्वारगतौ सदा तौ**
**वितेनतुर्विश्वपतेस्तु सेवाम्।।३२।।**

उभावपि गणेश्वरौ रेणुकदारुकौ नवश्चासौ चन्द्रश्च नवचन्द्रः सः एव मौलिः यस्य तस्य नवचन्द्रमौलेः चन्द्रशेखरस्य शिवस्य अन्तःपुरद्वारगतौ अन्तःपुरस्य द्वारं गतौ सन्तौ अन्तःपुरद्वारपालौ सन्तौ तौ सदा सर्वदा विश्वपतेः परमेश्वरस्य सेवां तु वितेनतुः विस्तारयामासतुः।

**वितेनतुः** – वि+तनु-विस्तारे, लिट्,

विततान वितेनतुः वितेनुः - इत्यादि।

अत्र श्लोके प्रथमपादे वंशस्थवृत्तम्, द्वितीय-तृतीयपादयोः इन्द्रवज्रावृत्तम्, चतुर्थपादः उपेन्द्रवज्रावृत्तयुतः – अतः अत्र उपजातिः छन्दः।

**'जतौ तु वंशस्थमुदीरितं जरौ'**
**'स्यादिन्द्रवज्रा यदि तौ जगौ गः'**
**'उपेन्द्रवज्रा जतजास्ततो गौ'**
**'अनन्तरोदीरितलक्ष्मभाजौ**
**पादौ यदीयावुपजातयस्ताः'**

*इति यथाक्रमं लक्षणम्।*

*इति सिद्धान्तशिखामणौ रेणुकदारुकावतरणं नाम*
*॥द्वितीयः परिच्छेदः॥*

# ।।तृतीयः परिच्छेदः।।

## ।।कैलासवर्णनम्।।

**कदाचिदथ कैलासे कलधौतशिलामये।**
**गन्धर्ववामनयनाक्रीडामौक्तिक - दर्पणे।।१।।**

अथ एवं रेणुकदारुकौ शिवप्रियौ सन्तौ, कदाचित्-रेणुकगणाधीश्वरस्य भूलोकावतरणसमये, कलधौतशिलामये कलधौतमेव शिला कलधौतशिला तन्निर्मिते सुवर्णशिलाभिः निर्मिते, अथवा रजतमयशिलानिर्मिते, गन्धर्ववामनयनाक्रीडामौक्तिकदर्पणे गन्धर्वाणां वामनयनाः गन्धर्ववामनयनाः तासाम् आक्रीडा गन्धर्ववामनयनाक्रीडा तदर्थं मौक्तिकमयदर्पण-सदृशे गन्धर्वस्त्रीणां मुखदर्शनालङ्कारादिकरणार्थं मौक्तिकनिर्मितदर्पणसदृशे कैलासे, वर्तमानं रत्नसिंहासनमध्यस्तम्–इति उत्तरत्र अन्वयः।

कलधौतशिला-मौक्तिकदर्पण-इत्यत्र रूपकम्, शोभातिशयप्रतीतेः उपमाध्वनित्वम्।

**मन्दारवकुलाशोकमाकन्दप्रायभू - रुहे।**
**मल्लीमरन्दनिःष्यन्दपानपीनमधुव्रते ।।२।।**

मन्दारश्च वकुलश्च अशोकश्च माकन्दश्च मन्दारवकुलाशोकमाकन्दाः एवं प्रायैः भूरुहैः परिपूर्णे, एवंप्रायाःभूरुहाः सन्ति यत्र तस्मिन्, मल्लीमरन्द-निष्यन्दपानपीनमधुव्रते मल्लीनां मरन्दानि मल्लीमरन्दानि तेषां निःष्यन्दः मल्लीमरन्दनिष्यन्दः तस्य पानेन पीनाश्च ते मधुव्रताः यत्र तस्मिन् मल्लीकुसुमानां मकरन्दपानेन पीनमधुव्रतसंकुले पुष्टभ्रमरसमूहे कैलासे,

**कुङ्कुमस्तबकामोदकूलङ्कषहरिन्मुखे ।**
**कलकण्ठकुलालापकन्दलद्रागबन्धुरे ।।३।।**

कुङ्कुमस्तबकामोदकूलङ्कहरिन्मुखे-कुङ्कुषमकुसुमानां स्तबकाः कुङ्कुमस्तबकाः तेषामामोदः कुङ्कुमस्तबकामोदः तेन। कूलं कषन्ति इति कूलङ्कषाणि तानि च

यानि हरितां मुखानि यत्र तस्मिन् कुङ्कुमकुसुमानामामोदेन परिपूर्णसमस्तदिक्प्रदेशयुते, कलकण्ठकुलालापकन्दलद्रागबन्धुरे कलकण्ठानां कुलं कलकण्ठकुलं तेषामालापः कलकण्ठकुलालापः तेन कन्दलन् यः रागः तेन बन्धुरे कलकण्ठकुलालापकन्दलद्रागबन्धुरे कोकिलानां समूहैः क्रियमाणेन मधुरालापेन सम्भवन् यः पञ्चमस्वरः तेन मनोहरयुक्ते कैलासे–

**किन्नरीगीतमाधुर्यपरिवाहितगह्वरे ।**
**सानन्दवरयोगीन्द्रवृन्दालङ्कृतकन्दरे ।।४।।**

किन्नरीगीतमाधुर्य-परिवाहितगह्वरे-किन्नरीणां गीतं किन्नरीगीतं तस्य गीतस्य माधुर्यं किन्नरीगीतमाधुर्यं तेन परिवाहितानि गह्वराणि यत्र तस्मिन् किन्नरस्त्रीणां माधुर्यपूर्णाः गीतालापाः ये तेषां प्रवाहेण लहर्या परिपूरितगह्वरप्रदेशवति, सानन्दवरयोगीन्द्रवृन्दालङ्कृतकन्दरे-सानन्दाश्च वरयोगीन्द्राश्च सानन्दवरयोगीन्द्राः तेषां वृन्दः सानन्दवरयोगीन्द्रवृन्दः तेन अलङ्कृताः कन्दराः यस्मिन् तस्मिन् सानन्दवरयोगीन्द्रवृन्दालङ्कृतकन्दरे-सानन्दप्रमुखैः योगिश्रेष्ठैः अलङ्कृतगुहाप्रदेशवति कैलासे—

**हेमारविन्दकलिकासुगन्धिरसमानसे ।**
**शातकुम्भमयस्तम्भशतोत्तुङ्ग-विराजिते ।।५।।**

हेमारविन्दकलिकासुगन्धिरस-मानसे हेमारविन्दानां कलिकाः हेमारविन्द-कलिकाः तासां सुगन्धी रसः तेन भरितं मानसं सरः यत्र तस्मिन् सुवर्ण-कमलानां सुगन्धेन आमोदभरित-मानससरोवरयुते, शातकुम्भ-मयस्तम्भशतोत्तुङ्ग-विराजिते-शातकुम्भमयास्ते च स्तम्भाः शातकुम्भमयस्तम्भाः तेषां शतेन उत्तुङ्गं यथा स्यात् तथा विराजिते शताधिकैः उत्तुङ्गैः सुवर्णमयस्तम्भैः विराजमानवति कैलासे—

**माणिक्यदीपकलिका-मरीचिद्योतितान्तरे ।**
**द्वार - तोरणसंरूढशङ्खपद्मनिधिद्वये ।।६।।**

माणिक्यदीपकलिका-मरीचिद्योतितान्तरे माणिक्यमयाश्च ते दीपाः माणिक्यदीपाः तेषां याः कलिकाः माणिक्यदीपकलिकाः तासां मरीचिभिः द्योतितम् अन्तरं यस्मिन् तत् - कलिकाकाराणां माणिक्यमयदीपानां प्रकाशैः

प्रकाशितान्तःपुरवति, द्वारतोरण-संरूढ-शंख-पद्मनिधिद्वये द्वारे यः तोरणः द्वारतोरणः तस्मिन् तोरणे संरूढौ यौ शङ्खश्च पद्मश्च शङ्खपद्मौ तयोः निधी तयोः द्वयं यत्र तस्मिन् द्वारतोरणसंरूढशङ्खपद्मनिधिद्वये-महाद्वारतोरणस्य उभयस्तम्भभागे समायोजितशंखपद्मनामकनिधिद्वयवति कैलासे—

**मुक्तातारकितोदारवितानाम्बर - मण्डिते।**
**स्पर्शलक्षितवैडूर्यमयभित्ति - परम्परे।।७।।**

मुक्ताभिः आतारकितम् मुक्तातारकितम् यत् उदारञ्च वितानञ्च तत् अम्बरञ्च मुक्तातारकितोदारवितानाम्बरं तेन मण्डितः यः तस्मिन् मुक्तातारकितोदारवितानाम्बर-मण्डिते–मुक्तामणिभिः नक्षत्राणाम् आकारेण विरचितविस्ताराम्बरेण अलङ्कृते, स्पर्शलक्षित-वैडूर्यमयभित्तिपरम्परे-केवलं स्पर्शेनैव लक्षिताः स्पर्शलक्षिताः याः वैडूर्यमयाश्च ताः भित्तयश्च स्पर्शलक्षितवैडूर्यमयभित्तयः तासां परम्परा यत्र तस्मिन् - केवलं हस्तस्पर्शेनैव ज्ञायमानवैडूर्यमयभित्तीनां परम्परायुक्ते कैलासे—

**सञ्चरत्प्रमथश्रेणी - पदवाचालनूपुरे।**
**प्रवालवलभी - शृङ्ग - शृङ्गारमणिमण्डपे।।८।।**

सञ्चरत्प्रमथश्रेणीपदवाचालनूपुरे - सञ्चरन्तश्च ते प्रमथाश्च सञ्चरन्प्रमथाः तेषां श्रेण्यः सञ्चरत्प्रमथश्रेण्यः तासां पत्सु वाचालायमानाः नूपुराः यत्र तस्मिन् तत्र सञ्चरणशीलानां प्रमथानां समूहस्य पादेषु वर्तमानैः नूपरैः निर्गतेन मधुरशब्देन शब्दायमानप्रदेशवति, प्रबालवलभीशृङ्ग - शृङ्गारमणि-मण्डपे–प्रवालानां वलभ्यः प्रवालवलभ्यः तासां शृङ्गानि प्रवालवलभीशृङ्गानि तैः युक्तः शृङ्गारमणिमयः मण्डपः यत्र तस्मिन् - प्रवालमयवलभी (भित्ति) शृङ्गैः अलङ्कृतमणिमयमण्डपयुक्ते कैलासे—

इत्येवंरीत्या उपवर्णिते कैलासे रत्नसिंहासनारूढस्य परमेश्वरस्य वर्णनम्–

**वन्दारुदेवमुकुटमन्दाररसवासितम् ।**
**रत्नसिंहासनं दिव्यमध्यस्तं परमेश्वरम्।।९।।**

वन्दारवश्च ते देवाश्च वन्दारुदेवाः तेषां मुकुटानि वन्दारुदेवमुकुटानि तेषु वर्तमानानि यानि मन्दाराणि वन्दारुदेवमुकुटमन्दाराणि तेषां रसेन वासितं यत् तत् वन्दारुदेवमुकुटमन्दाररसवासितम् – नमस्कारकरणोद्युक्तानां देवानां किरीटेषु वर्तमानानां मन्दारकुसुमानां मकरन्देन सुवासनायुक्तम्, दिव्यम् रत्नसिंहासनं रत्नखचितं सिंहासनम् अध्यस्तम् आश्रित्य उपविष्टं परमेश्वरम्–

**तमास्थानगतं देवं सर्वलोकमहेश्वरम्।**
**त्र्यन्तकमलारण्य - विहारकल - हंसकम्।।१०।।**

सर्वलोकमहेश्वरं सर्वे च ते लोकाश्च सर्वलोकाः तेषां महेश्वरम् सर्वलोकाधीश्वरं, त्र्यन्तकमलारण्यविहारकलहंसकम् त्र्यन्ताः उपनिषदः एव कमलानि त्र्यन्तकमलानि तेषाम् अरण्यं तत्र विहरन् कलहंसः तम् इव वर्तमानं त्र्यन्तकमलारण्यविहारकलहंसकम्-वेदान्ताख्याः उपनिषदः एव कमलानि तेषामरण्यमध्ये समूहमध्ये विहारं कृतवान् कलहंसः तम् इव वर्तमानम्, आस्थानगतं तं देवं रत्नसिंहासनमलंकृत्य वर्तमानं परमेश्वरम् उमया सममासीनम् - इत्युत्तरत्र अन्वयः।

त्र्यन्तकमलारण्य-इत्यत्र रूपकध्वनिः, विहारकलहंसकम् - इत्यत्र उपमाध्वनिः, शिवः उपमेयम् कलहंसः उपमानम्।

**उदारगुणमोङ्कारशुक्तिकापुटमौक्तिकम् ।**
**सर्वमङ्गलसौभाग्यसमुदाय - निकेतनम्।।११।।**

उदारगुणम् परमौदार्यगुणयुक्तम्, ओंकारशुक्तिकापुट-मौक्तिकम् - ओंकारः एव शुक्तिका ओंकारशुक्तिका तस्याः पुटे मौक्तिकमिव वर्तमानम् ओंकाररूपशुक्तिकायाः अन्तः पुटे विराजमानमौक्तिकमिववर्तमानम्, सर्वमङ्गलसौभाग्यसमुदायनिकेतनम् – सर्वाणि च तानि मङ्गलानि सर्वमङ्गलानि तेषां यः समुदायः सर्वमङ्गलरूपाणां सौभाग्यानां यः समुदायः सः सर्वमङ्गलसौभाग्यसमुदायः तस्य निकेतनम् आवासस्थानम् इव वर्तमानं परमेश्वरम्—

ओंकारशुक्तिका – इत्यत्र रूपकम्, मौक्तिकमिव मौक्तिकम् इति उपमा, समुदायस्य निकेतनमिव निकेंतनम् इत्यत्रापि उपमा।

**संसारविषमूर्च्छालु - जीवसञ्जीवनौषधम्।**
**नित्यप्रकाशनैर्मल्यकैवल्य - सुरपादपम्।।१२।।**

संसारः एव विषं संसारविषं तेन मूर्च्छालुश्च असौ जीवश्च संसारविषमूर्च्छालु-जीवः तस्य सञ्जीवनं च तत् औषधं च यः तम् संसारविषमूर्च्छालु जीवसञ्जीवनौषधम् - संसाररूपविषपानेन मूर्च्छां प्राप्तस्य जीवस्य प्राणप्रदायकसञ्जीवनौषधवत् वर्तमानम्, नित्यप्रकाशनैर्मल्यकैवल्यसुरपादपम्– नित्यश्चासौ प्रकाशश्च नित्यप्रकाशः निर्मलस्य भावः नैर्मल्यम् नित्यप्रकाशश्च तत् नैर्मल्यं च यः तम् नित्यप्रकाशनैर्मल्यम्, कैवल्यस्य सुरपादपं च नित्यप्रकाश-नैर्मल्यकैवल्यसुरपादपम् - नित्यप्रकाशयुक्तत्वात् निर्मलस्वरूपम् कैवल्यस्य प्रदाने कल्पवृक्षसदृशम् परमेश्वरम्—

संसारविष-इत्यत्र रूपकम्, सञ्जीवनौषधम् सुरपादपम्-इत्यत्र उपमा।

**अनन्तपरमानन्दमकरन्दमधुव्रतम् ।**
**आत्मशक्तिलतापुष्यत्त्रिलोकीपुष्पकोरकम् ।।१३।।**

अनन्तपरमानन्दमकरन्दमधुव्रतम् - अनन्तश्चासौ परमानन्दश्च अनन्तपरमानन्दः स एव मकरन्दः तस्य विषये मधुव्रतः इव वर्तमानः यः तम् निरवधिकपरमानन्दरूपमकरन्दस्य आस्वादने भ्रमर इव वर्तमानम्, आत्मशक्तिलतापुष्यत्-त्रिलोकीपुष्पकोरकम् - आत्मनः शक्तिः आत्मशक्तिः सा एव लता आत्मशक्तिलता, तया पुष्यन्ती या त्रिलोकी सा आत्मशक्तिलता पुष्यत्त्रिलोकी सा पुष्पकोरकः इव वर्तमानः यः तम् आत्मशक्तिरूपया लतया विकचमानत्रैलोक्यरूपपुष्पसदृशं परमेश्वरम्-परमानन्दमकरन्द-आत्मशक्तिलता - इत्यत्र रूपकम्, मधुव्रतः इव मधुव्रतः, कोरकः इव कोरकः - इत्यत्र उपमा। त्रिलोकीपुष्पकोरकम् - इत्यत्रापि रूपकम्।

**ब्रह्माण्डकुण्डिकाषण्ड-पिण्डीकरण-पण्डितम्।**
**समस्तदेवताचक्रचक्रवर्तिपदे स्थितम्।।१४।।**

ब्रह्माण्डकुण्डिकाषण्ड - पिण्डीकरणपण्डितम् - ब्रह्माण्डानि एव कुण्डिकाः ब्रह्माण्डकुण्डिकाः तासां षण्डः ब्रह्माण्डकुण्डिकाषण्डः तस्य पिण्डीकरणे पण्डितः यः सः तम् ब्रह्माण्डकुण्डिकाषण्डपिण्डीकरणपण्डितम्-ब्रह्माण्डरूपभाण्डसमूहस्य एकीकरणे समर्थम्, समस्तदेवताचक्रचक्रवर्तिपदे-

समस्ताश्च ताः देवताश्च समस्तदेवताः तासां चक्रं समस्त-देवताचक्रं तस्य चक्रवर्ती एव पदं तत्र स्थितं वर्तमानम् समस्त-देवसमूहस्य-चक्रवर्तिनम्, परमेश्वरम्–

ब्रह्माण्डकुण्डिका-इत्यत्र रूपकम्।

**चन्द्रबिम्बायुतच्छायादायादद्युतिविग्रहम् ।**
**माणिक्यमुकुटज्योतिर्मञ्जरी - पिञ्जराम्बरम्।।१५।।**

चन्द्रबिम्बायुतच्छायादायादद्युतिविग्रहम् - चन्द्रबिम्बानाम् अयुतं चन्द्रबिम्बायुतं तस्य छाया चन्द्रबिम्बायुतच्छाया तस्याः दायादा च असौ द्युतिश्च चन्द्रबिम्बायुतच्छायादायादद्युतिः सा इव विग्रहः यस्य तं चन्द्रबिम्बायुतच्छायादायादद्‌युतिविग्रहम् - अयुतसंख्याकचन्द्रबिम्बानां कान्त्या समानकान्तियुक्तशरीरवन्तम्, माणिक्यमुकुटज्योतिर्मञ्जरीपिञ्जराम्बरम् - देवतानां शिवस्य नमस्कारसमये तेषां-माणिक्यमयानि च तानि मुकुटानि माणिक्यमुकुटानि तेषां ज्योतींषि एव मञ्जर्यः माणिक्यमुकुटज्योतिर्मञ्जर्यः ताभिः पिञ्जरयुक्तं यदम्बरं यस्य तम् माणिक्यमुकुटज्योतिर्मञ्जरीपिञ्जराम्बरम् - मुकुटस्य माणिक्यानां कान्तिभिः पिञ्जरितवाससम् परमेश्वरम्।

छायादायाद-इत्यत्र उपमा, ज्योतिर्मञ्जरी-अत्र रूपकम्, ज्योतिर्मञ्जरीपिञ्जर-इत्यत्र तद्‌गुणालङ्कारः।

'तद्‌गुणः स्वगुणत्यागादन्यदीयगुणग्रहः' इति लक्षणम्।

**चूडालं सोमकलया सुकुमारबिसाभया।**
**कल्याण - पुष्पकलिका - कर्णपूरमनोहरम्।।१६।।**

सुकुमारबिसाभया - सुकुमारं च तत् बिसं च सुकुमारबिसं, तस्य आभा इव आभा यस्याः सा तया सुकुमारविसाभया सुकुमारकमलनालवत् परिशुभ्रकान्तियुक्तया, सोमकलया सोमस्य कला सोमकला तया सोमकलया चन्द्रबिम्बेन चूडालम् चूडालङ्कारः यस्य सः तं चूडालम् चन्द्रकृतशिरोभूषणं चन्द्रशेखरम्, कल्याणपुष्पकलिकाकर्णपूरमनोहरम्-कल्याणं च तत् पुष्पं च कल्याणपुष्पं तस्य कलिका कल्याणपुष्पकलिका सा एव कर्णपूरः कल्याणपुष्पकलिकाकर्णपूरः तेन मनोहरम् - मङ्गलकरपुष्पस्य कोरकेण

कृतकर्णाभरणम् परमेश्वरम्।

बिसाभया - इत्यत्र उपमा, कलिकाकर्णपूर - इत्यत्र रूपकम्।

**मुक्तावलयसम्बद्धमुण्डमाला - विराजितम्।**
**पर्याप्तचन्द्रसौन्दर्य - परिपन्थि - मुखश्रियम्।।१७।।**

मुक्तानां वलयः मुक्तावलयः तेन सम्बद्धा मुण्डानां माला मुक्तावलयसम्बद्धमुण्डमाला तया विराजितम् - मुक्तावलय-कलितया मुण्डमालया परिशोभमानम्, पर्याप्तचन्द्रसौन्दर्य - परिपन्थि - मुखश्रियम् - पर्याप्तश्चासौ चन्द्रश्च पर्याप्तचन्द्रः तस्य सौन्दर्यं पर्याप्तचन्द्रसौन्दर्यं, मुखस्य श्रीः मुखश्रीः, पर्याप्त-चन्द्रसौन्दर्येण परिपन्थिनी मुखश्रीः यस्य तम् पर्याप्तचन्द्रसौन्दर्य - परिपन्थिमुखश्रियम् - पूर्णचन्द्रस्य सौन्दर्यमपि पराजित्य शोभमानमुखकान्तिम् स्वमुखकान्त्या तिरस्कृत-पूर्णचन्द्रकान्तिमन्तं परमेश्वरम्।

**प्रातःसम्फुल्ल - कमलपरियायत्रिलोचनम्।**
**मन्दस्मितमितालाप - मधुराधरपल्लवम्।।१८।।**

प्रातः सम्फुल्लं च तत् कमलं च प्रातः सम्फुल्लकमलम्, त्रयाणां लोचनानां समाहारः त्रिलोचनम् परियायं च तत् त्रिलोचनं च परियायत्रिलोचनं प्रातः सम्फुल्लकमलस्य परियायत्रिलोचनं यस्य सः तं प्रातः-सम्फुल्लकमलपरियायत्रिलोचनम् - पर्याय-इति पदस्थस्य 'र्या' इत्यक्षरस्य र-कार-य-कारयोः विश्लेषात् 'रिय'-इति भवति, अतः 'पर्याय-परियाय' इति रूपं ज्ञेयम्, शिवस्य त्रीणि अपि लोचनानि प्रातःकाले विकसितकमलसदृशानि आसन्, तादृशं त्रिलोचनं परमेश्वरम्, अपि च मन्दस्मितमितालापमधुराधरपल्लवम् - मन्दं च तत् स्मितं च मन्दस्मितं, मन्दस्मितं यथा स्यात् तथा मितश्च असौ आलापश्च मन्दस्मितमितालापः तेन आलापेन कारणेन मधुरः मन्दस्मितमितालापमधुरः, अधरः पल्लवः इव अधरपल्लवः मन्दस्मित-मितालापमधुरः अधरपल्लवः यस्य तम् मन्दस्मितमितालापमधुराधरपल्लवम्-मन्दस्मितयुक्तेन मितेन आलापेन कारणेन मनोहरतया दृश्यमानाधरपल्लवम् परमेश्वरम्।

अत्र श्लोके उपमालङ्कारः, कमलानां लोचनत्रयस्य, अधरस्य

पल्लवस्य च सादृश्यवर्णनात्।

**गाण्डमण्डलपर्यन्त - क्रीडन्मकरकुण्डलम्।**
**कालिम्ना कालकूटस्य कण्ठनाले कलङ्कितम्।।१९।।**

गण्डमण्डलपर्यन्तक्रीडन्मकरकुण्डलम् गण्डस्य मण्डलं गण्डमण्डलं तस्य पर्यन्तं गण्डमण्डलपर्यन्तं क्रीडन् मकरः इव कुण्डलं यस्य तम् गण्डमण्डलपर्यन्तक्रीडन्मकरकुण्डलम्-कपोलपर्यन्तं लोलायमानमकराकृतिकुण्डल-द्वययुक्तम्, कालकूटस्य विषस्य कालिम्ना नीलवर्णेन करणेन कण्ठनाले कण्ठप्रदेशे कलङ्कितं कालिमवर्णयुक्तं सन्तं परमेश्वरम्। उत्तरार्धे तद्गुणालङ्कारः।

**मणिकङ्कणकेयूर - मरीचिकरपल्लवैः।**
**चतुर्भिः सविराजन्तं बाहुमन्दारशाखिभिः।।२०।।**

मणिकङ्कणकेयूरमरीचिकरपल्लवैः कङ्कणं च केयूरं च कङ्कणकेयूरे मणिमये च ते कङ्कणकेयूरे मणिकङ्कणकेयूरे तयोः मरीचिभिः शोभमानाः कराः पल्लवाः इव येषां तैः मणिकङ्कणकेयूरमरीचिकरपल्लवैः - मणिखचित-कङ्कणानां केयूराणां च कान्तिभिः शोभायमानकरपल्लवचतुष्कयुक्तैः, बाहुमन्दारशाखिभिः बाहवः मन्दारशाखिनः इव वर्तमानैः चतुर्भिः करपल्लवैः सविराजन्तं शोभमानं परमेश्वरम्।

मरीचिकर-इत्यत्र रूपकध्वनिः, करपल्लवैः, बाहुमन्दार-शाखिभि-रित्यत्र उपमा।

**गौरीपयोधराश्लेषकृतार्थ - भुजमध्यमम्।**
**सुवर्णब्रह्मसूत्राङ्कं सूक्ष्मकौशेयवाससम्।।२१।।**

गौर्याः पयोधरः गौरीपयोधरः तस्य आश्लेषः गौरीपयोधराश्लेषः, तेन कृतार्थः भुजयोः मध्यमः यस्य तम् गौरीपयोधराश्लेषकृतार्थ (भुजमध्यमम्) हृदयभागम्, सुवर्णब्रह्मसूत्राङ्कम् सुवर्णमयं च तत् ब्रह्मसूत्रं च सुवर्णब्रह्मसूत्रम् एव अङ्कं यस्य तं सुवर्णमयब्रह्म-सूत्रयुक्तम्, सूक्ष्मकौशेयवाससम् सूक्ष्मं च तत् कौशेयं च सूक्ष्मकौशेयम् तदेव वासः यस्य सः तम् सूक्ष्मकौशेयवाससम् परमेश्वरम्।

पूर्वार्धे शृङ्गाररसः ध्वन्यते।

**नाभिस्थानावलम्बिन्या नवमौक्तिकमालया।**
**गङ्गयेव कृताश्लेषं मौलिभागावतीर्णया।।२२।।**

नाभिस्थानावलम्बिन्या नाभिस्थानं यावत् अवलम्बिन्या, नवमौक्तिकमालया नवानि च तानि मौक्तिकानि नवमौक्तिकानि, तेषां मालया नवमौक्तिकमालया, मौलिभागावतीर्णया मौलिभागात् अवतीर्णया मौलिभागावतीर्णया जटाभारात् अवतीर्णया गङ्गया कृताश्लेषम् इव वर्तमानम् कृतः आश्लेषः येन तम् तमिव वर्तमानं परमेश्वरम्। अत्र उत्प्रेक्षालङ्कारः मौक्तिकमालायां गङ्गावतरणस्य सम्भावनात्। 'सम्भावना स्यादुत्प्रेक्षा' इति लक्षणम्।

**पदेन मणिमञ्जीरप्रभा - पल्लवितश्रिया।**
**चन्द्रवत् स्फाटिकं पीठं समावृत्य स्थितं पुरः।।२३।।**

मणिमंञ्जीराणां प्रभा मणिमञ्जीरप्रभा तया पल्लविता श्रीः यस्य तेन मणिमञ्जीरप्रभापल्लवितश्रिया मणिमयनूपुराणां कान्त्या पल्लवितकान्तियुक्तेन पदेन पादेन पुरः सिंहासनस्य अग्रभागे स्थितं वर्तमानं चन्द्रवत् चन्द्रस्य कान्तिरिव शोभमानं स्फाटिकं स्फटिकविकारात्मकं स्फटिकनिर्मितं पीठं समावृत्य स्थितं परमेश्वरम्।

## इतः परं पार्वत्याः वर्णनम्

**वामपार्श्वनिवासिन्या मङ्गलप्रियवेषया।**
**समस्तलोकनिर्माणसमवायस्वरूपया ।।२४।।**

वामपार्श्वनिवासिन्या शिवस्य वामपार्श्वे निवासिन्या, मङ्गलप्रियवेषया मङ्गलश्च प्रियश्च मङ्गलप्रियौ मङ्गलप्रियौ वेषौ यस्याः तया मङ्गलप्रियवेषया मङ्गलसूत्रकेन प्रियेण च वेषेण युक्तया, समस्तलोकनिर्माणसमवायस्वरूपया समस्ताश्च ते लोकाश्च समस्तलोकाः तेषां लोकानां निर्माणम् समस्तलोकनिर्माणम् तस्मिन् निर्माणे समवायः एव स्वरूपं यस्याः तया समस्त-लोकनिर्माण-समवायस्वरूपया उमया सममासीनम् परमेश्वरम्।

**इच्छाज्ञानक्रियारूपबहु - शक्तिविलासया।**
**विद्यातत्त्वप्रकाशिन्या विनाभावविहीनया।।२५।।**

इच्छा च ज्ञानं च क्रिया च इच्छाज्ञानक्रियाः एताः एव रूपं यासां ताः इच्छाज्ञानक्रियारूपाः एतादृशरूपाश्च ताः बह्व्यः शक्तयः च इच्छाज्ञानक्रियारूपबहुशक्तयः तासां विलासः यस्याः तया इच्छाज्ञानक्रियारूपबहुशक्तिविलासया इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिभिः युक्तया, विद्यातत्त्वप्रकाशिन्या विद्यातत्त्वस्य प्रकाशिनी या सा तया विद्यातत्त्वप्रकाशिन्या, आत्मविद्याप्रकाशिन्या अथवा विद्यातत्त्वस्य प्रकाशिन्या विनाभावविहीनया विनाभावेन विहीनया अविनाभावरूपेण वर्तमानया उमया सममासीनम्—

**संसारविषकान्तारदाहदावाग्निलेखया ।**
**धम्मिल्लमल्लिकामोदझङ्कुर्वद्भृङ्गमालया ।।२६।।**

संसारः एव विषपूर्णं कान्तारं संसारविषकान्तारं तस्य दाहः संसारविषकान्तारदाहः, तस्मिन् दाहे विषये दावाग्नेः लेखा (इव वर्तमाना) या तया संसारविषकान्तारदाहदावाग्निलेखया संसाररूपविषवृक्षभरितकाननस्य दहनकार्ये दावाग्निलेखया धम्मिलमल्लिकामोदझङ्कुर्वद्भृङ्गमालया धम्मिल्ले मल्लिकाः धम्मिल्लमल्लिकाः तासाम् आमोदः धम्मिल्लमल्लिकामोदः तेन झङ्कुर्वन्ती भृङ्गाणां माला यस्यां सा तया धम्मिल्ल-मल्लिकामोदझङ्कुर्वद्-भृङ्गमालया केशपाशस्थानां मल्लिकापुष्पाणाम् मकरन्दपानेन झङ्कारं कुर्वद्भिः भ्रमरसमूहैः युक्तया उमया। संसारविषकान्तार-इत्यत्र रूपकम्, दावाग्निलेखा - इत्यत्र उपमा।

**सम्पूर्णचन्द्रसौभाग्य - संवादिमुखपद्मया ।**
**नासामौक्तिकलावण्यनाशीरस्मितशोभया ।।२७।।**

सम्पूर्णचन्द्रसौभाग्यसंवादिमुखपद्मया सम्पूर्णश्च असौ चन्द्रश्च सम्पूर्णचन्द्रः तस्य सौभाग्यं सम्पूर्णचन्द्रसौभाग्यं तेन संवादि मुखमेव पद्मं यस्याः सा तया सम्पूर्णचन्द्रसौभाग्यसंवादिमुखपद्मया पूर्णचन्द्रस्य कान्तिवत् शोभमान - मुखकमलया, नासामौक्तिकलावण्य - नाशीरस्मितशोभया-नासायाः मौक्तिकं नासा मौक्तिकं तस्य लावण्यं नासामौक्तिकलावण्यं तस्य नाशीरं च तत् स्थितं च नासामौक्तिकलावण्यनाशीरस्मितं तस्य शोभा यस्याः तया नासा मौक्तिकलावण्यनाशीरस्थितशोभया-नासिक मौक्तिकस्य लावण्येन

जयनशील-मन्द-स्मितशोभावत्या उमया। चन्द्रसौभाग्यसंवादि-अत्र उपमा, मुखपद्मया - अत्र रूपकम्, उत्तरार्धेऽपि उपमाध्वनिः।

**मणिताटङ्करङ्गान्तर्वलितापाङ्गलीलया ।**
**नेत्र - द्वितयसौन्दर्य - निन्दितेन्दीवरत्विषा ।।२८।।**

मणिताटङ्करङ्गान्तर्वलितापाङ्गलीलया मणिमयताटङ्कमेव रङ्गं मणिताटङ्करङ्गं तस्य अन्तः मणिताटङ्करङ्गान्तः तत्र वलितः च असौ अपाङ्गश्च मणिताटङ्करङ्गान्तर्वलितापाङ्गः तस्य लीला यस्याः तया मणिताटङ्करङ्गान्तर्वलितापाङ्गलीलया-मणिमयकर्णाभरणद्वयमध्यभागरूपस्य रङ्गस्य अन्तः लास्यमानकटाक्षलीलायुक्तया; नेत्रद्वितयसौन्दर्यनिन्दितेन्दीवरत्विषा नेत्रयोः द्वितयं नेत्रद्वितयं तस्य सौन्दर्यं नेत्रद्वितयसौन्दर्यं तेन निन्दिता इन्दीवरयोः त्विट् यया सा तया-नेत्रद्वयसौन्दर्येण तिरस्कृतेन्दीवरकान्तियुक्तया उमया सममासीनम्। ताटङ्करङ्ग-अत्र रूपकम्, उत्तरार्धे उपमाध्वनिः।

**कुसुमायुधकोदण्डकुटिलभ्रूविलासया ।**
**बन्धूककुसुमच्छायाबन्धुभूताधरश्रिया ।।२९।।**

कुसुमायुधकोदण्डकुटिलभ्रूविलासया-कुसुमायुधस्य कोदण्डः कुसुमायुधकोदण्डः स इव कुटिला भ्रूः कुसुमायुधकोदण्डकुटिलभ्रूः तस्याः विलासः इव विलासः यस्याः तया कुसुमायुधकोदण्डकुटिलभ्रूविलासया मन्मथस्य कोदण्डवत् कुटिलया भ्रुवा भ्रूद्वयेन शोभमानया, बन्धूक-कुसुमच्छायाबन्धुभूताधरश्रिया बन्धूकं च तत् कुसुमं च बन्धूककुसुमं तस्य छाया बन्धूककुसुमच्छाया तया साकं बन्धुभूतः अधरः बन्धूककुसुमच्छायाबन्धुभूताधरः तस्य श्रीरिव श्रीर्यस्याः तया बन्धूककुसुमच्छाया - बन्धुभूताधरश्रिया-बन्धूककुसुमवत् शोभायमानाधरयुक्तया उमया। पूर्वार्धे उत्तरार्धे च उपमाध्वनिः।

**कण्ठनालजितानङ्गकम्बु - बिब्बोकसम्पदा।**
**बाहुंद्वितयसौभाग्य - वञ्चितोत्पलमालया।।३०।।**

कण्ठनालजितानङ्गकम्बु-बिब्वोक-सम्पदा-कण्ठस्य नालः कण्ठनालः तेन जितः अनङ्गस्य कम्बुः कण्ठनालजितानङ्गकम्बुः तस्य बिब्बोकः एव

सम्पत् यस्याः तया कण्ठनाल - जितानङ्गकम्बुबिब्बोक - सम्पदा-स्वस्याः पार्वत्याः मधुरकण्ठध्वनिना पराजितमन्मथशङ्खविलासवैभवया, शङ्खध्वनिवत् मधुरकण्ठध्वनियुक्तया, बाहुद्वितयसौभाग्यं तेन वञ्चिता उत्पलमाला यया तया बाहुद्वितयसौभाग्यवञ्चितोत्पलमालया उत्पलमालाद्वयवत् कोमलबाहुयुगलयुक्तया उमया–

अत्रापि पूर्वार्धे उत्तरार्धे च उपमाध्वनिः।

**स्थिरयौवनलावण्य　　शृङ्गारितशरीरया।**
**अत्यन्तकठिनोत्तुङ्गपीवरस्तनभारया　　।।३१।।**

स्थिरयौवनलावण्यशृङ्गारित - शरीरया – स्थिरं च तत् यौवनं च स्थिरयौवनं तस्य लावण्यं स्थिरयौवनलावण्यं तेन शृङ्गारितं शरीरं यस्याः तया- शाश्वतिकयौवनलावण्येन अलङ्कृतशरीरया, (स्थिरयौवनलावण्यशृङ्गारित-शरीरया), अत्यन्त-कठिनोत्तुङ्गपीवरस्तनभारया-अत्यन्तं कठिनौ च उत्तुङ्गौच पीवरौ च स्तनौ अत्यन्त-कठिनोत्तुङ्गपीवरस्तनौ तयोः भारः यस्याः तया अत्यन्तकठिनोत्तुङ्ग-पीवरस्तनभारया कठिनोत्तुङ्गपीवरस्तनद्वय-शोभायुक्तया उमया - उमायाः अत्र स्वरूपवर्णनात् अथवा स्वभाववर्णनात् स्वभावोक्त्यलङ्कारः। अस्य लक्षणम्–

'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्'।

**मृणालवल्लरीतन्तुबन्धुभूतावलग्नया　　।**
**शृङ्गारतटिनीतुङ्ग - पुलिन - श्रोणिभारया।।३२।।**

मृणालवल्लरी - तन्तुबन्धुभूतावलग्नया - मृणालस्य वल्लरी मृणालवल्लरी तस्याः तन्तुः मृणालवल्लरीतन्तुः तया सह बन्धुभूतम् अवलग्नं यस्याः तया मृणालवल्लरी - तन्तुबन्धुभूतावलग्नया - कमलनालतन्तुवत् अत्यन्तसूक्ष्मकटिभागवत्या, शृङ्गारतटिनीतुङ्गपुलिन-श्रोणिभारया-शृङ्गारः एव तटिनी शृङ्गारतटिनी तस्याः तुङ्गं च तत् पुलिनं च शृङ्गारतटिनी - तुङ्गपुलिनं पुलिनमिव श्रोणिः शृङ्गारतटिनीतुङ्गपुलिनश्रोणिः तस्याः भारः यस्यां सा तया शृङ्गारतटिनीतुङ्गपुलिनश्रोणिभारया

शृङ्गाररसनदीकूलस्थोत्तुङ्ग - पुलिन (सैकत) राशिवत् उत्तुङ्ग-श्रोणिभागयुक्तया उमया—

अत्रापि स्वभावोक्तिः, पूर्वार्धे उत्तरार्धे च उपमाध्वनिः।

**कुसुम्भकुसुमच्छायाकोमलाम्बरशोभया ।**
**शृङ्गारोद्यानसंरम्भरम्भास्तम्भोरुकाण्डया ।।३३।।**

कुसुम्भकुसुमच्छायाकोमलाम्बरशोभया कुसुम्भं च तत् कुसुमं च कुसुम्भकुसुमं तस्य छाया कुसुम्भकुसुमच्छाया सा इव कोमलं च तत् अम्बरं च कुसुम्भकुसुमच्छायाकोमलाम्बरं तस्य शोभा यस्याम् तया कुसुम्भकुसुमच्छायाकोमलाम्बरशोभया-कुसुम्भकुसुमकान्तिवत् कोमलवस्त्रधारिण्या, शृङ्गारोद्यान - संरम्भरम्भास्तम्भोरुकाण्डया शृङ्गारस्य उद्यानं शृङ्गारोद्यानं तस्य संरम्भः शृङ्गारोद्यानसंरम्भः तत्र यः रम्भास्तम्भः शृङ्गारोद्यान- संरम्भरम्भास्तम्भः स इव ऊरुकाण्डः यस्याः तया शृङ्गारोद्यानसंरम्भ-रम्भास्तम्भोरुकाण्डया शृङ्गारोद्यानस्थरम्भास्तम्भवत् मनोहरोरुद्वयशोभया उमया—

उपमाध्वनिः। शृङ्गारोद्यान-इत्यत्र रूपकम्। रम्भास्तम्भोरुकाण्ड-अत्रापि उपमा। स्वभावोक्तिश्च।

**चूतप्रवालसुषमा - सुकुमारपदाब्जया।**
**स्थिरमङ्गलशृङ्गारभूषणालङ्कृताङ्गया ।।३४।।**

चूतप्रवालसुषमासुकुमारपदाब्जया-चूतस्य प्रवालः चूत-प्रवालः तस्य सुषमा चूतप्रवालसुषमा सा इव सुकुमारौ पदौ अब्जे इव यस्याः तया चूतप्रवालसुषमासुकुमारपदाब्जया चूतप्रवालवत् कोमलकान्तियुक्त-कमलद्वय-सदृशपादयुगलयुक्तया, स्थिरमङ्गलशृङ्गारभूषणालङ्कृताङ्गया-स्थिरश्च मङ्गलश्च यः शृङ्गारः स्थिरमङ्गलशृङ्गारः तेन युक्तानि भूषणानि स्थिरमङ्गलशृङ्गारभूषणानि-तैः अलङ्कृतम् अङ्गं यस्याः तया स्थिरमङ्गलशृङ्गारभूषणालंकृताङ्गया स्थिरैः मङ्गलात्मकैः शृङ्गारभरितैः अलङ्कारैः शोभमानशरीरवत्या-उमया—

चूतप्रवालसुषमा - अत्र उपमा, पदाब्जया-अत्र रूपकम् स्वभावोक्तिश्च।

**हारनूपुरकेयूर - चमत्कृतशरीरया।**
**चक्षुरानन्दलतया सौभाग्यकुल - विद्यया।।३५।।**

हारनूपुरकेयूरचमत्कृतशरीरया - हारश्च नूपुरश्च केयूरं च हारनूपुरकेयूराणि तैः चमत्कृतं शरीरं यस्याः तया-हारनूपुरकेयूरचमत्कृतशरीरया हारनूपुरकेयूरादिभिः आभरणैः चमत्कारतया अलङ्कृतशरीरया, चक्षुरानन्दलतया-चक्षुषः आनन्दस्य लता इव वर्तमानया चक्षुरानन्दलतया आनन्दलतावत् नेत्रानन्दकारिण्या, सौभाग्यकुलविद्यया सौभाग्यस्य कुलविद्या इव वर्तमानया सौभाग्यकुलविद्यया उमया—

उत्तरार्धे उपमालङ्कारः, स्वभावोक्तिः समग्रश्लोके।

**उमया सममासीनं लोककालकुटुम्बया।**
**अपूर्वरूपमभजन् परिवाराः समन्ततः।।३६।।**

लोकजालकुटुम्बया लोकस्य जालं लोकजालं, लोकजालमेव कुटुम्बं यस्याः तया लोकजालकुटुम्बया समस्तलोककुटुम्बवत्या, उमया समम् रत्नसिंहासनमासीनम्,. अपूर्वरूपम् अपूर्वं रूपं यस्य तं अपूर्वरूपं परमेश्वरं परिवाराः परिवारदेवताः समन्ततः समन्तात् अपि अभजन् सेवां कृतवन्तः। **अभजन्-** भज-सेवायां, लङ्।

**परिवारकृतसेवाप्रकारः**

**पुण्डरीकाकृतिं स्वच्छं पूर्णचन्द्रसहोदरम्।**
**दधौ तस्य महालक्ष्मीः सितमातपवारणम्।।३७।।**

स्वच्छं परिशुभ्रं, पुण्डरीकाकृतिं पुण्डरीकस्य आकृतिः इव वर्तमानम्, पूर्णचन्द्रसहोदरं पूर्णचन्द्रस्य सहोदरः इव वर्तमानम् पूर्णचन्द्रसदृशं सितं शुभ्रवर्णविशिष्टम् आतपवारणम् आतपं वारयतीति आतपवारणं छत्रम् तस्य परमेश्वरस्य महालक्ष्मीः दधौ धृतवती।

उपमालङ्कारः। दधौ-डु-धाञ्-धारणपोषणयोः, लिट्। दधौ दधतुः दधुः - इत्यादि।

**तन्त्रीझङ्कारशालिन्या सङ्गीतामृतविद्यया।**
**उपतस्थे महादेवमुपान्ते च सरस्वती।।३८।।**

तन्त्रीझङ्कारशालिन्या तन्त्रीणां झङ्कारं शालते इति तन्त्रीझङ्कारशालिनी तया तन्त्रीझङ्कारशालिन्या स्ववीणायाः तन्त्रीणां झङ्कारध्वनियुक्तया, सङ्गीतामृतविद्यया संगीतम् एव अमृतविद्या सङ्गीतामृतविद्या तया सङ्गीतामृतविद्यया मधुरसङ्गीतगानेन सरस्वती च महादेवम् उपान्ते महादेवस्य समीपे उपतस्थे सेवां कृतवती।

**उपतस्थे** - इत्यत्र 'उपाद्देवपूजासङ्गतिकरणमित्रकरणदानेष्विति वाच्यम्' इतिवार्तिकेन आत्मनेपदत्वम्।

उप+ष्ठा-गतिनिवृत्तौ, आत्मने, लिट्

उपतस्थे उपतस्थाते उपतस्थिरे इत्यादि।

सङ्गीतामृतविद्यया-इत्यत्र रूपकम्।

**झणत्कङ्कण - जातेन हस्तेनोपनिषद्वधूः।**
**ओंकारतालवृन्तेन वीजयामास शङ्करम्।।३९।।**

झणन्ति च तानि कङ्कणानि च झणत्कङ्कणानि तेषां जातं यस्मिन् तेन झणत्कङ्कणजातेन मणिमयकङ्कणसमूहयुक्तेन, हस्तेन, उपनिषद्वधूः उपनिषत्कन्या ओंकारतालवृन्तेन ओंकारः एव तालवृन्तं ओंकारः एव तालवृन्तं तेन ओंकारतालवृन्तेन ओंकाररूपतालपत्रेण शङ्करं वीजयामास।

**वीजयाम् + आस**, आस-उपवेशने, आत्मने लिट्।

आस आसतुः आसुः इत्यादि।

**चलच्चामरिकाहस्ता झङ्कुर्वन्मणिकङ्कणाः।**
**आसेवन्त तमीशानमभितो दिव्यकन्यकाः।।४०।।**

चलच्चामरिका - हस्ताः चलन्त्यः चामरिकाः चलच्चामरिकाः, चलच्चामरिकाः हस्ते यासां ताः चलच्चामरिकाहस्ताः वीजमानचामरयुक्तहस्ताः झङ्कुर्वन्मणिकङ्कणाः झङ्कुर्वन्ति मणिमयकङ्कणानि यासां ताः झङ्कुर्वन्मणिकङ्कणाः झङ्कारं कुर्वद्भिः मणिमयकङ्कणैः युक्ताः, दिव्यकन्यकाः दिव्याश्च ताः कन्यकाश्च दिव्यकन्यकाः तम् ईशानं तमीश्वरम् अभितः समन्ततः आसेवन्त सेवयामासुः। तम् अभितः - अत्र 'अभितः परितः समया निकषा हाप्रतियोगेऽपि' इति

वार्तिकेन द्वितीयाविभक्तित्वम्।

**आसेवन्त** – आ+षेवृ-सेवने, लङ् –
आसेवत आसेवेताम् आसेवन्त - इत्यादि।
स्वभावोक्तिः।

**चामराणां विलोलानां मध्ये तन्मुखमण्डलम्।**
**रराज राजहंसानां भ्रमतामिव पङ्कजम्।।४१।।**

विलोलानां चलनशीलानां चामराणां मध्ये तन्मुखमण्डलं तस्य मुखमण्डलम् परमेश्वरस्य मुखं तावत्, भ्रमतां सरसि भ्रमणशीलानां राजहंसानां मध्ये पङ्कजम् इव कमलमिव रराज प्रकाशयुक्तः अभवत्।

वाक्यार्थोपमालङ्कारः। चामराणि उपमेयम्, राजहंसाः उपमानम्, शिवः उपमेयम्, पङ्कजम् उपमानम्। **रराज**-राजृ-दीप्तौ, लिट्-रराज रेजतुः रेजुः इत्यादि।

**मन्त्रेण तमसेवन्त वेदाः साङ्गविभूतयः।**
**भक्त्या चूडामणिं कान्तं वहन्त इव मौलिभिः।।४२।।**

साङ्गविभूतयः अङ्गैः सह वर्तते इति साङ्गा, साङ्गा विभूतिः येषां ते साङ्गविभूतयः शिक्षा, व्याकरणम्, छन्दः, निरुक्तम्, ज्यौतिषम्, कल्पश्चेति षडङ्गरूपैःऐश्वर्यैः युक्ताः वेदाः ऋग्वेदः यजुर्वेदः सामवेदः अथर्वणवेदश्चेति चत्वारो वेदपुरुषाः मौलिभिः शिरोरूपाभिः उपनिषद्भिः कान्तं मनोहरं चूडामणिं वहन्तः इव मन्त्रेण ओंकारेण भक्त्या तं परमेश्वरम् असेवन्त।

चूडामणिं वहन्तः इव इत्यत्र क्रियोत्प्रेक्षालङ्कारः वहनक्रियायाः उत्प्रेक्षणात्।

'**तदीयायुधधारिण्यस्तत्समान - विभूषणाः।**
**अङ्गभूताः स्त्रियः काश्चिदासेवन्त तमीश्वरम्।।४३।।**

तदीयायुधधारिण्यः तस्य इमानि तदीयानि तदीयानि च तानि आयुधानि तदीयायुधानि तानि धर्तुं शीलमस्ति आसामिति तदीयायुधधारिण्यः शिवसम्बंन्धीनि आयुधानि धृतवत्यः तत्समानविभूषणाः तेन समानं तत्समानं तत्समानानि विभूषणानि यासां ताः तत्समानविभूषणाः शिवसमानवेषभूषादिवत्यः

काश्चित् स्त्रियः अङ्गभूताः सत्यः सेवकीभूताः सत्यः तम् ईश्वरम् आसेवन्त।

**आप्ताधिकारिणः केचिदनन्तप्रमुखा अपि।**
**अष्टौ विद्येश्वरा देवमभजन्त समन्ततः।।४४।।**

आप्ताधिकारिणः आप्ताश्च ते अधिकारिणश्च आप्ताधिकारिणः अनन्तप्रमुखाः केचित् अनन्तः प्रमुखः येषां ते अनन्तप्रमुखाः अनन्तः, सूक्ष्मः शिवोत्तमः, एकनेत्रः, एकरुद्रः, त्रिमूर्तिः, श्रीकण्ठः, शिखण्डी इत्यात्मिकाः अष्टौ विद्येश्वराः अपि समन्ततः देवम् अभजन्त।

**अभजन्त**-भज-सेवायाम्, लङ्।

**ततो नन्दी महाकालश्चण्डो भृङ्गी रिटिस्तथा।**
**घण्टाकर्णः पुष्पदन्तः कपाली वीरभद्रकः।।४५।।**

**एवमाद्या महाभागा महाबलपराक्रमाः।**
**निरङ्कुशमहासत्त्वा भेजिरे तं महेश्वरम्।।४६।।**

महाबलपराक्रमाः महाबलशालिनः, निरङ्कुशमहासत्त्वाः अङ्कुशरहित-महाप्रक्रमाः, ततः अनन्तरम् - नन्दी, महाकालः, चण्डः, भृङ्गी, रिटिः, घण्टाकर्णः, पुष्पदन्तः, कपाली, वीरभद्रः (कः) - एवमाद्याः महाभागाः तं महेश्वरं भेजिरे।

**भेजिरे**-भज-सेवायाम् लिट्,

भेजे भेजाते भेजिरे इत्यादि।

**अणिमादिकमैश्वर्यं येषां सिद्धेरपोहनम्।**
**ब्रह्मादयः सुरा येषामाज्ञालङ्घनभीरवः।।४७।।**

येषां नन्द्यादीनां प्रमथानाम् अणिमादिकम् ऐश्वर्यम्-अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वम् इति अष्टसिद्धिरूपमैश्वर्यं सिद्धेः = तैः साधितसिद्धेः अपोहनं तुच्छमेव वर्तते, अपि च, ब्रह्मादयः सुराः येषां प्रमथानाम् आज्ञालङ्घनभीरवः आज्ञायाः लङ्घने भयभीताः सन्ति ते महाभागाः भेजिरे।

**मोक्षलक्ष्मीपरिष्वङ्गमुदिता येऽन्तरात्मना।**
**येषामीषत्करं विश्वसर्गसंहारकल्पनम्।।४८।।**

ये-ये प्रमथाः, अन्तरात्मना सर्वेषामन्तरङ्गेन मोक्षलक्ष्मीपरिष्वङ्गमुदिताः मोक्षलक्ष्म्याः परिष्वङ्गेन आलिङ्गनेन मुदिताः सन्तुष्टाः सन्तः वर्तन्ते, अपि च, येषां प्रमथानां विश्वसर्गसंहारकल्पनम् - विश्वस्य सर्गश्च संहारश्च सर्गसंहारौ, तयोः कल्पनं तावत् कृत्यं तावत् ईषत्करं किञ्चित्करं वर्तते ते भेजिरे।

**ज्ञानशक्तिः परा येषां सर्ववस्तु-प्रकाशिनी।**
**आनन्दकणिका येषां हरिब्रह्मादि-सम्पदः।।४९।।**

येषां प्रमथानां सर्ववस्तु-प्रकाशिनी सर्वाणि च तानि वस्तूनि च सर्ववस्तूनि सर्ववस्तूनि प्रकाशयति इति सर्ववस्तुप्रकाशिनी सर्ववस्तु-प्रकाशकरण-सामर्थ्यवती ज्ञानशक्तिः परा श्रेष्ठतमा वर्तते, अपि च, येषां प्रमथानां हरिब्रह्मादिसम्पदः हरिः ब्रह्मा आदीनां देवानां सम्पदः तावत् आनन्दकणिकाः आनन्दस्य कणिकाः आनन्दकणिकाः येषां शिवानन्दस्य पुरः केवलमल्प्याः वर्तन्ते ते अभजन्त।

**आकाङ्क्षन्ते पदं येषां योगिनो योगतत्पराः।**
**काङ्क्षणीयफलो येषां सङ्कल्पः कल्पपादपः।।५०।।**

योगतत्पराः शिवयोगे तत्पराः योगिनः येषां प्रमथानां पदं स्थानम् आकाङ्क्षन्ते अपेक्षन्ते, अपि च, येषां प्रमथानां सङ्कल्पः मनोनिश्चयस्तु काङ्क्षणीयफलः काङ्क्षणीयं काङ्क्षितुं योग्यं काङ्क्षणीयं फलं येन सः काङ्क्षणीय-फलः अपेक्षितफलदायकः कल्पपादपः कल्पवृक्षः अस्ति तादृशाः ते भेजिरे।

**आकाङ्क्षन्ते** - आ + काक्ष् - काङ्क्षायाम्, लट्-

आकाङ्क्षते आकाङ्क्षेते आकाङ्क्षन्ते इत्यादि।

**कर्मकालादिकार्पण्यचिन्ता येषां न विद्यते।।**
**येषां विक्रमसन्नाहा मृत्योरपि च मृत्यवः।।५१।।**

येषां-येषां प्रमथानाम् कर्मकालादिकार्पण्यचिन्ता-कर्म च कालश्च आदिः येषां ते कर्मकालादयः तेषां कार्पण्यं कर्मकालादिकार्पण्यं तस्य चिन्ता

कर्मकालादिकार्पण्यचिन्ता - सञ्चितागामिप्रारब्धरूपकर्मणाम् भूतभविष्यद्वर्तमानरूपकालानाम् आदिपदेन कामादयः इत्येतेषां विषये दैन्यभावस्य चिन्ता एव न विद्यते, येषां च विक्रमसन्नाहाः विक्रमस्य सन्नाहाः विक्रमसन्नाहाः पराक्रमस्य प्रसङ्गाः तावत् मृत्योः अपि यमस्यापि मृत्यवः इव वर्तमानाः सन्ति, अपि च सारूप्यपदं शिवेन साकं सारूप्यस्य पदं सारूप्यपदं सारूप्यं प्राप्ताः सन्ति ते प्रमथाः शिवं भेजिरे।

**ब्रह्मोपेन्द्रमहेन्द्राद्या विश्वतन्त्राधिकारिणम्।**
**आयुधालङ्कृतप्रान्ताः परितस्तं सिषेविरे।।५२।।**

ब्रह्मोपेन्द्रमहेन्द्राद्याः ब्रह्मा च उपेन्द्रश्च महेन्द्रश्च आदिः येषां ते ब्रह्मोपेन्द्रमहेन्द्राद्याः ब्रह्मा विष्णुः इन्द्रः इत्यादयः सर्वे देवाः आयुधालङ्कृतप्रान्ताः आयुधैः अलङ्कृतः प्रान्तः येषां ते आयुधालङ्कृतप्रान्ताः स्वस्वायुधैः अलङ्कृतहस्ताः सन्तः विश्वतन्त्राधिकारिणं विश्वस्य तंन्त्रं विश्वतन्त्रं तत्र अधिकारिणं विश्वतन्त्राधिकारिणं-सर्वस्यापि जगतः सृष्टिस्थित्यादिपञ्चकृत्येषु अधिकारयुक्तं तं शिवं सिषेविरे।

**आदित्या वसवो रुद्रा यक्षगन्धर्वकिन्नराः।**
**दानवा राक्षसा दैत्याः सिद्धा विद्याधरोरगाः।।**
**अभजन्त महादेवमपरिच्छिन्न - सैनिकाः।।५३।।**

आदित्याः द्वादशादित्याः, वसवः अष्टौ वसवः, रुद्राः एकादश रुद्राः, यक्षगन्धर्वकिन्नराः यक्षाश्च गन्धर्वाश्च किन्नराश्च यक्षगन्धर्वकिन्नराः कुबेरप्रभृतयः यक्षाः, हाहाप्रभृतयः गन्धर्वाः, अश्वमुखादयः किन्नराः, दानवाः बाणादयः दानवाः, राक्षसाः रावणादयः राक्षसाः, दैत्याः तारकादयो दैत्याः, सिद्धाः आदिनाथादयः सिद्धाः, विद्याधरोरगाः विद्याधराश्च उरगाश्च विद्याधरोरगाः मणिभद्रादयः विद्याधराः, शेषादयः उरगाः इत्येते सर्वे अपरिच्छिन्न-सैनिकाः सन्तः अपरिच्छिन्नाश्च ते सैनिकाश्च अपरिच्छिन्नसैनिकाः अविच्छिन्न-सैनिकत्वं प्राप्ताः सन्तः महादेवम् अभजन्त।

**वसिष्ठो वामदेवश्च पुलस्त्यागस्त्य-शौनकाः।**
**दधीचिर्गौतमश्चैव सानन्दशुकनारदाः।।५४।।**

**उपमन्युभृगुव्यासपाराशरमरीचयः ।**
**इत्याद्या मुनयः सर्वे नीलकण्ठं सिषेविरे।।५५।।**

वसिष्ठः, वामदेवः, पुलस्त्यागस्त्यशौनकाः पुलस्त्यश्च अगस्त्यश्च शौनकश्च पुलस्त्यागस्त्यशौनकाः पुलस्त्यः, अगस्त्यः, शौनकः, दधीचिः, गौतमः, सानन्दशुकनारदाः सानन्दश्च शुकश्च नारदश्च सानन्दशुकनारदाः सानन्दः, शुकः, नारदः, उपमन्युभृगुव्यासपाराशरमरीचयः उपमन्युश्च भृगुश्च व्यासश्च पाराशरश्च मरीचिश्च उपमन्युभृगुव्यासपाराशरमरीचयः उपमन्युः, भृगुः, व्यासः, पाराशरः, मरीचिः - इत्याद्याः सर्वे मुनयः नीलकण्ठं सिषेविरे।

**पार्श्वस्थ-परिवाराणां विमलाङ्गेषु बिम्बितः।**
**सर्वान्तर्गतमात्मानं स रेजे दर्शयन्निव।।५६।।**

पार्श्वस्थ-परिवाराणां पार्श्वे तिष्ठन्ति इति पार्श्वस्थाः पार्श्वस्थाश्च ते परिवाराश्च पार्श्वस्थपरिवाराः तेषां पार्श्वस्थपरिवाराणां पार्श्वे वर्तमानानां सर्वेषां परिवाराणां विमलाङ्गेषु विमलानि च तानि अङ्गानि च विमलाङ्गानि तेषु विमलाङ्गेषु परिशुद्धशरीरेषु बिम्बितः सन् प्रतिबिम्बितः सन् सः परमेश्वरः आत्मानं सर्वान्तर्गतमिव सर्वेषु अन्तर्गतमिव दर्शयन् सन् रेजे रराज।

अत्र उत्प्रेक्षालङ्कारः। **रेजे**-राजृदीप्तौ, लिट् - रेजे रेजाते इत्यादि।

## परमेश्वरस्य राजव्यापारवर्णनम्

**क्षणं स शम्भुर्देवानां कार्यभागं निरूपयन्।**
**क्षणं गन्धर्वराजानां गानविद्यां विभावयन्।।५७।।**

सः शम्भु, क्षणं क्षणकालं देवानां कार्यभागं कार्यस्य भागं कार्यभागं निरूपयन् निरूपयति इति निरूपयन् कथयन् सन्, क्षणं क्षणकालं गन्धर्वराजानां गन्धर्वाणां राजानः गन्धर्वराजाः तेषां गन्धर्वराजानां, गानविद्यां सङ्गीतं विभावयन् विभावयति इति विभावयन् शृण्वन् सन् रेणुकम् आह्वयत् इत्युत्तरत्र अन्वयः।

गन्धर्वाणां राजानः गन्धर्वराजाः - अत्र 'राजाहःसखिभ्यष्टच्' इति सूत्रेण टच्प्रत्यये नकारान्तः राजन् शब्दः अकारान्तो भवति।

**ब्रह्मविष्ण्वादिभिर्देवैः क्षणमालापमाचरन्।**
**क्षणं देवमृगाक्षीणां लालयन् नृत्यविभ्रमम्।।५८।।**

क्षणं क्षणकालं, ब्रह्मविष्ण्वादिभिः देवैः सह ब्रह्मा च विष्णुश्च आदिः येषां तैः ब्रह्मविष्ण्वादिभिः देवैः सह, आलापं वार्तालापम् आचरन् सन् आचरतीति आचरन् कुर्वन् सन्, क्षणं क्षणकालं देवमृगाक्षीणां देवतास्त्रीणां नृत्यविभ्रमं नृत्यस्य विभ्रमः तं नृत्यवैभवं लालयन् लालयति इति लालयन् दृष्ट्वा आनन्दयन् सन् सः रेणुकम् आह्वयत्।

**व्यासादीनां क्षणं कुर्वन् वेदोच्चारेषु गौरवम्।**
**विदधानः क्षणं देव्या मुखे बिम्बाधरे दृशः।।५९।।**

क्षणं क्षणकालं व्यासादीनाम् ऋषीणां वेदोच्चारेषु वेदानाम् उच्चारेषु गौरवं कुर्वन्, क्षणं देव्याः पार्वत्याः बिम्बाधरे बिम्बमिव अधरः यस्मिन् तस्मिन् बिम्बाधरयुते मुखे दृशः तिस्रः दृशः विदधानः प्रसारयन् सन्–

बिम्बाधरे इत्यत्र उपमा।

**हास्यनृत्यं क्षणं पश्यन् भृङ्गिणा परिकल्पितम्।**
**नन्दिना वेत्रहस्तेन सर्वतन्त्राधिकारिणा।।६०।।**

**अमुञ्चता सदा पार्श्वमात्माभिप्रायवेदिना।**
**चोदयन् वासयन् कांश्चिद्विसृजन् भ्रूविलासतः।।**
**संभावयंस्तथा चान्यानन्यानपि नियामयन्।।६१।।**

क्षणं भृङ्गिणा परिकल्पितं क्रियमाणं हास्यनृत्यं हास्यस्य नृत्यं पश्यन्, वेत्रहस्तेन वेत्रं हस्ते यस्य सः तेन वेत्रदण्डहस्तेन सर्वतन्त्राधिकारिणा सर्वाणि च तानि तन्त्राणि सर्वतन्त्राणि तेषु अधिकारः अस्ति अस्मिन् तेन सर्वतन्त्राधिकारिणा सर्वकार्यनिर्वहणसमर्थेन पार्श्वं सदा अमुञ्चता आत्माभिप्रायवेदिना आत्मनः अभिप्रायं वेत्ति इति तेन आत्माभिप्रायवेदिना आत्मनः इङ्गितज्ञेन समीपवर्तिना नन्दिना चोदितान् प्रचोदितान् कांश्चित् कान् चित् जनान् वासयन् उपवेशनं कारयन् कान् चित् जनान् भ्रूविलासतः भ्रुवोः विलासात् भ्रूसंज्ञया विसृजन् प्रेषयन्, तथा कान् चित् अन्यान् सम्भावयन् प्रियवचनपूर्वकं सन्तोषं सम्पादयन् अन्यान् अपि नियामयन् नियमनं कारयन्

रेणुकमाह्वयत्।

**समस्तभुवनाधीश - मौलिलालितशासनः।**
**अकुण्ठ - शक्तिरव्याजलावण्यललिताकृतिः।।६२।।**

समस्त-भुवनाधीश-मौलिलालितशासनःसमस्तानि च तानि भुवनानि तेषामधीशाः समस्तभुवनाधीशाः तेषां मौलयः समस्तभुवनाधीशमौलयः तैः मौलिभिः लालितं शासनं यस्य सः समस्तभुवनाधीशमौलिलालित-शासनः सर्वेषां भुवनाधीश्वराणां ब्रह्मविष्ण्वादीनां शिरोभिः धारितशासनः, अकुण्ठशक्तिः कुण्ठा न भवतीति अकुण्ठा अकुण्ठा शक्तिः यस्य सः अकुण्ठशक्तिः अप्रतिहतशक्तिमान् अव्याजलावण्यललिताकृतिः अव्याजं च तत् लावण्यं च अव्याजलावण्यं तेन ललिता आकृतिः यस्य सः अव्याजलावण्याकृतिः स्वभावसौन्दर्येण मनोहराकृतिः सन् ।

**स्थिर - यौवनसौरभ्यशृङ्गारित - कलेवरः।**
**आत्मशक्त्यमृतास्वादरसोल्लासित - मानसः।।६३।।**

स्थिर-यौवन-सौरभ्य - शृङ्गारितकलेवरः - स्थिरं च तत् यौवनं च स्थिरयौवनं तस्य सौरभ्यं स्थिरयौवनसौरभ्यं तेन शृङ्गारितः कलेवरः यस्य सः स्थिरयौवनसौरभ्यशृङ्गारितकलेवरः - वृद्धिक्षयरहितत्वात् स्थिरेण यौवनने मनोहरेण अलङ्कृत-शरीरवान् सन्, आत्मशक्त्यमृतास्वादरसोल्लासित-मानसः आत्मनः शक्तिरेव अमृतं आत्मशक्त्यमृतं तस्य आस्वादः आत्मशक्त्यमृतास्वादः तेन रसः आत्मशक्त्यमृतास्वादरसः तेन उल्लासितं मानसं यस्य सः आत्मशक्त्यमृतास्वादरसोल्लासितमानसः - स्वस्मिन् समवेतरूपेण वर्तमानशक्तिरूपस्य अमृतस्य आस्वादेन अनुभूयमानेन परमानन्देन उल्लासितचित्तः सन्—

**स्वाभाविकमहैश्वर्यविश्रामपरमावधिः　।**
**निष्कलङ्कमहासत्त्वनिर्मितानेकविग्रहः　।।६४।।**

स्वाभाविकमहैश्वर्यविश्रामपरमावधिः-स्वाभाविकं च तत् परमैश्वर्यं च स्वाभाविकपरमैश्वर्यं तस्य विश्रामः स्वाभाविकमहैश्वर्यविश्रामः तस्य विश्रामस्य परमश्चासौ अवधिश्च यस्य सः स्वाभाविकमहैश्वर्यविश्रामपरमावधिः स्वस्मिन्

वर्तमानस्य सर्वज्ञत्व-सर्वशक्तित्व-सर्वकर्तृत्वादिरूपस्य महदैश्वर्यस्य परमविश्रामभूमिरिव वर्तमानः निष्कलङ्कमहासत्त्वनिर्मितानेकविग्रहः-निष्कलङ्कं च तत् महासत्त्वं च निष्कलङ्कमहासत्त्वं तेन निर्मिताः अनेके च ते विग्रहाश्च येन सः निष्कलङ्कमहासत्त्वनिर्मितानेकविग्रहः कलङ्करहितेन स्वेन महासत्त्वेन स्वप्रेरणयैव स्वीकृताः चन्द्रशेखरत्वनीलकण्ठत्वादिलीलामयस्वरूपयुक्तः परमेश्वरः—

**अखण्डारातिदोर्दण्डकण्डूखण्डनपण्डितः।**
**चिन्तामणिः प्रपन्नानां श्रीकण्ठः परमेश्वरः।।६५।।**

अखण्डारातिदोर्दण्डकण्डखण्डनपण्डितः अखण्डाश्च ते अरातयश्च अखण्डारातयः तेषां दोर्दण्डः अखण्डारातिदोर्दण्डः तस्य कण्डूः अखण्डारातिदोर्दण्डकण्डूः तस्याः खण्डने पण्डितः यः सः समस्तानां सज्जनशत्रूणां दण्डवत् वर्तमानस्य बाहोः कण्डूयनस्य विनाशने समर्थः, प्रपन्नानां शरणागतानां चिन्तामणिः चिन्तामणिरिव सकलेष्टार्थप्रदायकः श्रीकण्ठः परमेश्वरः—

चिन्तामणिरिव चिन्तामणिः इति उपमाध्वनिः।

**।।श्रीरेणुकगणेश्वरस्य शिवभक्तिमहत्त्ववर्णनम्।।**

**सभान्तरगतं तन्त्रं रेणुकं गणनायकम्।**
**प्रसादं सुलभं दातुं ताम्बूलं स तमाह्वयत्।।६६।।**

सभान्तरगतं सभायाः अन्तः गतं सभामध्ये वर्तमानम्, तन्त्रं प्रमथगणेषु प्रमुखम्, गणनायकं तं रेणुकं तं रेणुकगणनायकम्, सुलभं सुलभतया लभ्यमानं ताम्बूलं प्रसादं ताम्बूलरूपं प्रसादं दातुं सः परमेश्वरः आह्वयत् आहूतवान्।

**आह्वयत्** - आ + ह्वेञ् - लङ् - आह्वयत् आह्वयताम् आह्वयन् इत्यादि।

**शम्भोराह्वानसन्तोषसम्भ्रमेणैव दारुकम्।**
**उल्लङ्घ्य पार्श्वमगमल्लोकनाथस्य रेणुकः।।६७।।**

शम्भोः परमेश्वरस्य आह्वानसन्तोषसम्भ्रमेण एव-आह्वानेन सन्तोषः

आह्वानसंतोषः तस्य सम्भ्रमः आह्वानसन्तोषसम्भ्रमः तेन आह्वानसन्तोषसम्भ्रमेण एव रेणुकः रेणुकगणाधीश्वरः (पार्श्वस्थं स्वसमीपस्थं) दारुकं दारुकगणाधीश्वरम् उल्लङ्घ्य लङ्घयित्वा लोकनाथस्य परमेश्वरस्य पार्श्वम् अगमत् आगतवान्।

**अगमत्–** गम्लृ-गतौ, लङ्-अगमत् अगमताम् - इत्यादि।

**तमालोक्य विभुस्तत्र समुल्लङ्घितदारुकम्।**
**माहात्म्यं निजभक्तानां द्योतयन्निदमब्रवीत्।।६८।।**

तत्र समामध्ये तदा विभुः परमेश्वरः समुल्लङ्घितदारुकं समुल्लङ्घितः दारुकः येन सः तं समुल्लङ्घितदारुकं दारुकस्य उल्लङ्घनं कृतवन्तं तं रेणुकम् आलोक्य निजभक्तानां स्वभक्तानां माहात्म्यं द्योतयन् लोके प्रकटीकुर्वन् सन् इदम् अब्रवीत् अकथयत्।

**अब्रवीत्** - ब्रूञ् - व्यक्तायाम् वाचि, लङ् -

अब्रवीत् अब्रूताम् अब्रुवन् इत्यादि।

**रे रे रेणुक दुर्बुद्धे कथमेष त्वयाधुना?।**
**उल्लङ्घितः सभामध्ये मम भक्तो हि दारुकः।।६९।।**

रे रे रेणुक! हे दुर्बुद्धे! त्वया अधुना एषः दारुकः सभामध्ये सभायाः मध्ये कथम् केन कारणेन उल्लङ्घितः उल्लङ्घनं कृतवान्? यतः दारुकः मम भक्तः हि!। भक्तस्य उल्लङ्घनं दोषभाक्।

**लङ्घनं मम भक्तानां परमानर्थकारणम्।**
**आयुः श्रियं कुलं कीर्तिं निहन्ति हि शरीरिणाम्।।७०।।**

मम भक्तानां लङ्घनं तावत् परमानर्थकारणं परमस्य अनर्थस्य कारणम्। यतः भक्तानां लङ्घनं हि, शरीरिणां मनुष्याणाम् आयुः, श्रियम्, कुलम्, कीर्तिं च निहन्ति नाशयति।

**निहन्ति** - नि + हन् - हिंसागत्योः, लट्

निहन्ति निहतः निघ्नन्ति इत्यादि।

**मम भक्तमवज्ञाय मार्कण्डेयं पुरा यमः।**
**मत्पादताडनादासीत् स्मरणीयकलेवरः।।४१।।**

पुरा यमः मम भक्तं मार्कण्डेयम् अवज्ञाय तिरस्कृत्य, तस्य प्राणहरणप्रवृत्तः सन् मत्पादताडनात् मम पादस्य ताडनात् कारणात् स्मरणीयकलेवरः स्मर्तुं योग्यः स्मरणीयः स्मरणीयः कलेवरः यस्य सः स्मरणीयकलेवरः स्मरणयोग्यशरीरवान् सन् आसीत् अभवत्।

**आसीत्** - अस-भुवि, लङ् - आसीत् आस्ताम् आसन्–

**भृगोश्च शङ्कुकर्णस्य मम भक्तिमतोस्तयोः।**
**कृत्वानिष्टमभूद् विष्णुर्विकेशो दशयोनिभाक्।।७२।।**

मम भक्तिमतोः भक्तियुक्तयोः भृगोः शङ्कुकर्णस्य च तयोः अनिष्टं कृत्वा विष्णुः विकेशः सन् केशरहितः सन् दशयोनिभाक् दशयोनिं भजते इति दशयोनिभाक् दशावतारभाक् अभूत्।

**अभूत्** - भू-सत्तायां, लुङ् - अभूत् अभूताम् अभूवन् इत्यादि।

**मद्भक्तेन दधीचेन कृत्वा युद्धं जनार्दनः।**
**भग्नचक्रायुधः पूर्वं पराभवमुपागमत्।।७३।।**

पूर्वं, मद्भक्तेन मम भक्तेन दधीचेन साकं जनार्दनः विष्णुः युद्धं कृत्वा भग्नचक्रं च तत् आयुधं यस्य सः भग्नचक्रायुधः सन् पराभवं पराजयम् उपागमत् प्राप्तवान्।

**उपागमत्** - उप+गम्लृ गतौ लङ् - अगमत् अगमताम् इत्यादि।

**कृताश्वमेधो दक्षोऽपि मद्भक्तांश्च गणेश्वरान्।**
**अवमत्य सभामध्ये मेषावक्त्रोऽभवत्पुरा।।७४।।**

पुरा दक्षः अपि कृताश्वमेधः कृतः अश्वमेधः येन सः कृताश्वमेधः सन् अश्वमेधयागं कुर्वन् सन् मद्भक्तान् गणेश्वरान् सभामध्ये सभायाः मध्ये अवमत्य अवमानितान् कृत्वा मेषवक्त्रः मेषस्य वक्त्रम् इव वक्त्रं यस्य सः मेषवक्त्रः मेषमुखवान् अभवत्।

**श्वेतस्य मम भक्तस्य दुरतिक्रमतेजसः।**
**औदासीन्येन कालोऽपि मया दग्धः पुराभवत्।।७५।।**

पुरा दुरतिक्रमतेजसः अतिक्रमं च तत् तेजश्च अतिक्रमतेजः दुःखेन अतिक्रमतेजः यस्य सः तस्य दुरतिक्रमतेजसः अपरिमिततेजस्कस्य मम भक्तस्य श्वेतस्य श्वेतनामकस्य विषये औदासीन्येन उदासीनस्य भावः औदासीन्यं तेन औदासीन्येन उदासीनभावेन कारणेन कालः अपि यमः अपि मया दग्धः फालनेत्रेण दग्धः अभवत्।

**एवमन्येऽपि बहवो मद्भक्तानामतिक्रमात्।**
**परिभूता हताश्चासन् भक्ता मे दुरतिक्रमाः।।७६।।**

एवमेव अन्ये अपि बहवः जनाः मद्भक्तानां मम भक्तानाम् अतिक्रमात् अतिक्रम्य वर्तमानात् केचन परिभूताः तिरस्कृताः अन्ये च केचन हताश्च सन्तः आसन्, अतः मे भक्ताः दुरतिक्रमाः इति वाक्यं समर्थयतीति काव्यलिङ्गालङ्कारः। लक्षणं तु 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति।

**अविचारेण मद्भक्तो लङ्घितो दारुकस्त्वया।**
**एष त्वं रेणुकानेन जन्मवान् भव भूतले।।७७।।**

अविचारेण विचारम् अकृत्वा मद्भक्तः दारुकः त्वया लङ्घितः, अतः हे रेणुक! एषः त्वम् एवं लङ्घनं कृतवान् त्वम् अनेन लङ्घनेन कारणेन भूतले भूलोके जन्मवान् जन्म अस्ति अस्य इति जन्मवान् भव जन्मधारणं कुरु।

**भव**-भू-लोट्-भवतु-भवतात् भवताम् भवन्तु - भव-भवतात् इत्यादि।

**इत्युक्तः परमेशेन भक्तमाहात्म्यशंसिना।**
**प्रार्थयामास देवेशं प्रणिपत्य स रेणुकः।।७८।।**

भक्तमाहात्म्यशंसिना भक्तस्य माहात्म्यं शंसते इति भक्त-माहात्म्यशंसी तेन शिवभक्तानां माहात्म्यवर्णनं कृतवता परमेशेन परमेश्वरेण इति उक्तः एवं कथितः सः रेणुकः प्रणिपत्य नमस्कृत्य देवेशं शिवमेवं प्रार्थयामास।

**मानुषीं योनिमासाद्य महादुःखविवर्धिनीम्।**
**जात्यायुर्भोगवैषम्यहेतुकर्मोपपादिनीम्　।।७९।।**

**समस्त देवकैङ्कर्यकार्पण्य - प्रसवस्थलीम्।**
**महातापत्रयोपेतां वर्णाश्रमनियन्त्रिताम्।।**
**विहाय त्वत्पदाम्भोजसेवां किं वा वसाम्यहम्?।।८०।।**

महादुःखविवर्धिनीं महत् च तत् दुःखं च महादुःखम् महादुःखं विवर्धयतीति महादुःखविवर्धिनी ताम् महादुःखस्य प्रवर्धिकाम्, जात्यायुर्भोगवैषम्यहेतुकर्मोपपादिनीं - जातिश्च आयुश्च भोगश्च वैषम्यं च जात्यायुर्भोगवैषम्यानि तेषां हेतुः जात्यायुर्भोगवैषम्यहेतुः यत् कर्म तस्य उपपादिनीम् उपपादिकाम् - जात्यादिकस्य हेतुभूतस्य कर्मणः सम्पादिकाम्, समस्तदेवकैंकर्यकार्पण्यप्रसवस्थलीं समस्ताश्च ते देवाश्च समस्तदेवाः तेषां कैंकर्यमेव कार्पण्यं समस्तदेवकैंकर्यकार्पण्यं तस्य प्रसवस्थलीं मूलकारणीभूतां, महातापत्रयोपेतां महत् च तत् तापत्रयं च महातापत्रयं तेन उपेताम्, वर्णाश्रमनियन्त्रितां वर्णाश्च आश्रमाश्च वर्णाश्रमाः तैः नियन्त्रिताम् एतादृशीं मानुषीं मनुष्यसम्बन्धिनीं योनिं जन्म आसाद्य प्राप्य, त्वत्पादाम्भोजसेवां तव पादावेव अम्भोजे त्वत्पादाम्भोजे तयोः सेवां तव पादकमलसेवां विहाय परित्यज्य अहं किं वा वसामि? नैव वसामि। **वसामि**-वस-निवासे, लट् वसति वसतः - इत्यादि।

**यथा मे मानुषो भावो न भवेत् क्षितिमण्डले।**
**तथा प्रसादं देवेश विधेहि करुणानिधे!।।८१।।**

तस्मात् हे करुणानिधे करुणासागर! हे देवेश! क्षितिमण्डले भूमण्डले मानुषः भावः मनुष्यजन्म यथा न भवेत् तथा मे प्रसादं विधेहि कुरु अनुग्रहं कुरु।

**भवेत्** - भू - विधिलिङ्, भवेत् भवेताम् इत्यादि।

**विधेहि** - डु-धाञ्-धारणपोषणयोः - वि+धा - लोट्,

विदधातु - विधत्तात् विधत्ताम् विदधतु।

विधेहि - विधत्तात् विधत्तम् विधत्त - इत्यादि।

**इति सम्प्रार्थितो देवो रेणुकेन महेश्वरः।**
**मा भैषीर्मम भक्तानां कुतो भीतिरिहेष्यति?।।८२।।**

इति एवं रीत्या रेणुकेन रेणुकगणाधीश्वरेण सम्प्रार्थितः देवः महेश्वरः, मा भैषीः मा भवतु भीतिः, यतः, मम भक्तानाम् इह अस्मिन् जगति भीतिः भयं कुतः वा इष्यति न कुत्रापि सम्भवति।

' **मा भैषीः** - ञिभी - भये, लुङ्-

अभैषीत् अभैष्टाम् अभैषुः।

अभैषीः अभैष्टम् अभैष्ट।

अभैषम् अभैष्व अभैष्म।।

अत्र **'न माङ् योगे'** इति सूत्रेण अडागमनिषेधः।

**इष्यति** - इष-गतौ, लट्, इष्यति इष्यतः - इत्यादि।

**श्रीशैलस्योत्तरे भागे त्रिलिङ्गविषये शुभे।**
**कोल्लिपाक्यभिधानोऽस्ति कोऽपि ग्रामो महत्तरः।।८३।।**

श्रीशैलस्य उत्तरे भागे शुभे पवित्रे त्रिलिङ्गविषये त्रिलिङ्गः इति विषये त्रिलिङ्गविषये त्रिलिङ्गनाम्नि देशे कोल्लिकाकी इति अभिधानः कोऽपि विशिष्टः अत एव महत्तरः श्रेष्ठतरः ग्रामः अस्ति।

**सोमेश्वराभिधानस्य तत्र वासवतो मम।**
**अस्पृशन् मानुषं भावं लिङ्गात् प्रादुर्भविष्यसि।।८४।।**

तत्र कोल्लिपाक्यभिधानके श्रेष्ठग्रामे सोमेश्वराभिधानस्य सोमेश्वरः इति अभिधानं यस्य सः तस्य सोमेश्वराभिधानस्य मम वासवतः वासयतीति वासवान् अथवा वासः अस्ति अस्मिन् इति वासवान् तस्य वासवतः वासस्थानभूतस्य लिङ्गात् ज्योतिर्लिङ्गात् मानुषं भावम् अस्पृशन् दिव्यभावं प्राप्तवान् सन् प्रादुर्भविष्यसि उद्भविष्यसि।

**प्रादुर्भविष्यसि** - प्र + आ+दुर् - भू-लृट्-भविष्यति - इत्यादि।

**मदीयलिङ्गसम्भूतं मद्भक्तपरिपालकम्।**
**विस्मिता मानुषाः सर्वे त्वां भजन्तु मदाज्ञया।।८५।।**

मदीयलिङ्गसंभूतं मम इदं मदीयं मदीयं च तत् लिङ्गं च मदीयलिङ्गं तत्र

सम्भूतं मदीयलिङ्गसम्भूतम्—

मदीयात् तस्माल्लिङ्गात् आविर्भूतं अवतरणं प्राप्तवन्तं (त्वां) मद्भक्तपरिपालकं मम भक्ताः मद्भक्ताः तेषां परिपालकं त्वां दृष्ट्वा मदाज्ञया मम आज्ञया विस्मिताः आश्चर्ययुक्ताः सन्तः सर्वे मानुषाः त्वां भजन्तु सेवां कुर्वन्तु।

**भजन्तु** - भज - सेवायाम्, लोट्, भजतु-भजतात् - इत्यादि।

**मदद्वैतपरं शास्त्रं वेदवेदान्तसम्मतम्।**
**स्थापयिष्यसि भूलोके सर्वेषां हितकारकम्।।८६।।**

मदद्वैतपरं मम अद्वैतपरं वेदवेदान्तसम्मतं वेदाश्च वेदान्ताश्च वेदवेदान्ताः तैः सम्मतं वेदवेदान्तसम्मतं वेदवेदान्तेषु प्रतिपादितं शास्त्रं शक्तिविशिष्टाद्वैतनामकं शास्त्रं सिद्धान्तम्, अपि च कीदृशम्? सर्वेषां समस्तानां मुमुक्षूणां हितकारकं हितं करोति इति हितकारकं शास्त्रं भूलोके स्थापयिष्यसि अगस्त्यादीनाम् उपदेशद्वारा सुदृढं संस्थापयिष्यसि। अपि च–

**मम प्रतापमतुलं मद्भक्तानां विशेषतः।**
**प्रकाशय महीभागे वेदमार्गानुसारतः।।८७।।**

हे रेणुक! मम अतुलं प्रतापं महिमाशालित्वं, विशेषतः तत्रापि विशिष्टतया मद्भक्तानां मम भक्तानाम् अतुलं असमानं प्रतापं प्रभावं वेदमार्गानुसारतः वेदस्य मार्गः वेदमार्गः तस्य अनुसारात् वेदोक्तमार्गमनुसृत्य महीभागे भूमण्डले प्रकाशय प्रकटीकुरु। **प्रकाशय**-काशृ-दीप्तौ-लोट्-प्रकाशयतु-प्रकाशयतात् - इत्यादि।

**इत्युक्त्वा परमेश्वरः स भगवान् भद्रासनादुत्थितो**
**ब्रह्मोपेन्द्रमुखान् विसृज्य विबुधान् भ्रूसंज्ञया केवलम्।**
**पार्वत्या सहितो गणैरभिमतैः प्राप स्वमन्तःपुरं**
**क्षोणीभागमवातरत् पशुपतेराज्ञावशाद्रेणुकः।।८८।।**

इति उक्त्वा भगवान् सः परमेश्वरः भद्रासनात् सिंहासनात् उत्थितः सन् केवलं भ्रूसंज्ञया ब्रह्मोपेन्द्रमुखान् ब्रह्मा उपेन्द्रः एव मुखं येषां तान् ब्रह्मोपेन्द्रमुखान् विबुधान् देवान् विसृज्य प्रेषयित्वा पार्वत्या सहितः सन् अभिमतैः अत्यन्तमाप्तैः गणेशनन्द्यादिशिवगणैः साकं स्वमन्तःपुरं स्वकीयम्

अन्तःपुरं प्राप प्रविष्टवान्, इतः रेणुकः पशुपतेः परमेश्वरस्य आज्ञावशात् आज्ञायाः वशात् आज्ञानुसारं क्षोणीभागं क्षोण्याः भागं क्षोणीभागं भूमण्डलम् अवातरत् अवतरणं कृतवान्।

**प्राप** - प्र + आप्लृ - व्याप्तौ, लिट् - प्राप प्रापतुः प्रापुः इत्यादि। **अवातरत्** - अव + तॄ-प्लवनसन्तरणयोः, लङ् -

अत्र श्लोके शार्दूलविक्रीडितं वृत्तम्। अस्य लक्षणम् - 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्।' इति।

*इति श्रीसिद्धान्तशिखामणौ रेणुकस्य भूर्लोकावतरणं नाम*
*॥तृतीयः परिच्छेदः॥*

# ।।चतुर्थः परिच्छेदः।।

## ।।श्रीसोमेश्वरलिङ्गादाविर्भूतस्य श्रीरेणुकगणाधीश्वरस्य वर्णनम्।।

**अथ त्रिलिंगविषये कोल्लिपाक्यभिधे पुरे।**
**सोमेश्वरमहालिङ्गात् प्रादुरासीत् स रेणुकः।।१।।**

अथ शिवाज्ञानन्तरं त्रिलिंगविषये त्रिलिङ्गदेशे वर्तमाने कोल्लिपाक्यभिधे कोल्लिपाकि-नामके पुरे वर्तमानात् सोमेश्वरमहालिङ्गात् सोमेश्वरः इति नामकात् महालिङ्गात् सः रेणुकः सः रेणुकगणाधीश्वरः प्रादुरासीत् प्रादुर्बभूव।

**प्रादुरासीत्** - प्रादुस् + आसीत्।

**प्रादुर्भूतं तमालोक्य शिवलिङ्गात् त्रिलिङ्गजाः।**
**विस्मिताः प्राणिनः सर्वे बभूवुरतितेजसम्।।२।।**

शिवलिङ्गात् प्रादुर्भूतं समुद्भूतम् अतितेजसम् अत्यन्तं तेजोवन्तम् तम् आलोक्य दृष्ट्वा त्रिलिङ्गजाः त्रिलिङ्गे जाताः सर्वे प्राणिनः जनाः विस्मिताः आश्चर्यचकिताः बभूवुः अभवन्। **बभूवुः** - भू - सत्तायाम् लिट् - बभूव बभुवतुः इत्यादि।

**भस्मोद्धूलितसर्वाङ्गं साररुद्राक्षभूषणम्।**
**जटामुकुट-संयुक्तं त्रिपुण्ड्राङ्कितमस्तकम्।।३।।**

भस्मोद्धूलितसर्वाङ्गं सर्वञ्च तत् अङ्गं च सर्वाङ्गं भस्मना उद्धूलितं सर्वांगं यस्य तम् भस्मोद्धूलितसर्वाङ्गम् भस्मना समुद्धूलितं सर्वशरीरम्, साररुद्राक्षभूषणं साराश्च ते रुद्राक्षाः साररुद्राक्षाः ते एव भूषणं यस्य सः तं साररुद्राक्षभूषणम् श्रेष्ठरुद्राक्षमालाभिः अलङ्कृतशरीरम्, जटामुकुटसंयुक्तं जटा च मुकुटं च जटामुकुटे ताभ्यां संयुक्तं जटामुकुटसंयुक्तं जटामुकुटधारिणम्, त्रिपुण्ड्राङ्कितमस्तकं त्रिपुण्ड्रेन अङ्कितं मस्तकं यस्य सः तम् त्रिपुण्ड्राङ्कितमस्तकं त्रिपुण्ड्रधारणेन शोभमानललाटं रेणुकं तमपृच्छन् इति उत्तरत्र अन्वयः।

**कटीतटीपटीभूतकन्यापटलबन्धुरम् ।**
**दधानं योगदण्डञ्च भस्माधारं कमण्डलुम्।।४।।**

कटीतटीपटीभूतकल्यापटलबन्धुरम् - अपटा पटा सम्पद्यमाना जाता पटीभूता कटीतट्यां पटीभूता चासौ कन्या च कटीतटीपटीभूतकन्या तस्याः पटलं तेन बन्धुरः यः तम् कटीनटीपटीभूतकन्यापटलबन्धुरम् - कटिप्रदेशे बद्धवस्त्रवदाचरितकन्यासमुदायेन मनोहरं कटिबद्धमध्यभागम्, एकस्मिन् हस्ते योगदण्डं दधानम्, अन्यस्मिन् हस्ते भस्माधारं भस्मनः आधारभूतं कमण्डलुं च दधानम् तं रेणुकम्—

**शिवाद्वैतपरिज्ञान - परमानन्दमोदिनम्।**
**निर्धूत - सर्वसंसारवासनादोषपञ्जरम्।।५।।**

शिवाद्वैतपरिज्ञानपरमानन्दमोदिनम् - शिवाद्वैतस्य परिज्ञानं शिवाद्वैत-परिज्ञानं तेन परमानन्दः शिवाद्वैतपरिज्ञानपरमानन्दः तेन मोदते इति मोदी तं शिवाद्वैतपरिज्ञानपरमानन्दमोदिनम् शिवाद्वैतपरिज्ञानेन प्राप्तपरमशिवानन्दानन्दिनम्, निर्धूतसर्वसंसारवासनादोषपञ्जरम् सर्वश्च असौ संसारश्च सर्वसंसारः तस्य वासना एव दोषः निर्घूतं सवसंसारवासनादोषपञ्जरं सर्वसंसारवासनादोषः तस्य पञ्जरं येन सः तम् - निर्धूतसर्वसंसारवासनादोषपञ्जरम्- दूरीकृतसकलसंसार-दोषसमूहं रेणुकम् ।

**शिवागमसुधासिन्धु - समुन्मेषसुधाकरम्।**
**चित्तारविन्दसङ्गूढ - शिवपादाम्बुजद्वयम्।।६।।**

शिवागमः एव सुधासिन्धुः शिवागमसुधासिन्धुः तस्य सुधासिन्धोः समुन्मेषे सुधाकरः इव वर्तमानः यः तम् शिवागम-सुधासिन्धु-समुन्मेष-सुधाकरम् - शिवागमरूपमहासुधासागरस्य समुन्मेषे सुधाकरः चन्द्रः इव वर्तमानम्, चित्तारविन्दसङ्गूढ-शिवपादाम्बुजद्वयम् - चित्तमेव अरविन्दं चित्तारविन्दं तत्र संगूढं शिवस्य पादौ अम्बुजद्वयम् इव यस्य सः तम् चित्तारविन्दसंगूढशिवपादाम्बुजद्वयम् .- चित्तकमले संरूढशिवपादकमलद्वयं रेणुकम्। शिवागमसुधासिन्धु - चित्तारविन्द-इत्यत्र रूपकम्, उन्मेषसुधाकरः इव सुधाकरः, पादाम्बुजद्वय - इत्यत्र उपमा।

**यमादियोगतन्त्रज्ञं स्वतन्त्रं सर्वकर्मसु।**
**समस्तसिद्धसन्तान – समुदायशिखामणिम्।।७।।**

यमादियोगतन्त्रज्ञं यमः, नियमः, आसनम्, प्राणायामः, प्रत्याहारः, धारणम्, ध्यानम्, समाधिः इति यमादिः यमादिश्च असौ योगश्च यमादियोगः तस्य तन्त्रं जानाति इति तन्त्रज्ञः तं यमादियोगतन्त्रज्ञम् अष्टाङ्गयोगनिष्णातम्, सर्वकर्मसु सर्वेषु च तेषु कर्मसु सर्वकर्मसु स्वतन्त्रम् इतरापेक्षारहितम्, समस्त-सिद्ध-सन्तान समुदायशिखामणिम् - समस्ताश्च ते सिद्धाश्च समस्तसिद्धाः तेषां सन्तानं समस्तसिद्धसन्तानं तस्य समुदायः समस्तसिद्धसन्तान-समुदायः तस्य शिखामणिः इव वर्तमानम् समस्तसिद्धसन्तान-समुदायशिखामणिम् - सकलसिद्धपरम्परायाः समूहस्य शिखामणिः इव अग्रेसरः इव वर्तमानं रेणुकम्। समुदायस्य शिखामणिः इव शिखामणिः इति उपमा।

**शैवसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् ।**
**आलोकमात्र-निर्भिन्न-समस्तप्राणिपातकम्।।८।।**

शैवसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् - वीरशैवसिद्धान्तस्य निर्वाहः वीरशैवसिद्धान्तनिर्वाहः तस्मिन् निर्वाहे कृतं पट्टस्य निबन्धनं येन तं वीरशैवसिद्धान्तनिर्वाहकृतपट्टनिबन्धनं भूलोके वीरशैवसिद्धान्तस्थापनकर्मणि कटिबद्धम्, आलोकमात्रनिर्भिन्नसमस्तप्राणिपातकम् - आलोकमात्रेणैव निर्भिन्नं, समस्ताश्च ते प्राणिनश्च समस्तप्राणिनः तेषां समस्तप्राणिनां पातकं येन तम् - आलोकमात्रनिर्भिन्नसमस्त-प्राणिपातकम् केवलमालोकनेनैव दूरीकृतसमस्त-जनपातकम् रेणुकम्।

**तमपृच्छन् जनाः सर्वे नमन्तः को भवानिति।**
**इति पृष्टो महायोगी -जनैर्विस्मितमानसैः।।९।।**

तं रेणुकम् नमन्तः नमन्ति-इति नमन्तः नमस्कारं कुर्वन्तः सन्तः सर्वे जनाः भवान् कः? इति अपृच्छन्। विस्मितमानसैः विस्मितं मानसं येषां तैः विस्मितमानसैः जनैः इति एवं पृष्टः सन् महायोगी रेणुकः।

**अपृच्छन्** - पृच्छ्-ज्ञीप्सायाम्; लङ् -

अपृच्छत् अपृच्छताम् अपृच्छन् इत्यादि।

**प्रत्युवाच शिवाद्वैतमहानन्दपरायणः।**
**पिनाकिनः पार्श्ववर्ती रेणुकाख्यगणेश्वरः।।१०।।**

शिवाद्वैतमहानन्दपरायणः शिवाद्वैतस्य महानन्दः शिवाद्वैतमहानन्दः तस्मिन् परायणः शिवाद्वैतमहानन्दपरायणः शिवाद्वैत-शिवानन्दानुभवमहाशिवयोगी रेणुकःपिनाकिनः परमेश्वरस्य पार्श्ववर्ती पार्श्वे वर्तितुं शीलम् अस्ति अस्य इति पार्श्ववर्ती पार्श्वे वर्तमानः अहं रेणुकाख्यगणेश्वरः रेणुकः इति आख्या यस्य सः रेणुकाख्यः रेणुकाख्यश्च असौ गणेश्वरः रेणुकाख्यगणेश्वरः रेणुकगणेश्वरोऽस्मि - इति प्रत्युवाच प्रत्युत्तरं दत्तवान्।

**उवाच** - वच-परिभाषणे, लिट्, उवाच ऊचतुः ऊचुः इत्यादि।

**केनचित्कारणेनाहं शिवलिङ्गादिहाभवम्।**
**नाम्ना रेणुकसिद्धोऽहं सिद्धसन्ताननायकः।।११।।**

अहं केनचित् अनिर्वचनीयेन केनचित् कारणेन इह शिवलिङ्गात् अस्मात् शिवलिङ्गात् अभवम् सम्भूतः, अहं सिद्धसन्ताननायकः सिद्धानां सन्तानस्य परम्परायाः नायकः श्रेष्ठः अग्रेसरः सन् नाम्ना रेणुकसिद्धः अस्मि।

**स्वच्छन्दचारी लोकेऽस्मिन् शिवसिद्धान्तपालकः।**
**खण्डयन् जैनचार्वाकबौद्धादीनां दुरागमान्।।१२।।**

अस्मिन् लोके स्वच्छन्दचारी सन् स्वच्छन्दं यथा स्यात् तथा चरन् सन् जैनचार्वाकबौद्धादीनां जैनश्च चार्वाकश्च बौद्धश्च आदयः येषां तेषां जैन-चार्वाक-बौद्धादीनां दुरागमान् दुष्टाश्च ते आगमाश्च दुरागमाः तान् नास्तिकागमान् खण्डयन् खण्डनं कुर्वन् सन् शिवसिद्धान्तपालकः अस्मि शिवसिद्धान्तस्य पालकः भवामि।

**इत्युक्त्वा पश्यतां तेषां विषयस्थिरचक्षुषाम्।**
**उत्थाय व्योममार्गेण मलयाद्रिमुपागमत्।।१३।।**

इति उक्त्वा विषयस्थिरचक्षुषां विषयेभ्यः स्थिराणि चक्षूंषि येषां तेषां विषयस्थिरचक्षुषाम् अनिमिषलोचनवतां तेषां जनानां पश्यतां सताम् (सत्षष्ठीप्रयोगः), लिङ्गात् उत्थाय बहिरागत्य व्योममार्गेण आकाशमार्गेण

मलयाद्रिम् मलयाचलम् उपागमत् प्रप्तवान्।

**उपागमत्** - उप+गम् ऌ - गतौ लङ् - अगमत् अगमताम् इत्यादि।

**।।मलयाचलस्य वर्णनम्।।**

**नवचन्दनकान्तारकन्दलन्मन्दमारुतम् ।**
**अभङ्गुरभुजङ्गस्त्री - सङ्गीत-रस-सङ्कुलम्।।१४।।**

नवाश्च ते चन्दनाश्च नवचन्दनाः तेषां कान्तारं नवचन्दनकान्तारं, तत्र कान्तारे कन्दलन् असौ मन्दमारुतश्च यत्र तम् नवचन्दन-कान्तारकन्दलन्मन्दमारुतम् (मन्दश्चासौ मारुतश्च मन्दमारुतः) - नूतनचन्दनवने मन्दं मन्दं यथा स्यात् तथा वीजमानमारुतम्, अभङ्गुरभुजङ्गस्त्रीसङ्गीतरससङ्कुलम् - अभङ्गुराश्च ताः भुजङ्गस्त्रियः अभङ्गुरभुजङ्गस्त्रियः तासां अभङ्गुरभुजङ्गस्त्रीणां संगीतस्य रसस्य सङ्कुलं यत्र तम् अभङ्गुरभुजङ्गस्त्रीसङ्गीतरससङ्कुलम् - अपारसर्पस्त्रीणां सङ्गीतरसेन सर्वत्र व्याप्तं मलयाचलम्। स्वभावोक्तिः।

**करिपोतकराकृष्ट - स्फुरदेलातिवासितम्।**
**वराहदंष्ट्रिकाध्वस्त - मुस्तासुरभिकन्दरम्।।१५।।**

करिपोतकराकृष्टस्फुरदेलानिवासितं-करिपोतस्य करः करिपोतकरः तेन करेण आकृष्टाः स्फुरन्त्यश्च ताः एलाश्च करिपोतकराकृष्टस्फुरदेलाः ताभिः अत्यन्तं वासितः यः तम् - करिकलभस्य शुण्डादण्डेन आकृष्टानां स्फुरन्तीनां च एलानां सुवासनेन (नया) सुवासितम्, वराहदंष्ट्रिकाध्वस्तमुस्तासुरभिकन्दरम्-वराहाणां दंष्ट्रिकाः वराहदंष्ट्रिकाः ताभिः ध्वस्ताः वराहदंष्ट्रिकाध्वस्ताः ध्वस्ताश्च ताः मुस्ताश्च वराहदंष्ट्रिकाध्वस्तमुस्ताः ताभिः सुरभिताः कन्दराः यस्मिन् तम् वराहदंष्ट्रिकाध्वस्तमुस्तासुरभिकन्दरम् - वराहाणां दंष्ट्राभिः ध्वस्तानां मुस्तानामकतृणविशेषाणां सुगन्धेन सुरभितप्रदेशम् अचलम्। स्वभावोक्तिः।

**पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिम् ।**
**माधवीमल्लिकाजातिमञ्जरीरेणुरञ्जितम् ।।१६।।**

पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिं पटीरदलानि एवपर्यङ्कः पटीरदलपर्यङ्कः तत्र प्रसुप्ते व्याधदम्पती यस्मिन् तम् पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिम् - चन्दनदलनिर्मितायां अथवा कर्पूरकदलीपत्रनिर्मितायां खट्वायां निश्चिन्ततया निद्रितव्याधदम्पतिम्, माधवीमल्लिकाजातीमञ्जरीरेणुरञ्जितम् - माधवी च मल्लिका च जाती च माधवीमल्लिकाजातयः तासां मञ्जर्यः माधवीमल्लिका-जातीमञ्जर्यः तासां रेणुभिः रञ्जितं माधवीमल्लिकाजाती-मञ्जरीरेणु-रञ्जितम्-माधवी-मल्लिका-जातीनां लतानां पुष्पमञ्जरीणां धूलिभिः सुगन्धितप्रदेशम् अचलम् स्वभावोक्तिः। उपागगमत् रेणुकः।

**।।अगस्त्याश्रमवर्णनम्।।**

**तत्र कुत्रचिदाभोग सर्वर्तुकुसुमद्रुमे।**
**अपश्यदाश्रमं दिव्यमगस्त्यस्य महामुनेः।।१७।।**

आभोगसर्वर्तुकुसुमद्रुमे आभोगं यथा स्यात् तथा सर्वे च त ऋतवः च आभोगसर्वर्तवः तेषु कुसुमानि येषु द्रुमेषु तादृशाः द्रुमाः यस्मिन् तस्मिन् आभोगसर्वर्तुकुसुमद्रुमे सर्वेषु च ऋतुषु परिपूर्णतया 'आभोगः परिपूर्णता' इत्यमरः, कुसुमभरितद्रुमयुक्ते तत्र तस्मिन् मलयाचले, कुत्रचित् एकत्र प्रदेशे अगस्त्यस्य महामुनेः अगस्त्यमुनेः दिव्यम् आश्रमम् अपश्यत् रेणुकगणाधीश्वरः। **अपश्यत्** - दृशिर्-प्रेक्षणे, लङ् अपश्यत् अपश्यताम् इत्यादि।

**मन्दारचन्दनप्रायैर्मण्डितं तरुमण्डलैः।**
**शाखाशिखर - संलीनतारकागणकोरकैः।।१८।।**

मन्दारचन्दनप्रायैः मन्दाराश्च चन्दनाश्च मन्दारचन्दनाः एवं प्रायैः मन्दारचन्दनप्रायैः तरुमण्डलैः तरूणां मण्डलैः समूहैः मण्डितम् अलङ्कृतम्, शाखाशिखर-संलीनतारकागणकोरकैः एतेषाम् तरूणां, शाखानां शिखराणि शाखाशिखराणि तेषु संलीनाः तारकाणां गणाः एव कोरकाः येषु तादृशैः शाखाशिखरसंलीनतारकागणकोरकैः - शाखाग्रेषु संसक्तनक्षत्ररूपकोरकयुक्तैः तरुमण्डलैः मण्डितम् आश्रममपश्यत्। तारकागणकोरकैः - अत्र रूपकम्। स्वभावोक्तिश्च।

**मुनिकन्याकरानीतकलशाम्बु - विवर्धितैः।**
**आलवालजलास्वादमोदमानमृगीगणैः ।।१९।।**

मुनिकन्यानां करा: मुनिकन्याकरा: तै: आनीतं च तत् कलशाम्बु च मुनिकन्याकरानीतकलशाम्बु तेन विवर्धिता: ये तै: मुनिकन्याकरानीतकलशाम्बु-विवर्धितै: मुनिकन्यकाभि: जलदानेन पौषितै:, आलवालजलास्वादमोदमानमृगीगणै:- आलवालस्य जलम् आलवालजलं तस्य आस्वाद: आलवालजलास्वाद: तेन मोदन्ते इति मोदमाना: मृगीणां गणा: येषु तै: आलवाल-जलास्वादमोदमानमृगीगणै: तरुमण्डलै: मण्डितम्, आलवालस्थजलस्य पानेन सन्तुष्टमृगीगणयुतै: तरुमण्डलै: मण्डितम्।

स्वभावोक्ति:।

**हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभिः ।**
**मरालालापवाचालुवीचिमालामनोहरैः ।।२०।।**

हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभि: हेममयानि अरविन्दानि हेमारविन्दानि तेभ्य: निष्यन्द: च असौ मकरन्दश्च हेमारविन्दनिष्यन्दमकरन्द: तस्य सुगन्ध: अस्ति येषु तै: हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभि:, मरालालापवाचालु-वीचिमालामनोहरै: मरालानाम् आलापा: मरालालापा: तै: वाचालव: वीचीनां माला: मरालालापवाचालु - वीचिमाला: ताभि: मनोहराणि यानि तै: मरालालापवाचालु-वीचिमालामनोहरै: सरोवरै: परिवीतम्, राजहंसानां कलरवै: प्रतिध्वनितसंरोवरै: परिवीतम्। स्वभावोक्ति:।

**इन्दीवरवरज्योतिरन्धीकृतहरिन्मुखैः ।**
**लोपामुद्रापदन्यासचरितार्थं तटाङ्कितैः।।२१।।**

इन्दीवरवरज्योतिरन्धीकृतहरिन्मुखै: - इन्दीवराणां वरं च तत् ज्योतिश्च इन्दीवरवरज्योति: तेन अनन्धानि अन्धानि कृतानि अन्धीकृतानि हरितां मुखानि यत्र तै: इन्दीवरवरज्योतिरन्धीकृत-हरिन्मुखै: नीलकमलानां नीलकान्तिभि: नीलीकृतदिङ्मुखै:, लोपामुद्रापदन्यास-चरितार्थ-तटाङ्कितै: - लोपामुद्राया: पदयो: न्यास: लोपामुद्रापदन्यास: तेन चरितार्थानि तटानां अङ्कितानि यत्र तै:- लोपामुद्रापदन्यासचरितार्थतटाङ्कितै: लोपामुद्राया:

पादन्यासेन कृतार्थतां प्राप्ततटप्रदेशैः सरोवरैः परिवीतम्। पूर्वार्धे उत्प्रेक्षालङ्कारः अन्धीकृतत्वसम्भावनात्।

**हारनीहारकर्पूरहरहासामलोदकैः ।**
**नित्यनैमित्तिकस्नाननियमार्थैस्तपस्विनाम् ।।२२।।**

हारनीहारकर्पूरहरहासामलोदकैः - अमलानि च तानि उदकानि अमलोदकानि, हारश्च नीहारश्च कर्पूरश्च हरहासश्च हारनीहारकर्पूरहरहासाः ते इव अमलोदकानि येषु तैः हारनीहारकर्पूरहरहासामलोदकैः परिशुद्धजलपूर्णैः, तपस्विनां तपोधनानाम्, नित्यनैमित्तिकस्नाननियमार्थैः - नित्यं च तत् नैमित्तिकं च यत् स्नानं नित्यनैमित्तिकस्नानं तस्य कृते यः नियमः स एव अर्थः प्रयोजनं येषां तैः नित्यनैमित्तिकस्नाननियमार्थैः सरोवरैः परिवीतम्। पूर्वार्धे उपमालङ्कारः।

**प्रकृष्टमणिसोपानैः परिवीतं सरोवरैः।**
**विमुक्तसत्त्ववैरस्यं ब्रह्मलोकमिवापरम्।।२३।।**

प्रकृष्टमणिसोपानैः मणिमयानि च तानि सोपानानि मणि-सोपानानि अथवा प्रकृष्टाश्च ते मणयश्च प्रकृष्टमणयः तैः निर्मितानि सोपानानि यत्र तैः प्रकृष्टसोपानैः श्रेष्ठमणिभिः निर्मितसोपानयुक्तैः सरोवरैः परिवीतम्, विमुक्तसत्त्ववैरस्यं विरसस्य भावः वैरस्यं विमुक्तं सत्त्वानां वैरस्यं यस्मिन् तं दूरीकृतवैरभावयुक्तप्राणियुक्तम् अपरं द्वितीयं ब्रह्मलोकमिव वर्तमानम् आश्रमम् अपश्यत्। ब्रह्मलोकमिवापरम् - अत्र उत्प्रेक्षालङ्कारः ब्रह्मलोकसम्भावनात्।

**हूयमानाज्यसन्तानधूमगन्धिमहास्थलम् ।**
**शुकसंसत्समारब्ध - श्रुतिशास्त्रोपबृंहणम्।।२४।।**

हूयमानाज्यसन्तानधूमगन्धिमहास्थलं-हूयमानं च तत् आज्यं च हूयमानाज्यं तस्य सन्तानं हूयमानाज्यसन्तानं तेन धूमः हूयमानाज्यसन्तानधूमः तेन सुगन्धि यत् महास्थलं यत्र तम् हूयमानाज्यसन्तानधूमः तेन सुगन्धि यत् महास्थलं यत्र तम् हूयमानाज्यसन्तानधूमगन्धिमहास्थलम् - नित्यं क्रियमाणहोमात् आज्यधूमेन सुगन्धितविशालस्थानम्, शुकसंसत्समारब्धश्रुति-शास्त्रोपबृंहणम्-शुकानां संसत् शुकसंसत्, श्रुतयश्च शास्त्राणि च श्रुतिशास्त्राणि

शुकसंसदा आरब्धम् श्रुतिशास्त्राणाम् उपबृंहणं यत्र तं शुकसंसत्समारब्धश्रुतिशास्त्रोपबृंहणम् शुकानां समूहेन आरब्धश्रुतिशास्त्रादीनां वाक्यार्थपरिशीलनं यत्र तम् अगस्त्यमुनेः आश्रमं रेणुकगणाधीशः अपश्यत्। स्वभावोक्तिः।

**।।अगस्त्यमुनिवर्णनम्।।**

**तस्य मध्ये समासीनं मूले चन्दनभूरुहः।**
**सुकुमारदलच्छायादूरितादित्यतेजसः ।।२५।।**

तस्य मध्ये तस्य आश्रमस्य मध्यभागे वर्तमानस्य सुकुमारदलच्छायादूरितादित्यतेजसः-सुकुमाराणि च तानि दलानि च सुकुमारदलानि तेषां छाया सुकुमारदलच्छाया तया छायया दूरितम् आदित्यस्य तेजः यस्मात् तस्य सुकुमारदलच्छायादूरितादित्यतेजसः पत्राणां बाहुल्यात् निषिद्धादित्यातपस्य चन्दनभूरुहः चन्दनवृक्षस्य मूले समासीनं मुनिमपश्यत्।

**तडित्पिङ्गजटाभारैस्त्रिपुण्ड्राङ्कितमस्तकैः ।**
**भस्मोद्धूलितसर्वाङ्गैः स्फुरद्रुद्राक्षभूषणैः।।२६।।**

**नववल्कलवासोभिर्नानानियमधारिभिः ।**
**परिवीतं मुनिगणैः प्रमथैरिव शङ्करम्।।२७।।**

तडित्पिङ्गजटाभारैः तडिद्वत् पिङ्गानां जटानां भाराः येषु तैः तडिद्वत् पिङ्गवर्णयुक्तजटायुक्तैः, त्रिपुण्ड्राङ्कितमस्तकैः त्रिपुण्ड्रेन अङ्कितं मस्तकं येषां तैः त्रिपुण्ड्राङ्कितमस्तकैः त्रिपुण्ड्रालङ्कृतललाटैः, भस्मोद्धूलितसर्वाङ्गैः भस्मना उद्धूलितानि सर्वाणि च तानि अङ्गानि येषां तैः भस्मोद्धूलितसर्वाङ्गैः सर्वाङ्गोद्धूलितभस्मभिः स्फुरद्रुद्राक्षभूषणैः स्फुरन्ति रुद्राक्षाः एव भूषणानि येषु तैः स्फुरद्रुद्राक्षाभूषणैः, प्रकाशमानरुद्राक्षधारिभिः, नववल्कलवासोभिः नवानि च तानि वल्कलानि नववल्कानि तानि एव वासांसि येषां तैः नूतनवल्कलरूपवस्त्रधारिभिः (नूतनवल्कलवासोभिः), नाना-नियमधारिभिः नाना च ते नियमाश्च नानानियमाः, तेषां धारिभिः नानानियमधारिभिः मुनिगणैः, प्रमथैः परिवीतं शङ्करम् इव परिवीतं परितः आवृतम् मुनिमगस्त्यम् रेणुकः ददर्श।

प्रमथैरिव शङ्करम् - इत्यत्र उपमालङ्कारः।

**समुज्ज्वलज्जटाजालैस्तपः - पादपपल्लवैः।**
**स्फुरत्सौदामिनीकल्पैर्ज्वालाजालैरिवातलम् ।।२८।।**

स्फुरत्सौदामिनीकल्पैः स्फुरन्त्यश्च ताः सैदामिन्यश्च स्फुरत्सौदामिन्यः तासां कल्पैः स्फुरत्सौदामिनीकल्पैः प्रकाशमानविद्युत्सदृशैः, तपःपादपपल्लवैः तपः एव पादपः तपःपादपः तस्य पल्लवैरिव वर्तमानैः तपःपादपपल्लवैः तपसा द्योतमानैः, समुज्ज्वलज्जटाजालैः समुज्ज्वलन्त्यश्च ताः जटाश्च समुज्ज्वलज्जटाः तासां जालैः समुज्ज्वलज्जटाजालैः प्रकाशमानजटाभारैः, ज्वालाजालैः ज्वालानां जालैः ज्वालाजालैः प्रकाशमानम् अनलम् इव अग्निमिव वर्तमानं मुनिम् अगस्त्यं रेणुकः अपश्यत्।

तपःपादप-इत्यत्र रूपकम्, पल्लवैरिव, सौदामिनीकल्पैः जटाजालैः- अनलमिव-इत्यत्र उपमालङ्कारः। जटाजालम् - उपमेयम्, मुनिः उपमेयम्, ज्वालाजालम् - उपमानम्, अनलः उपमानम्।

**तडित्पिङ्गजटाभारैस्त्रिपुण्ड्राङ्कित - मस्तकैः।**
**भस्मोद्धूलितसर्वाङ्गैः स्फुरद्रुद्राक्षभूषणैः।।२६।।**

**नववल्कलवासोभिर्नानानियमधारिभिः ।**
**परिवीतं मुनिगणैः प्रमथैरिव शङ्करम्।।२७।।**

तडित्पिङ्गजटाभारैः तडिद्वत् पिङ्गानां जटानां भाराः येषु तैः तडिद्वत् पिङ्गवर्णयुक्त - जटायुक्तैः, त्रिपुण्ड्राङ्कितमस्तकैः त्रिपुण्ड्रेन अङ्कितं मस्तकं येषां तैः त्रिपुण्ड्राङ्कितमस्तकैः त्रिपुण्ड्रालङ्कृतललाटैः, भस्मोद्धूलितसर्वाङ्गैः भस्मना उद्धूलितानि सर्वाणि च तानि अङ्गानि येषां तैः भस्मोद्धूलितसर्वाङ्गैः सर्वाङ्गोद्धूलितभस्मभिः स्फुरद्रुद्राक्षभूषणैः स्फुरन्ति रुद्राक्षाः एव भूषणानि येषु तैः स्फुरद्रुद्राक्षभूषणैः, प्रकाशमानरुद्राक्षधारिभिः, नववल्कलवासोभिः नवानि च तानि वल्कलानि नववल्कलानि तानि एव वासांसि येषां तैः नूतनवल्कलरूपवस्त्रधारिभिः (नूतनवल्कलवासोभिः), नाना-नियमधारिभिः नाना च ते नियमाश्च नानानियमाः, तेषां धारिभिः नानानियमधारिभिः मुनिगणैः, प्रमथैः परिवीतं शङ्करम् इव परिवीतं परितः आवृतम् मुनिमगस्त्यम् रेणुकः ददर्श।

प्रमथैरिव शङ्करम् - इत्यत्र उपमालङ्कारः।

**समुज्ज्वलज्जटाजालैस्तपः - पादपपल्लवैः।**
**स्फुरत्सौदामिनीकल्पैर्ज्वालाजालैरिवातलम्।।२८।।**

स्फुरत्सौदामिनीकल्पैः स्फुरन्त्यश्च ताः सौदामिन्यश्च स्फुरत्सौदामिन्यः तासां कल्पैः स्फुरत्सौदामिनीकल्पैः प्रकाशमानविद्युत्सदृशैः, तपःपादपपल्लवैः तपः एव पादपः तपःपादपः तस्य पल्लवैरिव वर्तमानैः तपःपादपपल्लवैः तपसा द्योतमानैः, समुज्ज्वलज्जटाजालैः समुज्ज्वलन्त्यश्च ताः जटाश्च समुज्ज्वलज्जटाः तासां जालैः समुज्ज्वलज्जटाजालैः प्रकाशमानजटाभारैः, ज्वालाजालैः ज्वालानां जालैः ज्वालाजालैः प्रकाशमानम् अनलम् इव अग्निमिव वर्तमानं मुनिम् अगस्त्यं रेणुकः अपश्यत्।

तपःपादप-इत्यत्र रूपकम्, पल्लवैरिव, सौदामिनीकल्पैः जटाजालैः-अनलमिव-इत्यत्र उपमालङ्कारः। जटाजालम् - उपमेयम्, मुनिः उपमेयम्, ज्वालाजालम् - उपमानम्, अनलः उपमानम्।

**विशुद्धभस्मकृतया त्रिपुण्ड्राङ्कितरेखया।**
**त्रिस्रोतसेव सम्बद्धशिलाभागं हिमालयम्।।२९।।**

विशुद्धभस्मकृतया विशुद्धं च तत् भस्म च विशुद्धभस्म तेन कृतया विशुद्धभस्मकृतया भस्मसम्पादितया, त्रिपुण्ड्राङ्कितरेखया-त्रिपुण्ड्रेण अङ्किता च असौ रेखा च तया त्रिपुण्ड्राङ्कितरेखया हेतुना, त्रिस्रोतसा गङ्गया सम्बद्धशिलाभागं सम्बद्धः शिलायाः भागः यस्य तं सम्बद्धशिलाभागम् अलङ्कृतशिलाभागं हिमालयमिव दृश्यमानं मुनिमपश्यत्।

त्रिपुण्ड्ररेखा-उपमेयम्, त्रिस्रोताः उपमानम्, उपमालङ्कारः। अगस्त्यमुनौ हिमालयस्य सम्भावनात् उत्प्रेक्षालङ्कारः। एतयोः अत्र सङ्करः।

**भस्मालङ्कृतसर्वाङ्गं शशाङ्कमिव भूगतम्।**
**वसानं वल्कलं नव्यं बालातपसमप्रभम्।।३०।।**

भस्मालङ्कृतसर्वाङ्गं सर्वाणि च तानि अङ्गानि सर्वाङ्गानि, भस्मना अलङ्कृतानि सर्वाङ्गानि यस्य तं भस्मालङ्कृत-सर्वाङ्गम् अतएव भूगतं भुवि आगतं शशाङ्कम् इव चन्द्रमिव वर्तमानम्, बालातपसमप्रभं बालश्चासौ

आतपश्च बालातपः तेन समा प्रभा यस्य तत् बालातपसमप्रभम् अरुणिमवर्णयुक्तं नव्यं वल्कलं वसानं मुनिम्।

पूर्वार्धे उत्प्रेक्षालङ्कारः, उत्तरार्धे उपमालङ्कारः।

**वडवाग्निशिखाजाल - समालीढमिवार्णवम्।**
**सर्वासामपि विद्यानां समुदायनिकेतनम्।।३१।।**

वडवाग्निशिखाजालसमालीढमिवार्णवम्-वडवाग्नेः शिखा-वडवाग्नि-शिखा तस्याः जालम् वडवाग्निशिखाजालं तेन समालीढः यः तं वडवाग्निशिखाजालसमालीढं वडवानलस्य ज्वालाभिः वर्तमानम् अर्णवम् इव समुद्रमिव शोभमानम्, सर्वासामपि निगमागमादीनां विद्यानां समुदायनिकेतनं समुदायस्य आवासस्थानमिव वर्तमानं मुनिं तावत् अपश्यत्। वल्कलधारी मुनिः वडवानलशिखायुक्तः समुद्रः इव आसीत् इति उपमालङ्कारः। सकलविद्यानिधिश्च आसीन्मुनिः।

**न्यक्कृतप्राकृताहन्तं निरूढशिवभावनम्।**
**तृणीकृतजगज्जालं सिद्धीनामुदयस्थलम्।।३२।।**

न्यक्कृतप्राकृताहन्तं - प्राकृता च असौ अहन्ता च प्राकृताहन्ता, न्यक्कृता प्राकृताहन्ता येन तं न्यक्कृतप्राकृताहन्तं-अहङ्काररहितम्, निरूढशिवभावनं निरूढा शिवस्य भावना येन तं निरूढशिवभावनं निरूढमूलशिवभावम्, तृणीकृतजगज्जालं तृणीकृतं जगतः जालं येन तं तृणीकृतजगज्जालं तिरस्कृतलौकिकव्यवहारम्, सिद्धीनाम् अणिमाद्यष्टसिद्धीनाम् उदयस्थानम् उत्पत्तिस्थानम्-अणिमाद्यष्टसिद्धियुक्तम् मुनिम्।

**मोहान्धकारतपनं मूलबोधमहीरुहम्।**
**ददर्श स महायोगी मुनिं कलशसम्भवम्।।३३।।**

मोहान्धकारतपनं मोहः एव अन्धकारः, तस्य तपनः इव वर्तमानम् - मोहान्धकारनाशकसूर्यमिव वर्तमानम्, मूलबोधमहीरुहं मूलबोधस्य महीरुहः इव वर्तमानं मूलस्वरूपबोधक-परिज्ञानस्य कल्पवृक्षसदृशम्, कलशसम्भवं मुनिम् अगस्त्यमुनिं सः महायोगी रेणुकः ददर्श। 'अगस्त्यः कुम्भसम्भवः' इत्यमरः। पूर्वार्धे उपमालङ्कारः।

**ददर्श**-दृशिर् - प्रेक्षणे, लिट्, ददर्श ददृशतुः ददृशुः इत्यादि।

**।। अगस्त्यकृतरेणुकाचार्यसपर्या ।।**

**तमागतं महासिद्धं समीक्ष्य कलशोद्भवः।**
**गणेन्द्रं रेणुकाभिख्यं विवेद ज्ञानचक्षुषा।।३४।।**

आगतं महासिद्धं तम् कलशोद्भवः समीक्ष्य ज्ञानचक्षुषा ज्ञानमेव चक्षुः ज्ञानचक्षुः तेन ज्ञानचक्षुषा रेणुकाभिख्यं रेणुकः इति अभिख्या यस्य सः तं रेणुकाभिख्यं गणेन्द्रं विवेद ज्ञातवान्।

**विवेद**– वि+विद-ज्ञाने, लिट् - विवेद विविदतुः इत्यादि।

**तस्यानुभावं विज्ञाय सहसैव समुत्थितः।**
**लोपामुद्राकरानीतै रुद्रकैरतिपावनैः।।**
**पादौ प्रक्षालयामास स तस्य शिवयोगिनः।।३५।।**

तस्य रेणुकाचार्यस्य अनुभावं शिवाद्वैतसिद्धान्तानुभावत्वं विज्ञाय ज्ञात्वा सहसा एव समुत्थितः सन् लोपामुद्राकरानीतैः लोपामुद्रायाः करेण आनीतैः अतिपावनैः अतिपवित्रैः उदकैः जलैः सः मुनिः शिवयोगिनः तस्य रेणुकगणाधीश्वरस्य पादौ प्रक्षालयामास।

**सम्पूज्य तं यथाशास्त्रं तन्नियोगपुरःसरम्।**
**मुनिर्विनयसम्पन्नो निषसादासनान्तरे।।३६।।**

यथाशास्त्रं शास्त्रमनतिक्रम्य यथा स्यात्तथा तं रेणुकं सम्पूज्य पूजयित्वा तन्नियोगपुरःसरं तस्य रेणुकगणाधीशस्य नियोगः आज्ञा तन्नियोगः तन्नियोगस्य पुरःसरम् तस्य आज्ञानुसारम्, विनयसम्पन्नः सन् विनयेन सम्पन्नः सन् विनयान्वितः सन् मुनिः आसनान्तरे अन्यस्मिन् आसने निषसाद उपविष्टवान्।
**निषसाद** - षद्लृ - विशरणगत्यवसादनेषु - लिट्

निषसाद निषेदतुः निषेदुः इत्यादि।

**समासीनं मुनिवरं सर्वतेजस्विनां विभुम्।**
**उवाच शान्तया वाचा रेवणः सिद्धशेखरः।।३७।।**

समासीनं तथा आसनान्तरे उपविष्टं, सर्वतेजस्विनां सर्वे च ते तेजस्विनश्च तेषां सर्वतेजस्विनां विभुं प्रमुखं मुनिवरं मुनिश्रेष्ठं प्रति सिद्धशेखरः रेवणसिद्धेश्वरः शान्तया वाचा उवाच - एवमवदत्।

**उवाच**-वच-परिभाषणे - लिट् - उवाच ऊचतुः ऊचुः - इत्यादि।

**।।उभयोर्मध्ये प्रवृत्तं कुशलसम्भाषणम्।।**

**निर्विघ्नं वर्तसे किं नु नित्या ते नियमक्रिया?।**
**अथवागस्त्य तेजस्विन् कुतः स्युस्तेऽन्तरायकाः?।।३८।।**

हे महर्षे अगस्त्य निर्विघ्नं यथा स्यात् तथा वर्तसे किंनु? ते नियमक्रिया नित्या किं वर्तते? अथवा, हे तेजस्विन्! अन्तरायकाः विघ्नाः ते कुतः स्युः कथं वा भवेयुः? नैव भवितुं शक्नुवन्ति। अग्रे एवं समर्थयति- **वर्तसे**-वृतु-वर्तने, लट्, वर्तते वर्तेते वर्तन्ते इत्यादि। **स्युः** - अस-भुवि, विधिलिङ्, स्यात् स्याताम् स्युः। अत्र आक्षेपालङ्कारः। अस्य लक्षणम्—

'आक्षेपः स्वयमुक्तस्य प्रतिषेधः। पूर्वार्धे उक्तस्यार्थस्य प्रतीयते। 'कुतः स्युस्तेऽन्तरायकाः?' इति वाक्यं समर्थनसापेक्षमस्ति। 'विन्ध्यो निरुद्धो--' इत्यादयः वक्ष्यमाणश्लोकाः समर्थकाः इति काव्यलिङ्गालङ्कारः।

**विन्ध्यो निरुद्धो भवता विश्वोल्लङ्घनविभ्रमः।**
**नहुषो शेषलेशात् ते सद्यः सर्पत्वमागतः।।३९।।**

पुरा विश्वोल्लङ्घनविभ्रमः विश्वस्य उल्लङ्घने विभ्रमः यस्य सः विश्वोल्लङ्घनविभ्रमः महामेरुप्रभृतिपर्वतानामुल्लङ्घने विलासवान् सन् विन्ध्यः भवता निरुद्धः, अपि च नहुषः ते तव रोषलेशात् रोषस्य लेशादेव सद्यः सर्पत्वम् आगतः प्राप्तवान्।

**आचान्ते भवता पूर्वं पङ्कशेषाः पयोधयः।**
**जीर्णस्ते जाठरे वह्नौ दृप्तो वातापि-दानवः।।४०।।**

पूर्वं भवता आचान्ते सति आचमने कृते सति पयोधयः समुद्राः पङ्कशेषाः पङ्कं शेषः येषां ते पङ्कशेषाः अभवन्। दृप्तः उन्मत्तः वातापि-दानवः वातापि-नामकः दानवः ते जाठरे जठरस्य वह्नौ जीर्णः अभवत् दग्धः अभवत्।

**एवंविधानां चित्राणां सर्वलोकातिशायिनाम्।**
**कृत्यानां तु भवान् कर्ता कस्तेऽगस्त्य समप्रभः?।।४१।।**

एवंविधानां सर्वलोकातिशायिनाम् लोकमतिशयितुं शीलमस्ति येषां तानि लोकातिशायीनि सर्वाणि च तानि लोकातिशायीनि च तेषाम् सर्वलोकातिशायिनाम्-सर्वलोकविलक्षणानां चित्राणां कृत्यानां विचित्रकार्याणां भवान् तु कर्ताअस्ति, स्थिते चैवं हे अगस्त्य! ते समप्रभः समा प्रभा यस्य सः समप्रभः समानप्रभावशाली कः अस्ति? न कोऽपि विद्यते।

**शिवाद्वैतपरानन्दप्रकाशन परायणम्।**
**भवन्तमेकं शंसन्ति प्रकृत्या सङ्गवर्जितम्।।४२।।**

प्रकृत्या स्वाभाविकतया सङ्गवर्जितं संसारसम्बन्धरहितं भवन्तम् एकमेव लोकाः शिवाद्वैतपरानन्दप्रकाशनपरायणं सन्तं परश्च असौ आनन्दश्च परानन्दः शिवाद्वैतस्य परानन्दः शिवाद्वैतपरानन्दः तस्य प्रकाशने परायणः यः तं शिवाद्वैतपरानन्दप्रकाशनपरायणं सन्तं शिवाद्वैतानन्दप्रकाशनतत्परं सन्तं प्रशंसन्ति प्रशंसां कुर्वन्ति।

**पुरा हैमवतीसूनुरवदत् ते षडाननः।**
**शिवधर्मोत्तरं नाम शास्त्रमीश्वरभाषितम्।।४३।।**

पुरा हैमवतीसूनुः हैमवत्याः सूनुः षडाननः ईश्वरभाषितम् ईश्वरेण भाषितम् ईश्वरेण प्रोक्तं शिवधर्मोत्तरं नाम शास्त्रम् ते अवदत् प्रोक्तवान्, अत एव त्वं शिवाद्वैतपरानन्दप्रकाशनपरायणः असि। इत्येवं समर्थनात् काव्यलिङ्गालङ्कारः।

**भक्तिः शैवी महाघोरसंसारभयहारिणी।**
**त्वया राजन्वती लोके जातागस्त्य महामुने।।४४।।**

हे महामुने अगस्त्य! महाघोरसंसारभयहारिणी महाघोरश्चासौ संसारश्च महाघोरसंसारः तस्य भयं हर्तुं शीलमस्ति अस्यामिति महाघोर-संसारभयहारिणी संसारभयनाशनसामर्थ्यवती शैवी भक्तिः शिवभक्तिः लोके त्वया एव कारणात् राजन्वती सुष्ठु राजा अस्ति अस्यामिति राजन्वती रक्षावती सती जाता अभवत्।

**इति तस्य वचः श्रुत्वा सिद्धस्य मुनिपुङ्गवः।**
**गम्भीरगुणया वाचा बभाषे भक्तिपूर्वकम्।।४५।।**

इति एवं रूपं तस्य सिद्धस्य तस्य रेणुकगणाधीश्वरस्य वचः श्रुत्वा मुनिपुङ्गवः अगस्त्यः भक्तिपूर्वकं गम्भीरगुणया गम्भीरगुणयुक्तया वाचा बभाषे एवमवोचत्।

**बभाषे** - भाष-व्यक्तायां वाचि, लिट्

बभाषे बभाषाते बभाषिरे इत्यादि।

**अहमेव मुनीन्द्राणां लालनीयोऽस्मि सर्वदा।**
**भवदागमसम्पत्तिर्मां विना कस्य सम्भवेत्?।।४६।।**

यतः मुनीन्द्राणां मुनिश्रेष्ठानां मध्ये सर्वदा अहमेव लालनीयः श्लाघनीयः अस्मि, ततः एव कारणात् भवदागमसम्पत्तिः भवतः आगमः एव सम्पत्तिः भवदागमनरूपवैभवं तावत् मां विना कस्य वा सम्भवेत्? न कस्यापि सम्भवेत्।

पूर्वार्धम् उत्तरार्धः समर्थयतीति काव्यलिङ्गालङ्कारः।

आगमनमेव सम्पत्तिरिव सम्पत्तिः इत्यत्र उपमा।

**स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया।**
**भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता।।४७।।**

भवद्दर्शनपुण्येन भवतः दर्शनमेव पुण्यं भवद्दर्शनपुण्यं तेन भवद्दर्शनपुण्येन अद्य मे शिवज्ञानं स्थिरमभवत्, मे तापसक्रिया तापसस्य क्रिया तापसक्रिया तपः स्थिरा अभवत्, मे मुनिराजता मुनेः राजता मुनिश्रेष्ठता स्थिरा अभवत्। मुनिराजता मुनीनां राजा मुनिराजः तस्य भावः मुनिराजता। अत्र 'राजाहः सखिभ्यष्टच्' इतिसूत्रेण राजन् शब्दस्य अकारान्तता।

**संसारसर्पदष्टानां मूर्छितानां शरीरिणाम्।**
**कटाक्षस्तव कल्याणं समुज्जीवनभेषजम्।।४८।।**

संसारसर्पदष्टानां संसारः एव सर्पः संसारसर्पः तेन दष्टानाम् अत एव मूर्छितानां मोहपरवशानां शरीरिणां तव कटाक्षः कृपाकटाक्षः एव कल्याणं

मङ्गलप्रदं समुज्जीवनभेषजम् समुज्जीवने भेषजम् प्राणदानसमर्थमौषधमस्ति।

संसारसर्पः - इत्यत्र रूपकम्, कटाक्षः भेषजम् - अत्रापि रूपकम्। सर्पदष्टानामौषधमिव तव कटाक्षःकल्याणकारकः इति उपमाध्वनिः।

**समस्तलोकसन्दाहतापत्रयमहानलः ।**
**त्वत्पादाम्बुकणास्वादादुपशाम्यति देहिनाम्।।४९।।**

समस्तलोकसन्दाहतापत्रयमहानलः - समस्ताश्च ते लोकाः च समस्तलोकाः, तेषां सन्दाहे विषये तापत्रयमेव महानलः समस्तलोकसन्दाहतापत्रयमहानलः तावत् देहिनाम्, त्वत्पादाम्बुकणास्वादात् तव पादयोः अम्बु त्वत्पादाम्बु तस्य कणः त्वत्पादाम्बुकणः तस्य आस्वादात् त्वत्पादाम्बुकणास्वादात् उपशाम्यति शमनं प्राप्नोति।

तापत्रयमहानलः - इत्यत्र रूपकम्। यथा जलसेकात् अनलः उपशाम्यति तथैव तव पादाम्बुकणाम्बुपानात् संसारदाहकं तापत्रयमुपशाम्यति इति उपमाध्वनिश्च।

**उपशाम्यति** - उप+शमु-उपशमे, लट्।

**रेणुकं त्वां विजानामि गणनाथं शिवप्रियम्।**
**अवतीर्णमिमां भूमिं मदनुग्रहकाङ्क्षया।।५०।।**

मदनुग्रहकाङ्क्षया मम अनुग्रहः मदनुग्रहः तस्य काङ्क्षया मदनुग्रहकाङ्क्षया इमां भूमिम् अवतीर्णम् अवतारं कृतवन्तं त्वां शिवप्रियं शिवस्य प्रियं रेणुकं गणनायकम् इति विजानामि विशेषेण जानामि।

**विजानामि** - वि+ज्ञा-अवबोधने, लट्,

जानाति जानीतः जानन्ति - इत्यादि।

**भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम्।**
**प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी।।५१।।**

प्रबोधध्वस्तजन्मनां प्रबोधेन ध्वस्तं जन्म येषां तेषां प्रबोधध्वस्तजन्मनां भवादृशानां भवत्सदृशानां सिद्धानां सिद्धपुरुषाणां लोके प्रवृत्तिः प्रकृष्टा वृत्तिः तावत् ईदृशी एतादृशगुणयुक्ता सती परानुग्रहकारिणी परेषाम् अनुग्रहं कर्तुं

शीलमस्ति अस्यामिति परानुग्रहकारिणी अस्ति। परानुग्रहः तव सञ्चरणप्रवृत्तिः।

**त्वन्मुखाच्छ्रोतुमिच्छामि सिद्धान्तं श्रुतिसम्मतम्।**
**सर्वज्ञ वद मे साक्षाच्छैवं सर्वार्थसाधकम्।।५२।।**

श्रुतिसम्मतं श्रुत्यादिप्रतिपाद्यं सिद्धान्तं शिवाद्वैतसिद्धान्तं त्वन्मुखात् तव मुखात् श्रोतुम् इच्छामि, अतः हे सर्वज्ञ! साक्षात् प्रत्यक्षतः एव सर्वार्थसाधकं सर्वेषाम् अपि अर्थानां प्रयोजनानां साधकम् उत्पादकं शैवं शिवाद्वैतं मे वद कथय।

**इच्छामि** - इषु - इच्छायाम्, लट्, इच्छति इत्यादि।

**सद्यः सिद्धिकरं पुंसां सर्वयोगीन्द्रसेवितम्।**
**दुराचारैरनाघ्रातं स्वीकृतं वेदवेदिभिः।**
**शिवात्मैक्य - महाबोधसम्प्रदायप्रवर्तकम्।।५३।।**

पुंसां मनुष्याणां सद्यः सिद्धिकरं सिद्धिं करोति इति सिद्धिकरम्, सिद्धिदायकम्, सर्वयोगीन्द्रसेवितं सर्वे च ते योगीन्द्राश्च सर्वयोगीन्द्राः तैः सेवितं सर्वयोगीन्द्रसेवितम् सर्वयोगिश्रेष्ठैः अङ्गीकृतम्, दुराचारैः जैनबौद्धादिभिः अनाघ्रातम् अस्वीकृतम्, वेदवेदिभिः वैदज्ञैः स्वीकृतम् अङ्गीकृतम्, शिवात्मैक्यमहाबोधसम्प्रदायप्रवर्तकम् - शिवश्च आत्मा च शिवात्मानौ तयोः ऐक्यं शिवात्मैक्यं तस्य महाबोधः शिवात्मैक्यमहाबोधः स एव सम्प्रदायः शिवात्मैक्यमहाबोधसम्प्रदायः तस्य प्रवर्तकम् शिवात्मैक्यमहाबोधसम्प्रदायप्रवर्तकम्-शिवजीवैक्यबोधक - महाज्ञानप्रवाहरूप-सम्प्रदायस्य प्रवर्धकं शैवसिद्धान्तं श्रोतुमिच्छामि।

'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इत्युपनिषदुक्तरीत्या सम्प्रदाय-प्रवर्तकत्वमिति भावः।

**उक्त्वा भवान् सकललोकमहोपकारं**
**सिद्धान्तसङ्ग्रहमनाहतबाह्यतन्त्रम् ।**
**सद्यः कृतार्थयितुमर्हसि दिव्ययोगिन्**
**नानागमश्रवणवर्तित - संशयं माम्।।५४।।**

हे दिव्ययोगिन् दिव्यः योगः अस्ति अस्मिन् इति तत्सम्बुद्धौ- हे

दिव्ययोगिन्! सकललोकमहोपकारं सकलाश्च ते लोकाश्च सकललोकाः तेषां महोपकारः यस्मात् तं सकललोकमहोपकारं सकलजनोद्धारकम् अनादृतबाह्यतन्त्रम् बाह्यं च तत् तन्त्रं च बाह्यतन्त्रम् न आदृतम् अनादृतम् अनादृतं बाह्यतन्त्रं यस्मात् तम् अनादृतबाह्यतन्त्रं दूरीकृतजैनादिनास्तिकतन्त्रम्, सिद्धान्तसङ्ग्रहं सिद्धान्तस्य सङ्ग्रहं सिद्धान्तसङ्ग्रहं शिवाद्वैतसिद्धान्तम् उक्त्वा बोधयित्वा भवान् नानागमश्रवणवर्तितसंशयं नाना च ते आगमाश्च नानागमाः तेषां श्रवणं नानागमश्रवणं तेन वर्तितः संशयः येन तम् - नानागमश्रवणवर्तितसंशयं कामिकादिवातुलान्तानां सकलागमानां श्रवणेन संशयग्रस्तमनस्कं मां सद्यः कृतार्थयितुं कृतार्थं कर्तुं अर्हति योग्योऽस्ति। अनेकान् मम संशयान् दूरीकर्तुं शैवसिद्धान्तमुपदिशतु। भवान् अर्हति - इत्यत्र 'भवद्योगे न मध्यमः' इति न्यायेन अथवा नियमेन प्रथमपुरुषत्वम्।

**अर्हति** - अर्ह-पूजायाम् - लट्, अर्हति, अर्हतः इत्यादि।

*इति श्रीसिद्धान्तशिखामणौ*
*रेणुकागस्त्यदर्शनप्रसङ्गो नाम*
*।।चतुर्थः परिच्छेदः।।*



# ।।पञ्चमः परिच्छेदः।।

**अथागस्त्यवचः श्रुत्वा रेणुको गणनायकः।**
**ध्यात्वा क्षणं महादेवं साम्बमाह समाहितः।।१।।**

अथ अगस्त्यमुनेः प्रार्थनानन्तरं रेणुकः गणनायकः, अगस्त्यवचः अगस्त्यस्य वचः श्रुत्वा क्षणं क्षणकालं साम्बं महादेवं गिरिजाधवं ध्यात्वा समाहितः सन् समाधानचित्तः सन् एवम् आह।

**अगस्त्य मुनिशार्दूल समस्तागमपारग!।**
**शिवज्ञानकरं वक्ष्ये सिद्धान्तं शृणु सादरम्।।२।।**

हे मुनिशार्दूल अगस्त्य हे मुनिश्रेष्ठ अगस्त्य! हे समस्तागमपारग-समस्ताश्च ते आगमाश्च समस्तागमाः तेषां पारं गच्छति इति तत्सम्बुद्धौ हे समस्तागमपारग! समस्तागमज्ञानपरिणत! शिवज्ञानकरं शिवस्य ज्ञानं करोति इति शिवज्ञानकरः तं सिद्धान्तं शिवाद्वैतसिद्धान्तम् वक्ष्ये कथयिष्ये, सादरं यथा स्यात् तथा शृणु आकर्णय। **वक्ष्ये**-ब्रूञ् - व्यक्तायां वाचि, लृट्, वक्ष्यते वक्ष्येते - इत्यादि। **शृणु**-श्रु-श्रवणे - लोट्, शृणोतु-शृणुतात् - इत्यादि।

**अगस्त्य खलु सिद्धान्ता विख्याता रुचिभेदतः।**
**भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः।।३।।**

हे अगस्त्य! भिन्नाचारसमायुक्ताः भिन्नाश्च ते आचाराश्चभिन्नाचाराः तैः समायुक्ताः भिन्नाचारसमायुक्ताः, द्वैताद्वैतादिविभिन्नप्रमेयांशयुक्ताः, भिन्नार्थ-प्रतिपादकाः-भिन्नश्चासौ अर्थश्च भिन्नार्थः तस्य प्रतिपादकाः भिन्नार्थप्रतिपादकाः कपिलजैमिनिपतञ्जल्यादि - महर्षिभिः प्रणीताः, अत एव रुचिभेदतः भिन्नभिन्नाभिप्रायसमर्थकत्वात् बहवः सिद्धान्ताः लोके विख्याताः खलु!

**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।४।।**

सांख्यं कपिलमहर्षिप्रणीतं सांख्यशास्त्रं, योगः पतञ्जलिमहर्षिप्रणीतं योगशास्त्रम्, पाञ्चरात्रं वासुदेवप्रणीतं पाञ्चरात्रम्, वेदाः पूर्वकाण्डत्वानुसारं

जैमिनिप्रणीतं पूर्वमीमांसाशास्त्रम् तथा पाशुपतं पशुपतिप्रणीतं शिवप्रणीतं पाशुपतम् - इति एतानि मानभूतानि प्रमाणभूतानि वर्तन्ते। अतः एतानि युक्तिभिः तर्कादियुक्तिभिः नोपहन्यानि नैव खण्डनीयानि।

**वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने।**
**वेदानुसरणादेषां प्रामाण्यमिति निश्चितम्।।५।।**

हे महामुने! सांख्यादीनां सर्वेषां - प्रकृतिपुरुषलक्षणपदार्थद्वयप्रतिपादकम् अनीश्वरवादि सांख्यम्, कष्टकरयमनियमाद्यष्टाङ्ग - प्रतिपादकं सेश्वरवादि योगशास्त्रम्, विष्णुदीक्षाङ्गभूततप्तमुद्राधारणादि - प्रतिपादकम् अत एव चिदचिदीश्वरलक्षणपदार्थत्रयप्रतिपादकं पाञ्चरात्रम्, शिवस्य अप्रयत्नसिद्धनिः- श्वासरूपाः अतएव अकृत्रिमाः ऋग्यजुः - सामरूपाः वेदाः, शिवप्रणीतं पशुपाशपतिलक्षणपदार्थत्रयप्रतिपादकं पाशुपतम् - इत्येतेषां सर्वेषां सांख्यादीनां वेदाः एव प्रधानम्। अत एव वेदानुसरणात् वेदान् अनुसृत्य वर्तमानात् एषाम् प्रामाण्यमस्ति इति निश्चितम्।

**पाञ्चरात्रस्य सांख्यस्य योगस्य च तथा मुने।**
**वेदैकदेशवर्तित्वं शैवं वेदमयं मतम्।।६।।**

पाञ्चरात्रस्य, सांख्यस्य, योगस्य, चकारात्, वेदानाम्, पाशुपतस्य च अर्थात् एतेषां पञ्चसिद्धान्तानां वेदैकदेशवर्तित्वं वेदस्य एकदेशवर्तित्वं मतम्, परं शैवं तावत् शास्त्रं वेदमयमेव इति मतम्।

**वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने!।**
**सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते।।७।।**

हे महामुने! वेदैकदेशवर्तिभ्यः सांख्यादिभ्यः सकाशात्, सर्ववेदानुसारित्वात् सर्वेषां वेदानाम् अनुसारित्वात् शैवतन्त्रं विशिष्यते अतिशयेन वर्तते।

**शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।**
**सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।८।।**

शैवतन्त्रं तावत् शिवोदितं सत् शिवेन उदितं प्रोक्तं सत् सिद्धान्ताख्यम् सिद्धान्तः इति आख्या यस्य तत् सिद्धान्ताख्यं सिद्धान्तः इति नाम्ना प्रोक्तम्।

एतदपि शैवतन्त्रम् तावत् सर्ववेदार्थरूपत्वात् सर्वे च ते वेदाश्च सर्ववेदाः उपनिषदश्च आक्षिप्यन्ते, अतः सर्वेषां वेदानां सर्वासाम् उपनिषदां च अर्थरूपत्वात् सदा वेदवदेव प्रामाण्यमस्ति।

**आगमा बहुधा प्रोक्ताः शिवेन परमात्मना।**
**शैवं पाशुपतं सोमं लाकुलञ्चेति भेदतः।।९।।**

परमात्मना शिवेन प्रोक्ताः आगमास्तु शैवम्, पाशुपतम्, सोमम्, लाकुलञ्च इति भेदतः बहुधा अनेन प्रकारेण प्रोक्ताः।

**तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम्।**
**वामञ्च दक्षिणञ्चैव मिश्रं सिद्धान्तसंज्ञकम्।।१०।।**

तेषु पूर्वोक्तेषु शैवादिभेदेषु शैवं तन्त्रं तावत् वामम्, दक्षिणम्, मिश्रम्, सिद्धान्तसंज्ञकं सिद्धान्तम् इति चतुर्भेदं सत् वर्तते इति सर्वविनिश्चितम् सर्वैरपि निश्चितमस्ति।

**शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम्।**
**सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम्।।११।।**

वामाख्यं तन्त्रं शक्तिप्रधानम्, दक्षिणं तन्त्रं भैरवात्मकम्, मिश्रं तन्त्रं सप्तमातृपरम्, सिद्धान्ततन्त्रं वेदसम्मतमस्ति। 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही चैव चेन्द्राणी चामुण्डा सप्तमातरः।।' इत्यमरः।

**वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः।**
**वेदबाह्यविरोधित्वाद् वेदसम्मत उच्यते।।१२।।**

वेदधर्माभिधायित्वात् वेदस्य धर्माः वेदधर्माः तेषामभिधायित्वात् भस्मधारण-रुद्राक्षधारण-लिङ्गधारणादि-वेदधर्माणाम् प्रतिपादितत्वात् सिद्धान्ताख्यः शिवागमः वेदबाह्यविरोधित्वात् च वेदबाह्याः जैनबौद्धादयः तेषां विरोधित्वाच्च वेदसम्मतः इत्युच्यते।

**उच्यते**– वच-परिभाषणे, कर्मणि लट्।

**वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात् ।**
**प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा।।१३।।**

एकार्थप्रतिपादनात् एकस्यैव अर्थस्य प्रतिपादकत्वात् 'सर्ववेदेषु यद् दृष्टं तत्सर्वं तु शिवागमे' इत्यागमवचनानुसारमेकार्थप्रतिपादकत्वात्, वेदसिद्धान्तयोः वेदश्च सिद्धान्तश्च वेदसिद्धान्तौ तयोः वेदसिद्धान्तयोः ऐक्यम् एकत्वम्, अपि च सदृशं प्रामाण्यं समानमेव प्रामाण्यम् इति तयोः विषये सदा पण्डितैः ज्ञेयम् अवगन्तव्यम्।

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।**
**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्।।१४।।**

शिवोदिते शिवेन उदिते उक्ते, कामिकाद्ये कामिकादिवातुलान्ते सिद्धान्ताख्ये अष्टाविंशतिसंख्याके महातन्त्रे उत्तरे भागे ज्ञानपादभागे परम् उत्कृष्टं वीरशैवमतं निर्दिष्टमस्ति प्रतिपादितं वर्तते।

**विद्यायां शिवरूपायां विशेषाक्रमणं यतः।**
**तस्मादेते महाभागा वीरशैवा इति स्मृताः।।१५।।**

शिवरूपायां परशिवब्रह्मस्वरूपायां शिवैक्यबोधिकायाम् विद्यायाम् येषाम् यतः यस्मात् कारणात् विशेषात् आधिक्येन रमणम् आसक्तिरस्ति तस्मादेव एते महाभागाः महानुभावाः वीरशैवाः इति स्मृताः।

**वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका।**
**तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः।।१६।।**

वी-शब्देन शिवजीवैक्यबोधिका शिवश्च जीवश्च शिवजीवौ तयोः ऐक्यं शिवजीवैक्यं तस्य बोधिका शिवजीवसामरस्यबोधिका विद्या उच्यते, तस्यां विद्यायां ये शैवाः शिवादागताः शैवाः रमन्ते शिवानन्दं प्राप्नुवन्ति ते तु वीरशैवाः इति स्मृताः।

**विद्यायां रमते यस्मान्मायां हेयां श्ववद् दहेत्।**
**अनेनैव निरुक्तेन वीरमाहेश्वरः स्मृतः।।१७।।**

वीरमाहेश्वरः महेश्वरस्य अयं माहेश्वरः वीरश्च असौ माहेश्वरश्च वीरमाहेश्वरः। यस्मात् कारणात् विद्यायां शिवजीवैक्यबोधिकायां विद्यायां रमते नित्यमासक्तो भवति, अपि च तद्विद्याबलादेव हेयां निन्द्यां मायां जननमरणरूपचक्रे विवर्तमानजगद्रूपां मायां श्ववत् श्वाननवत् रहेत् निवारयेत्

तस्मात् कारणात् अनेनैव निरुक्तेन अर्थवत्समासकरणेन वीरमाहेश्वरः इति स्मृतः।

वीरमाहेश्वरः इति पदे षट् अक्षराणि सन्ति। एषाम् अक्षराणां विवरणमेवं द्रष्टव्यम् - वी-विद्या, र-रमणम्, मा-माया, हे-हेयत्वम्, श्व-श्वानः, र-रहित - इति। अर्थात्— लिङ्गाङ्गसामरस्यबोधकविद्यायाः प्रभावात् मायां श्ववत् निराकरणयोग्यां ज्ञात्वा मायारहितः सन् यः वीरशैवः सः वीरमाहेश्वरः इति व्यपदिश्यते।

**रमते**-रमु-क्रीडायाम्, लट्, रमते रमेते रमन्ते-इत्यादि।

**वेदान्तजन्यं यज्ज्ञानं विद्येति परिकीर्त्यते।**
**विद्यायां रमते तस्यां वीर इत्यभिधीयते।।१८।।**

वेदान्तजन्यं वेदान्तेभ्यः जन्यं वेदान्तजन्यं यत् ज्ञानं तदेव विद्या इति परिकीर्त्यते कथ्यते। तस्यां विद्यायां यः रमते सः वीरः इत्यभिधीयते। **परिकीर्त्यते** - परि+कृत-संशब्दने, कर्मणि लट्,

परिकीर्त्यते परिकीर्त्येते परिकीर्त्यन्ते इत्यादि।

**अभिधीयते** – अभि+धी - आधारे, कर्मणि लट्।

**शैवैर्माहेश्वरैश्चैव कार्यमतर्न्बहिः क्रमात्।**
**शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते।।१९।।**

शैवैः माहेश्वरैश्च एव वीरशैवैः वीरमाहेश्वरैश्च अन्तर्बहिः क्रमात् अन्तः, बहिः इति क्रममनुसृत्य शिवलिङ्गार्चनं कार्यं कर्तव्यम्। अर्थात् वीरशैवैः अन्तरङ्गे वीरमाहेश्वरैः बहिरङ्गे शिवलिङ्गपूजा कर्तव्या। इत्येवं शिवः, महेश्वरश्च इति इह अत्यन्तं न भिद्यते एतयोः अत्यन्तं भेदो नास्ति। **भिद्यते** - भिदिर् - विदारणे, कर्मणि लट्।

**यथा तथा न भिद्यन्ते शैवा माहेश्वरा अपि।**
**शिवाश्रितेषु ते शैवा ज्ञानयज्ञरता नराः।।२०।।**

यथा यथा रीत्या शैवाः माहेश्वराश्च न भिद्यन्ते, तथा तथा अपि रीत्या शिवाश्रितेषु शिवम् आश्रित्य वर्तमानेषु पुरुषेषु मध्ये ये नराः मनुष्याः

ज्ञानयज्ञरताः ज्ञानयज्ञे रताः हृत्कमलमध्यस्थचिदात्मकस्य लिङ्गस्य पूजायां रताः सन्तः शैवाः वीरशैवाः इति ते स्मृताः।

**माहेश्वराः समाख्याताः कर्मयज्ञरता भुवि।**
**तस्मादभ्यन्तरे कुर्युः शैवा माहेश्वरा बहिः।।२१।।**

भुवि भूलोके कर्मयज्ञरताः बाह्यकर्मपूजायां रताः वामकरकमल-स्थक्रियाप्रधानेष्टलिङ्गपूजायां रताः सन्तः माहेश्वराः इति समाख्याताः। तस्मात् शैवाः अभ्यन्तरे हृदयकमले ज्ञानकाण्डप्रतिपादित-प्राणलिङ्गिशरणशिवैक्यस्थ-लोक्तधर्मस्य आचरणं कुर्युः, तथैव माहेश्वराः बहिः कर्मकाण्डस्थ-भक्तमहेश्वरप्रसादिस्थलोक्तस्य धर्मस्य आचरणं कुर्युः।

**कुर्युः** - डु-कृञ्-करणे, विधिलिङ्, कुर्यात् कुर्याताम् इत्यादि।

**वीरशैवास्तु षड्भेदाः स्थलधर्मविभेदतः।**
**भक्तादिव्यवहारेण प्रोच्यते शास्त्रपारगैः।।२२।।**

वीरशैवास्तु स्थलधर्मविभेदतः स्थलस्य धर्मः स्थलधर्मः, तस्य विभेदतः भेदात्, भेदमनुसृत्य भक्तादिव्यवहारेण भक्तः, महेश्वरः, प्रसादी, प्राणलिङ्गी, शरणः, ऐक्यश्चेति व्यवहारानुसारं षड्भेदाः इति शास्त्रपारगैः शास्त्रविद्भिः प्रोच्यन्ते कथ्यन्ते।

**प्रोच्यन्ते** – प्र+वच्-परिभाषणे, कर्मणि लट्, उच्यते इत्यादि।

**शास्त्रन्तु वीरशैवानां षड्विधं स्थलभेदतः।**
**धर्मभेद – समायोगादधिकारिविभेदतः।।२३।।**

वीरशैवानां शास्त्रं तावत् तु स्थलभेदतः भक्तादिस्थलभेदात्, धर्मभेदसमायोगात् धर्मस्य भेदः धर्मभेदः तस्य समायोगात्, अधिकारिविभेदतः अधिकारिणः भेदाच्च षड्विधमस्ति। स्थलभेदः भक्तादिकः, धर्मभेदः स्थलोक्तसदाचारादिभेदः, अधिकारिभेदः स्थलनिष्ठभक्ताद्यधिकारिभेदः।

प्रसङ्गवशात् अनुबन्धचतुष्टयस्य समन्वयः—

अधिकारी, विषयः, प्रयोजनम्, सम्बन्धः - इति अनुबन्ध-चतुष्टयम्। वीरशैवधर्मनिष्ठः मुमुक्षुः शिवभक्तः जीवात्मा अधिकारी, एकोत्तरशतस्थलमत्र

विषयः, शिवभक्तिशिवार्चनादि-द्वारा लभ्यमाना शिवजीवैक्यरूपा परामुक्तिः प्रयोजनम्, एकोत्तरशतस्थलात्मकस्य ज्ञानरूपविषयस्य अस्य शास्त्रस्य च प्रतिपाद्यप्रतिपादकभावः सम्बन्धः।

**आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम्।**
**प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः।।**
**शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम्।।२४।।**

षट्स्थलानि तावत् भक्तस्थलम्, माहेश्वरस्थलम्, प्रसादिस्थलम्, प्राणलिङ्गिस्थलम्, शरणस्थलम्, ऐक्यस्थलञ्चेति।

**।।यथाक्रमं षट्स्थलानां स्वरूपम्।।**

**।।तत्र प्रथमं भक्तस्थलस्य स्वरूपनिरूपणम्।।**

**पीठिका–** एकोत्तरशतस्थलानि तावत् (१) अङ्गस्थलानि चतुश्चत्वारिंशत्प्रकारेण (२) लिङ्गस्थलानि च सप्तपञ्चाशत्प्रकारेण च इत्येवं विभज्य अत्र परिशीलितानि वर्तन्ते। पञ्चमपरिच्छेदमारभ्य चतुर्दशपरिच्छेदं यावत् चतुश्चत्वारिंशत् स्थलानां (४४) स्वरूपविवरणम्, अनन्तरं पञ्चदशपरिच्छेदमारभ्य विंशतितमपरिच्छेदं यावत् सप्तपञ्चाशत्स्थलानां (५७) स्वरूपविवरणं कृतमस्ति। अङ्गस्थलगतभक्तादिषट् - स्थलानाम् अवान्तरप्रकाराः, अनन्तरं लिङ्गस्थलगतभक्तादि षट् स्थलानाम् अवान्तरप्रकाराः यथाक्रमं परिशीलिताः। तत्र प्रथमतया अङ्गस्थलगतभक्तस्थलस्य स्वरूपं तदवान्तरप्रकाराणां स्वरूपविवरणम्—

## अङ्गस्थलानि-४४

### भक्तस्थलम्

**भक्तस्थलं प्रवक्ष्यामि प्रथमं कलशोद्भव!।**
**तदवान्तरभेदांश्च समाहितमनाः शृणु।।२५।।**

हे कलशोद्भव! प्रथमं भक्तस्थलं प्रवक्ष्यामि। अनन्तरं तदवान्तरभेदांश्च प्रवक्ष्यामि, समाहितमनाः समाहितं मनः यस्य सः समाहितमनाः सन् शृणु आकर्णय।

**प्रवक्ष्यामि**-प्र+वच-परिभाषणे, लृट् - वक्ष्यति वक्ष्यतः इत्यादि।

**शृणु** - श्रु-श्रवणे - लोट्, शृणोतु - शृणुतात् शृणुताम् - इत्यादि।

**शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते।**
**तस्यानुष्ठेय - धर्माणामुक्तिर्भक्तस्थलं मतम्।।२६।।**

यस्य जीवात्मनः शैवी भक्तिः समुत्पन्ना भवति असौ भक्तः इत्युच्यते। तस्य तस्य भक्तस्य अनुष्ठेयधर्माणाम् अनुष्ठातुं योग्याः अनुष्ठेयाः अनुष्ठेयाश्च ते धर्माश्च अनुष्ठेयधर्माः, तेषाम् अनुष्ठेयधर्माणाम् उक्तिः एव भक्तस्थलमिति मतम्।

**अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः।**
**पिण्डता पिण्डविज्ञानं संसारगुणहेयता।।२७।।**

**दीक्षा लिङ्गधृतिश्चैव विभूतेरपि धारणम्।**
**रुद्राक्षधारणं पश्चात् पञ्चाक्षरजपस्तथा।।२८।।**

**भक्तमार्गक्रिया चैव गुरुर्लिङ्गस्य चार्चनम्।**
**जङ्गमस्य तथा ह्येषां प्रसादस्वीकृतिस्तथा।।२९।।**

**अत्र दानत्रयं प्रोक्तं सोपाधिनिरुपाधिकम्।**
**सहजं चेति निर्दिष्टं समस्तागमपारगैः।।**
**एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः।।३०।।**

भक्तस्थलस्य अवान्तरप्रकाराः पञ्चदश वर्तन्ते। तानि च यथाक्रमम्— (१) पिण्डस्थलम् (२) पिण्डज्ञानस्थलम् (३) संसारहेयस्थलम् (४) दीक्षालक्षण-गुरुकारुण्यस्थलम् (५) लिङ्गधारणस्थलम् (६) विभूतिधारणस्थलम् (७) रुद्राक्षधारणस्थलम् (८) पञ्चाक्षरीजपस्थलम् (९) भक्तमार्गस्थलम् अथवा भक्तिमार्गक्रियास्थलम् (१०) गुरुलिङ्गार्चनरूपोभय - स्थलम् अथवा उभयस्थलम् (११) जङ्गमार्चनलक्षणत्रिविधसम्पत्तिस्थलम् अथवा त्रिविधसम्पत्ति-स्थलम् (१२) एतत्त्रयप्रसादस्वीकारलक्षणचतुर्विधसारायस्थलम् अथवा प्रसादस्वीकारलक्षणस्थलम् (१३) सोपाधिदानस्थलम् (१४) निरुपाधिदानस्थलम् (१५) सहजदानस्थलमिति।

इत्येतानि पञ्चदश अवान्तरप्रकाराः समस्तानाम् आगमानाम् परिज्ञानपूर्णैः विद्वद्भिः निर्दिष्टाः सन्ति। शिवभक्तः एतेषु उक्तेषु स्थलेषु उक्तान् धर्मान् प्रयत्नपूर्वकं यथाशक्ति आचरेत्।

## (१) पिण्डस्थलम्

**बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे।**
**शुद्धान्तःकरणो देही पिण्डशब्देन गीयते।।३१।।**

बहुजन्मकृतैः बहूनि च तानि जन्मानि बहुजन्मानि तेषु कृतैः पुण्यैः कारणैः पापपञ्जरे पापानां पञ्जरे समूहे प्रक्षीणे सति नाशंगते सति, पुण्यैः इत्युक्ते—मनसा कर्मणा वाचा च आचरितानि शिवपूजा शिवध्यानम् इत्यादीनि यानि धार्मिक-कार्याणि एतेषां फलरूपेण प्राप्तैः पुण्यैः पापपञ्जरे नष्टे सति, एवमेव पापानि अपि-कायेन वाचा मनसा च ज्ञातानि वा अज्ञातानि वा कृतानि यानि पापकर्माणि, तेषु नष्टेषु सत्सु, तदा शुद्धान्तःकरणः शुद्धम् अन्तःकरणं यस्य सः शुद्धान्तःकरणः सन् देही जीवात्मा पिण्डशब्देन पिण्डम् (पिण्डः) इति शब्देन गीयते कथ्यते, पिण्डस्थलमिति कथ्यते।

एकोत्तरशतस्थलानां मध्ये प्रथममिदं पिण्डस्थलं तु साधनम् इतराणि साध्यानि वर्तन्ते। शुद्धान्तःकरणत्वं नाम-गुरूपदेशात् तदुपदेशानुसारेण क्रियमाणेन पूजादिना च प्राप्यमाणा स्वानुभूतिः या, तद्द्वारा च परिणामरूपेण लभ्यमानम् अन्तःकरणस्य परिशुद्धत्वम्।

**गीयते**-गै-शब्दे, कर्मणि लट्, गीयते गीयेते गीयन्ते - इत्यादि।

**शिवशक्तिसमुत्पन्न-प्रपञ्चेऽस्मिन् विकल्प्यते।**
**पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः।।३२।।**

शिवशक्तिसमुत्पन्ने शिवश्च शक्तिश्च शिवशक्ती ताभ्यां समुत्पन्ने सम्भूते अस्मिन् प्रपञ्चे पुण्याधिकः पुण्यम् अधिकं यस्य सः अथवा पुण्येन अधिकः अधिकपुण्यवान् अतएव क्षीणपापः क्षीणं पापं यस्य सः क्षीणपापः नष्टपापः सन् शुद्धात्मा शुद्धः आत्मा यस्य सः शुद्धात्मा च सन् जीवः पिण्डनामकः सन् पिण्डम् इति नाम यस्य सः पिण्डनामकः सन् विकल्प्यते इतरेभ्यः भिन्नो भवति।

**विकल्प्यते**-वि+कल्प-व्यक्तायां वाचि, कर्मणि लट्

विकल्प्यते विकल्प्येते विकल्प्यन्ते - इत्यादि।

**एक एव शिवः साक्षाच्चिदानन्दमयो विभुः।।३३।।**

**निर्विकल्पो निराकारो निर्गुणो निष्प्रपञ्चकः।**
**अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः।।३४।।**

चिदानन्दमयः चिदानन्दस्वरूपः स्वतन्त्रतया प्रकाशस्वरूपः, अतएव, साक्षात् - अहमिति देशकालाद्यनवच्छिन्नत्वेन सर्वलोकस्य प्रत्यक्षस्वरूपः, विभुः सर्वव्यापकः परिपूर्णश्च, निर्विकल्पः विकल्परहितः भेदरहितः, अतएव निष्प्रपञ्चकः मायिकप्रपञ्चशून्यः, निराकारः नीलपीताद्याकाररहितः, निर्गुणः मायिकसत्त्वरजस्तमोगुणरहितः, एतादृशः शिवः एकः एव सन् वर्तते अर्थात्, अकुण्ठितेच्छाद्यनेककल्याणगुणगणपूर्णः सन् परशिवः परब्रह्म परमात्मा एक एव वर्तते, अथापिं, अनाद्यविद्यासम्बन्धात् अनादिश्चासौ अविद्या च अनाद्यविद्याजीवब्रह्मविभागवद्वक्ष्यमाणस्वविमर्शशक्त्यनादिकल्पिता या माया, तस्याः सम्बन्धात् अनाद्यविद्यायाः सम्बन्धात्, तदंशः तस्य अंशः ज्ञानक्रियासामरस्यात्मनः शिवस्य अंशः ज्ञानक्रियालक्षणः, जीवनामकः जीव इति नाम यस्य सः तथाभूतः भवति जीवः इति व्यपदिश्यते।

**देवतिर्यङ्मनुष्यादिजातिभेदे व्यवस्थितः।**
**मायी महेश्वरस्तेषां प्रेरको हृदि संस्थितः।।३५।।**

सः एव जीवः देवतिर्यङ्मनुष्यादि-जातिभेदे देवाश्च तिर्यञ्चश्च मनुष्याश्च देवतिर्यङ्मनुष्याः आदिः येषां ते तेषां जातिभेदे-देवाः तिर्यक्पशुपक्षि-सर्पादिप्राणिविशेषाः मनुष्याः इत्यादिनानाजातिभेदे नाना - जातिरूपेण व्यवस्थितः वर्तते। मायी माया अस्मिन् अस्ति इति मायी महेश्वरः - एतादृशचिदानन्दमयत्वनिर्विकल्पाद्युक्तलक्षणः महेश्वरः मायी सन् अनाद्यविद्या-लक्षणमायया शक्त्या सहितः सन् तेषां देवतिर्यङ्मनुष्याद्युक्तलक्षणनानाजातीयानां जीवानां प्रेरकः सन् धर्माधर्मगोचर-बुद्धिवृत्तिप्रेरकः सन् हृदि संस्थितः अन्तरङ्गे तिष्ठति। 'द्वा सुपर्णा सयुजा सखाया एकं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति।।' इति उपनिषद्वाक्यमत्र स्मर्तव्यम्।

**चन्द्रकान्ते यथातोयं सूर्यकान्ते यथानलः।**
**बीजे यथाङ्कुरः सिद्धस्तथात्मनि शिवः स्थितः।।३६।।**

चन्द्रकान्ते चन्द्रकान्तशिलायाम् तोयं जलं यथा सिद्धम्, सूर्यकान्ते सूर्यकान्तशिलायां अनलः अग्निः यथा सिद्धः, बीजे अङ्कुरः यथा सिद्धः तथा एव आत्मनि जीवात्मनि शिवः स्थितः तादात्म्येन तिष्ठति।

अत्र मालोपमालङ्कारः।

**आत्मत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम्।**
**बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्।।३७।।**

पूषणि सूर्ये बिम्बत्वं प्रतिबिम्बत्वं च यथा कल्पितम् तथैव एकत्र ब्रह्मणि एकस्मिन्नेव ब्रह्मणि आत्मत्वं जीवात्मत्वम् ईश्वरत्वं च कल्पितम्।

अत्र पूर्वार्धः उपमेयम् उत्तरार्धः उपमानमिति वाक्यार्थोपमा।

**गुणत्रयविभागेन परतत्त्वे चिदात्मनि।**
**भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम्।।३८।।**

गुणत्रयविभागेन गुणानां त्रयं गुणत्रयं तस्य विभागेन सत्त्वरजस्तमो-रूपगुणविभागेन चिदात्मनि परतत्त्वे परतत्त्वरूपे शुद्धचैतन्ये परब्रह्मणि सात्त्विकादिगुणत्रयानुसारं यथाक्रमं भोक्तृत्वं, भोज्यत्वं, प्रेरकत्वं च इति त्रयं कल्पितम्।

**गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।**
**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा।।३९।।**

ब्रह्मनिष्ठा ब्रह्मणि निष्ठा सामरस्याभेदलक्षणतादात्म्यसम्बन्धेन वर्तमाना, सनातनी प्राचीना नित्या च, गुणत्रयात्मिका ज्ञानक्रियासामरस्यात्मिका स्वाभाविकी, शक्तिः विमर्शशक्तिः वर्तते, तद्वैषम्यात् तस्याः वैषम्यात् तरतमभावात् सा विमर्शाख्या शक्तिः तस्मिन् शुद्धचिदानन्दरूपे परशिवे परब्रह्मणि वस्तुत्रयाभिधा वस्तुत्रयम् इति अभिधा सती भोक्ता भोज्यम् प्रेरकश्चेति वस्तुत्रयरूपेण समुत्पन्ना परिणतिं प्राप्ता।

**किञ्चित्सत्त्वरजोरूपं भोक्तृसंज्ञकमुच्यते।**
**अत्यन्ततामसोपाधिर्भोज्यमित्यभिधीयते ।।**
**परतत्त्वमयोपाधिर्ब्रह्म - चैतन्यमीश्वरः।।४०।।**

किञ्चित्सत्त्वरजोरूपं किञ्चित्सत्त्वरूपं किञ्चिद्रजोरूपं सत् चैतन्यं भोक्तृसंज्ञकम् भोक्ता इति संज्ञा यस्य तादृशं सत् उच्यते, अत्यन्ततामसोपाधिः अत्यन्तं तामसम् उपाधिः यस्य तत् अत्यन्त-तामसगुणोपाधिविशिष्टं चैतन्यं भोज्यमिति भोक्तुं योग्यं भोज्यं रसादिरूपं भोज्यमितिअभिधीयते कथ्यते। परतत्त्वमयोपाधिः भोक्तृभोज्याभ्यां उत्कृष्टत्वेन वर्तमानं परतत्त्वरूपसत्त्वगुणोपाधि-विशिष्टचैतन्यं ब्रह्मचैतन्यं प्रेरकीभूतः ईश्वरः महेश्वरः इत्यभिधीयते। **उच्यते**- वच-परिभाषणे, कर्मणि लट्। **अभिधीयते** - अभि+धा - आधारे, लट् अभिधीयते अभिधीयेते इत्यादि।

**भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम्।**
**अखण्डे ब्रह्मचैतन्ये कल्पितं गुणभेदतः।।४१।।**

भोक्ता भोज्यम् प्रेरयिता इति इदं वस्तुत्रयमिति स्मृतम्। इत्येतत् त्रितयम् अखण्डे ब्रह्मचैतन्ये गुणभेदतः पूर्वोक्तरीत्या गुणत्रयरूपेण कल्पितमस्ति।

**अत्र प्रेरयिता शम्भुः शुद्धोपाधिर्महेश्वरः।**
**समिश्रोपाधयः सर्वे भोक्तारः पशवः स्मृताः।।४२।।**

अत्र भोक्ता भोज्यं प्रेरकः इति वस्तुत्रयमध्ये प्रेरयिता शम्भुः शुद्धोपाधिः शुद्धः उपाधिः यस्य तादृशः सन् महेश्वरः एव, समिश्रोपाधयः मिश्रोपाधिना सहिताः समिश्रोपाधयःकिञ्चित्सत्त्वरजोरूपमिश्रोपाधयः सर्वे भोक्तारः पशवः इति स्मृताः। भोक्ता पशुः जीवः इति पर्यायपदानि।

**भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम्।**
**सर्वज्ञः प्रेरकः शम्भुः किञ्चिज्ज्ञो जीव उच्यते।।**
**अत्यन्तगूढचैतन्यं जडमव्यक्तमुच्यते।।४३।।**

शुद्धतामसरूपकं शुद्धतामसगुणयुक्तत्वात् शुद्धतामसोपाधिकं भोज्यं तावत् अव्यक्तम् इत्युक्तम्, अधिकसत्त्वोपाधिकत्वात् शम्भुः सर्वज्ञः प्रेरकः इत्युक्तः, जीवः किञ्चिज्ज्ञः किञ्चित् जानाति इति किञ्चिज्ज्ञः इत्युच्यते।

वृक्षादीनाम् इन्द्रियप्राणादिशून्यत्वेन केवलजडत्वे सत्यपि पिपासादीनां विद्यमानत्वात्, सस्यादीनां शिलादीनां च वृद्धेः दर्शनात् तेषु चैतन्य-मव्यक्तरूपेण वर्तत इति कृत्वा, अत्यन्त-गूढचैतन्यं अत्यन्तं गूढं च तत् चैतन्यं च अत्यन्तगूढचैतन्यं तावत् जडम्, अव्यक्तम् इत्युच्यते। अव्यक्तम्, प्रकृतिः, माया, जडम् - इति पर्यायपदानि।

**उपाधिः पुनराख्यातः शुद्धाशुद्धविभेदतः।**
**शुद्धोपाधिः परा माया स्वाश्रया मोहकारिणी।।४४।।**

पूर्वोक्ता माया उपाधिः पुनः शुद्धाशुद्धविभेदतः शुद्धश्च अशुद्धश्च शुद्धाशुद्धौ इति विभेदात् द्विधा आख्यातः, शुद्धोपाधिः एव परा माया, एषा च स्वाश्रया सती स्वः आश्रयः यस्याः सा स्वाश्रया ईश्वरम् आश्रित्य वर्तमाना सती ईश्वरस्य मोहकारिणी मोहं कर्तुं शीलम् अस्ति अस्याम् इति मोहकारिणी अतएव ऊर्ध्वमाया अस्ति।

**अशुद्धोपाधिरप्येवमविद्याश्रयमोहिनी ।**
**अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः।।४५।।**

एवमेव अशुद्धोपाधिः अपि अविद्याश्रयमोहिनी अविद्यायाः आश्रयेण मोहकारिणी वर्तते। इयं च जीवान् आश्रित्य वर्तमानत्वात् अधोमाया इति व्यपदिश्यते। एवम् अविद्याशक्तिभेदेन अविद्या च असौ शक्तिश्च अविद्याशक्तिः तस्याः भेदेन तदंशवशात्, जीवाः बहुविधाः स्मृताः। शिवस्य मोहकारिणी ऊर्ध्वमाया, जीवानां मोहकारिणी च अधोमाया इति विवेकः।

**मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः।**
**सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः।।४६।।**

ईशः शुद्धोपाधियुक्तः प्रभुः परमेश्वरः अर्थात् कर्तुम् अकर्तुम् अन्यथाकर्तुं च समर्थः परमेश्वरः मायाशक्तिवशात् एव मायाशक्तेः वशादेव संसर्गस्य प्रभावादेव नानामूर्तिधरः सद्योजातत्वचन्द्रशेखरत्वकालहरत्त्वादिदिव्य-मङ्गलविग्रहरूपधारी सन् स्वयं सर्वज्ञः सर्वकर्ता नित्यमुक्तश्च वर्तते। सर्वेषां जीवानां बुद्धिप्रेरकत्वात् सत्-असत् इति सकलपदार्थविषयकानादिज्ञानशक्तिमान् सन् सर्वज्ञः, सकलप्रपञ्चनिर्माणनिमित्तकारणीभूतत्वात् सर्वकर्ता, आणवादि-

अनादिमलसम्बन्धरहितत्वात् नित्यमुक्तः।

**किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।**
**अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।।४७।।**

**परिभ्रमन्ति संसारे निजकर्मानुसारतः।**
**देवतिर्यङ्मनुष्यादि - नानायोनिविभेदतः।।४८।।**

सः जीवः किञ्चित्कर्ता अल्पकर्तृत्ववान्, किञ्चिज्ज्ञः अल्पज्ञः, बद्धः आणवमायीयकार्मिकरूपैः अनादिगतपाशैः बद्धः सन् अनादिशरीरवान् अनादितः प्राप्तशरीरसम्पर्कवान् वर्तते। एवं विधाः जीवाः अविद्यामोहिताः अविद्यया मोहं प्राप्ताः सन्तः, ब्रह्मैक्यज्ञानवर्जिताः ब्रह्मैक्यस्य ज्ञानेन दूरीकृताः सन्तः, निजकर्मानुसारतः निजानां कर्मणाम् अनुसारतः स्वानुष्ठितपापपुण्यादिकर्मवशात्, देवतिर्यङ्-मनुष्यादिनानायोनिविभेदतः देवाश्च तिर्यञ्चश्च मनुष्याश्च आदयः येषां ते देवतिर्यङ्मनुष्यादयः तेषां नानायोनीनां विभेदात् संसारे जननमरणरूपचक्रे परिभ्रमन्ति।

'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्' - इत्याचार्योक्तदिशा परिभ्रमन्ति।

**परिभ्रमन्ति** - परि+भ्रमु-चलने लट् भ्रमति इत्यादि।

**चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः।**
**जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्।।४९।।**

शरीरिणः जीवाः चक्रनेमिक्रमेण एव चक्रस्य नेमिः चक्रनेमिः तस्याः क्रमेण एव 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण', 'चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः' इत्यादिकव्युक्तप्रमाणानुसारं जननमरणचक्रे भ्रमन्ति। यतः, जात्यायुर्भोगवैषम्यकारणं - जातिश्च आयुश्च भोगश्च वैषम्यं च जात्यायुर्भोगवैषम्यानि तेषां कारणं तावत् केवलं कर्म एव वर्तते।

**पूर्वार्धः** विशेषवाक्यम्, **उत्तरार्धः** सामान्यवाक्यम्, सामान्येन विशेषसमर्थनरूपः काव्यलिङ्गालङ्कारः।

**चक्रनेमिक्रमेण** - इत्यत्र उपमाध्वनिः।

**एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।**
**एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे।।५०।।**

संसारे नित्यं भ्रमताम् एतेषां देहिनां साक्षी सन् परमेश्वरः एतेषां कर्मयन्त्रनियन्त्रणे कर्म एव यन्त्रं कर्मयन्त्रं तस्य नियन्त्रणे विषयेऽपि प्रेरकः वर्तते।

**देहिनां प्रेरकः शम्भुर्हितमार्गोपदेशकः।**
**पुनरावृत्तिरहितमोक्षमार्गोपदेशकः ।।५१।।**

प्रेरकः शम्भुः देहिनां शरीरिणां हितमार्गोपदेशकः हितश्च असौ मार्गश्च हितमार्गः तस्य उपदेशकः बोधकः अपि च पुनरावृत्तिरहितमोक्षमार्गोपदेशकः जननमरणरूपया पुनरावृत्त्या रहितः पुनरावृत्तिरहितः स चासौ मोक्षश्च पुनरावृत्तिरहितमोक्षः तस्य मार्गस्य उपदेशकः बोधकः अपि वर्तते। न केवलं हितमार्गोपदेशकः परं मोक्षमार्गोपदेशकश्च वर्तते।

**स्वकर्मपरिपाकेन प्रक्षीणमलवासनः।**
**शिवप्रसादाज्जीवोऽयं जायते शुद्धमानसः।।५२।।**

स्वकर्मपरिपाकेन स्वस्य कर्म स्वकर्म तस्य परिपाकेन स्वस्य कर्मणः परिपक्वतया प्रक्षीणमलवासनः प्रक्षीणा मलानां वासना यस्य सः प्रक्षीणमलवासनः समग्रतया दूरीकृतमलत्रयसम्पर्कः सन् शिवप्रसादात् च शिवस्य प्रसादः शिवप्रसादः तस्मात् च अयं जीवः शुद्धमानसः शुद्धं मानसं यस्य सः शुद्धमानसः परिशुद्धचित्तवान् जायते। **जायते**-जनी-प्रादुर्भावे, लट्, जायते जायेते- इत्यादि।

**शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः।**
**जायते शिवकारुण्यात् प्रस्फुटा भक्तिरैश्वरी।।५३।।**

**जन्तुरन्त्यशरीरोऽसौ पिण्डशब्दाभिधेयकः।।५४।।**

शुद्धकर्मविपाकतः शुद्धं च तत् कर्म च शुद्धकर्म तस्य विपाकतः परिपक्वकारणात् शुद्धान्तःकरणे शुद्धम् अन्तःकरणं यस्य सः शुद्धान्तःकरणः तस्मिन् शुद्धान्तःकरणे जीवे परिशुद्धान्तःकरणवति जीवे शिवकारुण्यात् शिवस्य कारुण्यात् प्रस्फुटा अत्यन्तं परिशुद्धा ऐश्वरी भक्तिः ईश्वरस्य इयम् ऐश्वरी ईश्वरसम्बन्धिनी ईश्वरविषयिका भक्तिः जायते सम्भवति।

*।।इति पिण्डस्थलम्।।*

## (२) पिण्डज्ञानस्थलम्

**शरीरात्मविवेकेन पिण्डज्ञानी स उच्यते।**
**शरीरमेव चार्वाकैरात्मेति परिकीर्त्यते।।५५।।**

सः पिण्डनामकः जीवः एव, शरीरात्मविवेकेन शरीरं च आत्मा च शरीरात्मानौ तयोः विवेकेन परिज्ञानेन, शरीरात्मनोः तत्तदवस्थालक्षणानुसारं कुत्रचित् भेदः कुत्रचित् अभेदः इत्यात्मकेन परिज्ञानेन, पिण्डज्ञानी पिण्डस्य ज्ञानमस्य अस्ति इति पिण्डज्ञानी इति कथ्यते। किन्तु चार्वाकैः चार्वाकदर्शनानुसारिभिः शरीरमेव आत्मा इति परिकीर्त्यते परिगण्यते। यस्मात् शरीरी अगोचरः तस्मात् गोचरीभूतं शरीरमेव आत्मा, शरीरात् पृथक् आत्मा नास्ति इति चार्वाकमतम्।

**परिकीर्त्यते** - परि+कृत -संशब्दने, कर्मणि लट् -

परिकीर्त्यते परिकीर्त्येते - इत्यादि।

**इन्द्रियाणां तथात्मत्वमपरैः परिभाष्यते।**
**बुद्धितत्त्वगतैर्बौद्धैर्बुद्धिरात्मेति गीयते।।५६।।**

तथैव अपरैः इतरैः कैश्चित् इन्द्रियाणां चक्षुरादिज्ञानेन्द्रियाणाम् आत्मत्वं परिभाष्यते कथ्यते, तथैव बुद्धितत्त्वगतैः बुद्धिः एवं तत्त्वं बुद्धितत्त्वं तत्र गतैः आसक्तैः बौद्धैः तावत् बुद्धिरेव आत्मा इति गीयते।

**परिभाष्यते** - परिभाष-व्यक्तायां वाचि, कर्मणि लट्।

**गीयते** - गै-शब्दै, कर्मणि लट् - गीयते गीयेते - इत्यादि।

**नेन्द्रियाणां न देहस्य न बुद्धेरात्मता भवेत्।**
**अहं प्रत्ययवेद्यत्वादनुभूतस्मृतेरपि।।५७।।**

अहं प्रत्ययवेद्यत्वात् अहं स्थूलः अहं कृशः इत्यादिः यः प्रत्ययः विश्वासः तस्य वेद्यत्वात्, अपि च अनुभूतस्मृतेः अनुभूता या स्मृतिः पूर्वं बालः आसमहम् इदानीं तरुणः अस्मि इत्याद्यात्मानुभूतस्मृतेश्च कारणात्- इन्द्रियाणां नात्मत्वम्, देहस्यापि नात्मत्वम्, नापि च बुद्धेः आत्मता भवेत्।

**भवेत्** - भू-सत्तायाम्, विधिलिङ् - भवेत् भवेताम् - इत्यादि।

**शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तः सनातनः।**
**आत्मस्थितिविवेकी यः पिण्डज्ञानी स कथ्यते।।५८।।**

शरीरेन्द्रियबुद्धिभ्यः शरीराणि च इन्द्रियाणि च बुद्धयश्च शरीरेन्द्रियबुद्धयः ताभ्यः व्यतिरिक्तः नितरां भिन्नः, सनातनः प्राचीनः सर्वकारणकारणः आत्मा अस्ति इति यः आत्मस्थितिविवेकी आत्मनः स्थितिः आत्मस्थितिः तस्याः स्थितेः विवेकः अस्ति अस्मिन् इति आत्मस्थितिविवेकी आत्मस्थितेः परिज्ञानवानेव सः पिण्डज्ञानी इति कथ्यते, पिण्डस्य ज्ञानमस्य अस्तीति पिण्डज्ञानी।

**कथ्यते**-कथ-वाक्यप्रबन्धे, कर्मणि लट् , कथ्यते कथ्येते इत्यादि।

**नश्वराणि शरीराणि नानारूपाणि कर्मणा।**
**आश्रितो नित्य एवासाविति जन्तोर्विवेकिता।।५९।।**

कर्मणा स्वेनाचरितकर्मणा प्राप्तानि नानारूपाणि देवतिर्यगादि-रूपाणि शरीराणि नश्वराणि नाशयुक्तानि, किन्तु तानि शरीराणि आश्रितः आश्रित्य वर्तमानः असौ एव असौ जीवात्मा एव नित्यः नाशरहितः इति जन्तोः जीवात्मनः विवेकिता विवेकिनः भावः विवेकिता अस्ति।

**शरीरात् पृथगात्मानमात्मभ्यः पृथगीश्वरम्।**
**प्रेरकं यो विजानाति पिण्डज्ञानीति कथ्यते।।६०।।**

आत्मानं जीवात्मानं शरीरात् पृथक् भिन्नम्, तथैव आत्मभ्यः अनन्तात्मभ्यः पृथक् ईश्वरम् भिन्नं सन्तं च, अपि च प्रेरकं च यः विजानाति सः पिण्डज्ञानी इति कथ्यते।

**'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।**
**एतद्यो वेद तं प्राहुः क्षेत्रज्ञ इति तद्विदः।।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम।**
**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।।'**

इति भगवद्गीतोक्तिः।

*।।इति पिण्डज्ञानस्थलम्।।*

## (३) संसारहेयस्थलम्

**निरस्तहृत्कलङ्कस्य नित्यानित्यविवेकिनः।**
**संसारहेयताबुद्धिर्जायते वासनाबलात्।।७१।।**

निरस्तहृत्कलङ्कस्य निरस्तः हृदि कलङ्कः यस्य सः तस्य अनेकजन्मार्जितसुकृतवशात् हृदि वर्तमानानां आणवादिमलानां नाशयुक्तहृदयस्य, नित्यानित्यविवेकिनः नित्यं च अनित्यं च नित्यानित्ये एतयोः विवेकः अस्ति अस्मिन् इति तस्य नित्यानित्यपरिज्ञानवतः जीवात्मनः वासनाबलात् आचरितपुण्यकर्मणां संस्कारविशेषबलात् संसारहेयताबुद्धिः संसारे हेयतायाः बुद्धिः संसारहेयताबुद्धिः जायते उत्पद्यते।

**जायते**-जनी-प्रादुर्भावे- लट्, जायते जायेते इत्यादि।

**ऐहिके क्षणिके सौख्ये पुत्रदारादिसम्भवे।**
**क्षयित्वादियुते स्वर्गे कस्य वाञ्छा विवेकिनः?।।७२।।**

ऐहिके इहलोकसम्बन्धिनि, पुत्रदारादिसम्भवे पुत्राश्च दाराश्च आदयः येषां ते पुत्रदारादयः तैः सम्भवे पुत्रदाराभिः सम्भाव्यमाने क्षणिके सौख्ये नश्वरे सौख्ये विषये, क्षयित्वादियुते क्षयित्वम् आदिः यस्य सः क्षयित्वादिः तेन युते क्षणिकत्वात् नाशयुते स्वर्गे स्वर्गे विषये विवेकिनः शुद्धज्ञानवतः कस्य वा वाञ्छा भवति? न कस्यापि अपेक्षा भवति। पुत्रदारादिविषयकं लौकिकं सुखम्, ज्योतिष्टोमादिनित्यनैमित्तिकादियागफलकं स्वर्ग - सुखम् इत्यादिकं केवलक्षणिकम्। अतः विवेकसम्पन्नस्य एतादृशसुखापेक्षा नास्त्येव।

'ते तं भुक्त्वा स्वर्गलोकं विशालम्।

क्षीणे पुण्ये मर्त्यलोकं विशन्ति।।' इति भगवद्गीतोक्तिः।

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।**
**जन्तुर्मरणजन्मभ्यां परिभ्रमति चक्रवत्।।६३।।**

जातस्य जन्म धृतवतः पुरुषस्य मृत्युः मरणं ध्रुवः निश्चितः, तथैव मृतस्य च मरणं प्राप्तस्य जन्म ध्रुवमेव। इत्येवं जन्तुः जीवः जीवात्मा मरण- जन्मभ्यां मरणञ्च जन्म च मरणजन्मनी ताभ्यां मरणजन्मभ्यां चक्रवत् परिभ्रमति।

अत्र उपमालङ्कारः।

**मत्स्यकूर्मवराहाङ्गैर्नृसिंहमनुजादिभिः ।**
**जातेन निधनं प्राप्तं विष्णुनापि महात्मना।।६४।।**

महात्मना स्थितिकर्तृत्वात् महत्त्वं प्राप्तवता विष्णुना अपि, मत्स्यकूर्मवराहाङ्गैः मत्स्यश्च कूर्मश्च वराहश्च मत्स्यकूर्मवराहाः इत्येतैः अङ्गैः शरीरैः सह नृसिंहमनुजादिभिः नृसिंहश्च मनुजश्च आदिः येषां ते नृसिंहमनुजादयः तैः नृसिंहमनुजादिभिः, मत्स्यः, कूर्मः, वराहः, नृसिंहः, रामः, कृष्णः इत्यादिरूपैः जातेन विष्णुना अपि निधनं प्राप्तम्।

एवमेव जीवात्मा अपि निधनं प्राप्तः सन् पुनरपि जननं प्राप्नोति, एवं भवचक्रे परिभ्रमति।

**भूत्वा कर्मवशाज्जन्तुर्ब्राह्मणादिषु जातिषु।**
**तापत्रयमहावह्नि - सन्तापाद्दह्यते भृशम्।।६५।।**

जन्तुः जीवात्मा कर्मवशात् कर्मणः वशात् पूर्वजन्मकृतकर्मणां वशात् ब्राह्मणादिषु ब्राह्मणः क्षत्रियः वैश्यः शूद्रः इत्येवमादिषु जातिषु भूत्वा जन्म लब्ध्वा तापत्रयमहावह्निसन्तापात् औष्ण्यात् भृशम् अत्यर्थं दह्यते दग्धो भवति।

**दह्यते** - दह - भस्मीकरणे, कर्मणि लट्, दह्यते दह्येते इत्यादि।

**कर्ममूलेन दुःखेन पीड्यमानस्य देहिनः।**
**आध्यात्मिकादिना नित्यं कुत्र विश्रान्तिरिष्यते?।।६६।।**

कर्ममूलेन कर्म मूलं यस्य तत् तेन कर्मकारणेन आध्यात्मिकादिना आध्यात्मिकम् आधिदैविकं आधिभौतिकं च इति तापत्रयरूपेण दुःखेन नित्यं पीड्यमानस्य बाध्यमानस्य देहिनः जीविनः विश्रान्तिः विरामः कुत्र इष्यते अपेक्ष्यते? न कुत्रापि विश्रान्तिरस्ति।

**आध्यात्मिकं तु प्रथमं द्वितीयं चाधिभौतिकम्।**
**आधिदैविकमन्यच्च दुःखत्रयमिदं स्मृतम्।।६७।।**

आध्यात्मिकमिति प्रथमं दुःखं, द्वितीयं तु दुःखम् आधिभौतिकम्,

अन्यत् तृतीयञ्च आधिदैविकम् -इतीदं दुःखत्रयमिति स्मृतम्।

**आध्यात्मिकं द्विधा प्रोक्तं बाह्याभ्यन्तरभेदतः।**
**वातपित्तादिजं दुःखं बाह्यमाध्यात्मिकं मतम्।।६८।।**

आध्यात्मिकं दुःखं तावत् बाह्याभ्यन्तरभेदतः बाह्यं च आभ्यन्तरं च बाह्याभ्यन्तरे इति भेदतः इति भेदात् द्विधा प्रोक्तम्। वातपित्तादिजं वातश्च पित्तं च वातपित्ते आदिनी यस्य तत् वातपित्तादि तेन जातम् दुःखं वातपित्तादिजं दुःखं तु बाह्यमाध्यात्मिकम् इति मतम्। वातपित्तादिजम् इत्यत्र आदिपदेन श्लेष्म ग्राह्यम्। एवं वातविकृतिः पित्तविकृतिः श्लेष्मविकृतिः अथवा कफविकृतिः इति त्रयं बाह्यमाध्यात्मिकम्।

**रागद्वेषादिसम्पन्नमान्तरं परिकीर्त्यते।**
**आधिभौतिकमेतद्धि दुःखं राजादिभूतजम्।।६९।।**

रागद्वेषादिसम्पन्नं रागश्च द्वेषश्च आदिः यस्य तत् रागद्वेषादि तेन सम्पन्नम् आन्तरं दुःखमिति परिकीर्त्यते। आन्तरमाध्यात्मिकम् इति कथ्यते। राजादिभूतजं राजादयश्च भूताश्च राजादिभूताः तैः जातं दुःखं तावत् एतत् आदिभौतिकम् इति परिकीर्त्यते।

**आधिदैविकमाख्यातं ग्रहयक्षादिसम्भवम्।**
**दुःखैरेतैरुपेतस्य कर्मबद्धस्य देहिनः।।७०।।**

ग्रहयक्षादिसम्भवं ग्रहाश्च यक्षाश्च आदयः यस्य तत् ग्रहयक्षादि तेन सम्भवम् दुःखं तु आधिदैविकम् इति आख्यातम्। एतैः त्रिभिः दुःखैः उपेतस्य कर्मबद्धस्य कर्मणा बद्धस्य च देहिनः मनुष्यस्य स्वर्गे वा स्वर्गलोके वा यदि वा अथवा भूमौ वा भूलोके वा सुखलेशः सुखस्य लेशः अपि न विद्यते।

**विद्यते** - विद-सत्तायाम् - लट्, विद्यते विद्येते इत्यादि।

**तडित्सु वीचिमालासु प्रदीपस्य प्रभासु च।**
**सम्पत्सु कर्ममूलासु कस्य वा स्थिरता-मतिः?।।७१।।**

चञ्चलगुणयुक्तासु तडित्सु विद्युत्सु वीचिमालासु तरङ्गाणां श्रेणिषु, प्रदीपस्य प्रभासु शिखासु, अपि च कर्ममूलासु कर्म मूलं यासां तासु सम्पत्सु

च विषये कस्य वा स्थिरता-मतिः स्यात्? न कस्यापि आसु स्थिरत्वबुद्धिः भवति।

**मलकोशे शरीरेऽस्मिन् महादुःखविवर्धने।**
**तडिदङ्कुरसंकाशे को वा रुच्येत पण्डितः?।।७२।।**

मलकोशे मलस्य कोशे मलत्रयादिकस्य आधारभूते महादुःखविवर्धने महत् च तत् दुःखं च महादुःखं तस्य विवर्धने महादुःखविवर्धके, तडिदङ्कुशसंकाशे तडितः अङ्कुरः तडिदंकुरः तस्य संकाशः इव संकाशः यस्मिन् तस्मिन् अस्मिन् शरीरे विषये पण्डितः ज्ञानी को वा रुच्येत? न कोऽपि आसक्तिं प्राप्नुयात्। तडिदंकुरसंकाशे इत्यत्र उपमाध्वनिः।

**रुच्येत** - रुच - दीप्तौ अभिप्रीतौ च, विधिलिङ्

रुच्येत रुच्येयाताम् रुच्येरन् इत्यादि।

**नित्यानन्दचिदाकारमात्मतत्त्वं विहाय कः?।**
**विवेकी रमते देहे नश्वरे दुःखभाजने।।७३।।**

नित्यानन्दचिदाकारं नित्यानन्दं च तत् चिदाकारं च नित्यानन्दचिदाकारं सच्चिदानन्दस्वरूपात्मकम् आत्मतत्त्वं आत्मनः तत्त्वं परात्मजीवात्मतत्त्वं विहाय परित्यज्य दुःखभाजने दुःखस्य भाजने दुःखस्य मूलकारणीभूते दुःखस्य आश्रयीभूते नश्वरे नाशयुक्ते देहे विषये विवेकी शिवज्ञानसम्पन्नः कः रमते कः आसक्तो भवति? न कोऽपि आसक्तो भवति।

**विवेकी शुद्धहृदयो निश्चितात्मसुखोदयः।**
**दुःखहेतौ शरीरेऽस्मिन् कलत्रे च सुतेषु च।।७४।।**

**सुहृत्सु बन्धुवर्गेषु धनेषु कुलपद्धतौ।**
**अनित्यबुद्ध्या सर्वत्र वैराग्यं परमश्नुते।।७५।।**

शुद्धहृदयः शुद्धं हृदयं यस्य सः शुद्धहृदयः, निश्चितात्मसुखोदयः आत्मनः सुखं आत्मसुखं निश्चितं च तत् आत्मसुखं च निश्चितात्मसुखं तस्य उदयः यस्य सः निश्चितात्मसुखोदयः श्रुतिभिः गुरुभिः स्वानुभवैश्च निश्चितरूपेण प्राप्तस्य नित्यानित्यरूपात्मसुखलोलुपः विवेकी शिवज्ञानसम्पन्नः

दुखहेतौ दुःखस्य हेतौ दुःखस्य कारणीभूते अस्मिन् शरीरे विषये कलत्रे विषये सुतेषु च विषये सुहृत्सु मित्रेषु विषये बन्धुवर्गेषु विषये धनेषु विषये कुलपद्धतौ च विषये कुलक्रमागतपद्धतौ च विषये इत्येवं सर्वत्र च विषयेषु अनित्यबुद्ध्या अनित्यस्य बुद्ध्या परम् उत्कृष्टं वैराग्यम् अश्नुते प्राप्नोति।

**अश्नुते** - अशू - व्याप्तौ संघाने च, लट्,

अश्नुते अश्नुवांते अश्नुवते इत्यादि।

**विवेकिनो विरक्तस्य विषयेष्वात्मरागिणः।**
**संसार-दुःखविच्छेदहेतौ बुद्धिः प्रवर्तते।।७६।।**

विवेकिनः अध्यात्मज्ञानसम्पन्नस्य विषयेषु विरक्तस्य वित्तवनितादिविषयेषु अनासक्तस्य परम् आत्मरागिणः आत्मनि रागः अस्ति अस्मिन् इति तस्य आत्मतत्त्वाभिलाषिणः पुरुषस्य संसारदुःखविच्छेदहेतौ संसारस्य दुःखं संसारदुःखं तस्य विच्छेदस्य नाशस्य हेतौ कारणीभूते आत्मतत्त्वे विषये बुद्धिः प्रवर्तते।

**प्रवर्तते** - प्र+वृतु-वर्तने लट्, वर्तते वर्तेते इत्यादि।

**नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनो**
**ब्रह्मोपेन्द्रमहेन्द्र-मुख्यविभवेष्वस्थायितां पश्यतः।**
**नित्यानन्दपदे निराकृतजगत्संसारदुःखोदये**
**साम्बे चन्द्रशिरोमणौ समुदयेद्भक्तिर्भवध्वंसिनी।।७७।।**

नित्यं च अनित्यं च नित्यानित्ये तयोः विवेकः अस्ति अस्मिन् इति तस्य इदं नित्यम् इदमनित्यम् इत्यादिविवेकयुक्तस्य क्षेत्रज्ञाक्षेत्रज्ञयोश्च विवेकयुक्तस्य, सुकृतिनः निगमागमाद्युक्तकर्म आचरतः, शुद्धाशयात्मनः शुद्धश्च असौ आशयश्च शुद्धाशयः स एव आत्मा यस्य सः निर्मलान्तःकरणस्य पिण्डशब्दवाच्यस्य जीवात्मनः, ब्रह्मोपेन्द्रमहेन्द्रमुख्यविभवेषु ब्रह्मा च उपेन्द्रश्च महेन्द्रश्च मुख्यः येषां तेषां ब्रह्मोपेन्द्रमहेन्द्रमुख्यानां विभवेषु वैभवेषु विषये अस्थायितां नश्वरतां पश्यतः जानतः जीवात्मनः नित्यानन्दपदे नित्यानन्दस्य पदे स्थाने अर्थात् नित्यपरिपूर्णसच्चिदानन्दाश्रये, निराकृतजगत्संसारदुःखं निराकृतः जगत्संसारदुःखस्य उदयः येन तस्मिन्

दूरीकृतजगत्संसारदुःखवति साम्बे अम्बया सहितः साम्बः तस्मिन् चन्द्रशिरोमणौ चन्द्रः एव शिरोमणिः यस्य तस्मिन् चन्द्रशेखरे विषये भवध्वंसिनी भवस्य ध्वंसिनी भवनाशकरी भक्तिः समुदयेत् सम्पद्येत। श्रवणमननादिरूपा अष्टविधा भक्तिः चन्द्रधरादिनानालीलाविग्रहकारणीभूते महालिङ्गे विषये समुत्पन्ना भवति।

शुद्धान्तःकरणस्य जीवात्मनः अत एव नित्यानित्यवस्तुविवेकिनः ऐहिकामुष्मिकफलभोगविरागद्वारा रागद्वेषादीनां शब्दादीनाम् अन्तरिन्द्रियबहिरिन्द्रिय-विषयाणां वैमुख्येन शमदमादिसम्पत्त्या मुमुक्षुत्वेन संसारदुःखनिवृत्तेः उपायभूते महालिङ्गे भक्तिरुत्पद्यते - इति भावः।

**समुदयेत्** - सम् + उद्+ईङ् - गतौ, विधिलिङ्,

समुदयेत् समुदयेताम् समुदयेयुः इत्यादि।

*इति श्रीवीरशैवसिद्धान्तनिर्णये सिद्धान्तशिखामणौ भक्तस्थले पिण्डज्ञानसंसारहेयस्थलप्रसंगो नाम*

*॥पञ्चमः परिच्छेदः॥*

# ।।षष्ठः परिच्छेदः।।

## (४) गुरुकारुण्यस्थलम्

**ततो विवेकसम्पन्नो विरागी शुद्धमानसः।**
**जिज्ञासुः सर्वसंसारदोषध्वंसकरं शिवम्।।१।।**

विवेकसम्पन्नः विवेकेन सम्पन्नः नित्यानित्यविवेकपरिज्ञानी, विरागी संसारहेयताबुद्धिसत्त्वात् संसारे निरासक्तः सन्, शुद्धमानसः शुद्धं मानसं यस्य सः निर्मलान्तःकरणवान् साधकः, ततः एवं संसारहेयताबुद्धेः प्राप्त्यनन्तरम्, सर्वसंसारदोषध्वंसकरं सर्वश्चासौ संसारश्च सर्वसंसारः तस्य दोषः सर्वसंसारदोषः तस्य ध्वंसं करोति यः तं मुक्तिप्रदानद्वारा संसारदोषनाशकरं शिवं परशिवब्रह्म जिज्ञासुः ज्ञातुम् इच्छुः सन् साधकः—

**उपैति लोकविख्यातं लोभमोहविवर्जितम्।**
**आत्मतत्त्वविचारज्ञं विमुक्तविषयभ्रमम्।।२।।**

लोकविख्यातं लोके विख्यातः तं लोकप्रख्यातम्, लोभमोहविवर्जितं लोभश्च मोहश्च लोभमोहौ ताभ्यां विवर्जितं लोभमोहरहितम्, आत्मतत्त्वविचारज्ञम् आत्मनः तत्त्वम् आत्मतत्त्वम् आत्मतत्त्वस्य विचारं जानाति इति तम् आत्मनः स्वरूपादितत्त्वस्य परामर्शविषये परिपूर्णज्ञानिनम्, विमुक्तविषयभ्रमं विषयस्य भ्रमः विषयभ्रमः विमुक्तः विषयभ्रमः येन तम् वित्तवनितादिविषयाभिलाषरहितं श्रीगुरुम् उपैति।

**उपैति** - उप+इण्-गतौ, एति इतः यन्ति इत्यादि।

**शिवसिद्धान्ततत्त्वज्ञं छिन्नसन्देहविभ्रमम्।**
**सर्वतन्त्रप्रयोगज्ञं धार्मिकं सत्यवादिनम्।।३।।**

शिवसिद्धान्ततत्त्वज्ञं शिवस्य सिद्धान्तः शिवसिद्धान्तः तस्य तत्त्वं जानाति इति तम् शिवसिद्धान्तपरिज्ञानिनम्, छिन्नसन्देहविभ्रमं सन्देहस्य विभ्रमः सन्देहविभ्रमः छिन्नः सन्देहविभ्रमः येन तं शिवशास्त्रपरिज्ञानविषये

सन्देहरहितं सन्देहनिवारकम्, सर्वतन्त्रप्रयोगज्ञं सर्वाणि च तानि तन्त्राणि सर्व तन्त्राणि तेषां प्रयोगं जानाति इति तम् बोधविषयकनानाविधतन्त्रप्रयोगप्रवीणम्, धार्मिकं धर्माचारादिनिरतम्, सत्यवादिनं सत्यवाक्यवक्तारम् श्रीगुरुमुपैति साधकः।

**कुलक्रमागताचारं कुमार्गाचारवर्जितम्।**
**शिवध्यानपरं शान्तं शिवतत्त्वविवेकिनम्।।४।।**

कुलक्रमागताचारं कुलक्रमेण आगतः आचारः यस्य तं परम्परागत-समुदाचारवन्तम्, कुमार्गाचारवर्जितं कुत्सितः मार्गः कुमार्गः कुमार्गश्चासौ आचारश्च कुमार्गाचारः तेन वर्जितं दूरीकृतनिषिद्धाचारवन्तम् शिवध्यानपरं शिवस्य ध्याने तत्परम्, शान्तं रागद्वेषादिरहितम्, शिवतत्त्वविवेकिनं शिवतत्त्वस्य विवेकः अस्ति अस्मिन् इति तं शिवतत्त्वपरिज्ञानवन्तं श्रीगुरुमुपैति।

**भस्मोद्धूलननिष्णातं भस्मतत्त्वविवेकिनम्।**
**त्रिपुण्ड्रधारणोत्कण्ठं धृतरुद्राक्षमालिकम्।।५।।**

भस्मोद्धूलननिष्णातं भस्मनः उद्धूलने निष्णातम् भस्मधारणभस्मोद्धूलन-तत्परम्, भस्मतत्त्वविवेकिनं भस्मनः तत्त्वं भस्मतत्त्वं तस्य विवेकिनं भस्मतत्त्वविषयकपरिज्ञानवन्तम्, त्रिपुण्ड्रधारणोत्कण्ठं त्रिपुण्ड्रधारणे उत्कण्ठं त्रिपुण्ड्रधारणासक्तम् धृतरुद्राक्षमालिकं धृता रुद्राक्षमालिका येन तम् श्रीगुरुमुपैति।

**लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम्।**
**लिङ्गाङ्गयोगतत्त्वज्ञं निरूढाद्वैतवासनम्।।६।।**

लिङ्गधारणसंयुक्तं लिङ्गस्य धारणं तेन संयुक्तं त्रिविधेनापि लिङ्गधारणेन युक्तम्, लिङ्गपूजापरायणं लिङ्गस्य पूजायाः (सदा) परायणं सदा त्रिविधलिङ्गपूजायामासक्तम्, लिङ्गाङ्गयोगतत्त्वज्ञं लिङ्गं च अङ्गं च लिङ्गाङ्गे तयोः योगः लिङ्गाङ्गयोगः तस्य तत्त्वं जानाति इति तं लिङ्गाङ्गयोः योगसम्बन्धिनः तत्त्वस्य परिज्ञानवन्तं निरूढाद्वैतवासनं नितरां रूढं च तत् अद्वैतं च निरूढाद्वैतं तस्य वासनया युक्तं सम्यक्तया रूढमूलशिवाद्वैतानुभवलोलम्

श्रीगुरुमुपैति।

**लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम्।**
**सेवेत परमाचार्यं शिष्यो भक्तिभयान्वितः।।७।।**

लिङ्गं च अङ्गं च लिङ्गाङ्गे तयोः स्थलं लिङ्गाङ्गस्थलं तस्य भेदज्ञं लिङ्गस्थलस्य अङ्गस्थलस्य च भेदमर्मज्ञम् शिववादिनं शिवस्य वादिनम् महालिङ्गस्वरूपाद्युपदेष्टारं परमाचार्यं भक्तिभयान्वितः भक्तिश्च भयं च भक्तिभये ताभ्याम् अन्वितः युक्तः सन् शिष्यः उपेत्य श्रीगुरुं तं सेवेत सेवां कुर्यात्।

**सेवेत**-षेवृ-सेवने, विधिलिङ् - सेवेत सेवेयाताम् इत्यादि।

**षण्मासान् वत्सरं वापि यावदेष प्रसीदति।**
**प्रसन्नं परमाचार्यं भक्त्या मुक्तिप्रदर्शकम्।।**
**प्रार्थयेदग्रतः शिष्यः प्राञ्जलिर्विनयान्वितः।।८।।**

षण्मासान् वा मासषट्कं वा अथवा वत्सरं वा वत्सरं यावद् वा अथवा यावत् यावत्पर्यन्तं गुरुः एषः प्रसीदति प्रसन्नः भवति, तावत्पर्यन्तं सेवेत। अनन्तरं प्रसन्नं मुक्तिप्रदर्शकं मुक्तेः प्रदर्शकं परमाचार्यं तं भक्त्या शिष्यः तम् अग्रतः तस्य पुरोभागे प्राञ्जलिः मुकुलितकरयुगलः सन् विनयान्वितः विनयेन अन्वितश्च सन् एवं प्रार्थयेत्—

**भो कल्याण महाभाग शिवज्ञानमहोदधे।**
**आचार्यवर्य सम्प्राप्तं रक्ष मां भवरोगिणम्।।९।।**

भोः! कल्याण मङ्गलदायक, महाभाग महानुभाव, शिवज्ञानमहोदधे शिवस्य ज्ञानं शिवज्ञानं तदेव महोदधिः यः सः तत्सम्बुद्धौ शिवज्ञान-महासमुद्र! आचार्यवर्य आचार्यश्रेष्ठ! सम्प्राप्तं भवत्समीपमागतं भवरोगिणं भवस्य रोगः अस्मिन् अस्ति इति भवरोगी तं भवरोगेण पीडितं मां रक्ष पाहि- इति प्रार्थयेत्।

**रक्ष**-रक्ष-पालने, लोट्-रक्षतु-रक्षतात् रक्षताम् रक्षन्तु-इत्यादि।

**इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः।**
**शक्तिपातं समालोक्य दीक्षया योजयेदमुम्।।१०।।**

इति एवं रूपेण शुद्धेन शुद्धान्तःकरणेन शिष्येण प्रार्थितः परमः गुरुःतस्य शक्तिपातं समालोक्य अमुम् दीक्षया योजयेत्। **योजयेत्** - युज-संयमने, विधिलिङ्।

**दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्।**
**यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः।।११।।**

यया दीक्षया च शिवज्ञानं दीयते प्रदास्यते, पाशबन्धनं च क्षीयते नाशमेष्यति यस्मात् कारणात् तस्मादेव कारणात् विचक्षणैः शास्त्रज्ञैः इयं प्रक्रिया अतः अस्मात्कारणात् दीक्षा इति समाख्याता। शिवज्ञानं - परशिवाख्यस्य परब्रह्मणः महालिङ्गस्य परिज्ञानम्, पाशबन्धनं मलत्रय-माया-कर्मादिजन्यं बन्धनम्।

**दीयते** - दाण्-दाने, कर्मणि लट्।

**क्षीयते** - क्षि-क्षये - कर्मणि लट्।

**सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः।**
**वेधारूपा क्रियारूपा मन्त्ररूपा च तापस।।१२।।**

हे तापस हे महर्षे शिवागमविशारदैः शिवागमपरिनिष्णातैः सा दीक्षा तावत् वेधारूपा दीक्षा क्रियारूपा दीक्षा मन्त्ररूपा च दीक्षा इति त्रिविधा प्रोक्ता।

**गुरोरालोकमात्रेण हस्तमस्तकयोगतः।**
**यः शिवत्वसमावेशो वेधा दीक्षेति सा मता।।१३।।**

गुरोः आलोकमात्रेण केवलं नेत्राभ्यां निरीक्षणेन, हस्तमस्तकयोगतश्च हस्तश्च मस्तकश्च हस्तमस्तके तयोः योगाच्च शिष्यस्य मस्तके गुरोः हस्तस्य संस्पर्शनात्, यः शिवत्वसमावेशः शिवत्वस्य समावेशः सा तु वेधादीक्षा इति मता अभिप्रेता। शिवोऽहम्भाव-सम्प्रापणत्वं वेधा दीक्षा।

**मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी।**
**कुण्डमण्डलिकोपेता क्रिया दीक्षा क्रियात्तरा।।१४।।**

मन्त्रमात्रोपदेशिनी मन्त्रमात्रस्य उपदेशिनी केवलं प्रणवसहितमहामन्त्रोपदेश-रूपा या दीक्षा सा मान्त्री दीक्षा इति प्रोक्ता, अपि च या दीक्षा

कुण्डमण्डलिकोपेता कुण्डेन मण्डलिकया च उपेता-होमकुण्डकलशस्थापनादिना पञ्चकलशस्थापनस्वस्तिकमण्डलादिरचनया उपेता या क्रियोत्तरा क्रियाप्रधाना सा दीक्षा क्रियादीक्षा इति प्रोक्ता। क्रियाप्राधान्यात् क्रियादीक्षा मन्त्रप्राधान्यात् मान्त्रीदीक्षा वेधाप्राधान्यात् वेधादीक्षा इति विवेकः।

**शुभमासे शुभतिथौ शुभकाले शुभेऽहनि।**
**विभूतिं शिवभक्तेभ्यो दत्वा ताम्बूलपूर्वकम्।।**
**यथाविधि यथायोगं शिष्यमानीय देशिकः।।१५।।**

शुभमासे माघादिशुभमासे, शुभतिथौ द्वितीयातृतीयादिशुभतिथौ, शुभकाले शुभयोगशुभकरणशुभनक्षत्रशुभलग्नादियुते शुभे काले, शुभे अहनि सोमशुक्रादिशुभदिवसे अमृतकालयुक्त-शुभ-मुहूर्ते, शिवभक्तेभ्यः ताम्बूलपूर्वकं विभूतिं दत्वा, यथाविधि विधिम् अनतिक्रम्य यथा स्यात् तथा, यथायोगं योगम् अनतिक्रम्य यथा स्यात् तथा, देशिकः आचार्यः शिष्यम् आनीय।

**स्नातं शुक्लाम्बरधरं दन्तधावनपूर्वकम्।**
**मण्डले स्थापयेच्छिष्यं प्राङ्मुखं तमुदङ्मुखः।।१६।।**

दन्तधावनपूर्वकं दन्तधावनादिकं कारयित्वा स्नातं सम्पादितस्नानं, शुक्लाम्बरधरं शुभ्रवस्त्रधारिणम् तं शिष्यं मण्डले स्वस्तिकमण्डले प्राङ्मुखं सन्तं स्वयम् उदङ्मुखः सन् उत्तराभिमुखः सन् स्थापयेत् उपवेशयेत्।

**स्थापयेत्** - ष्ठा-गतिनिवृत्तौ, णिचि, विधिलिङ्।

**शिवस्य नामकीर्तिं च चिन्तामपि च कारयेत्।**
**विभूतिपट्टं दत्त्वाग्रे यथास्थानं यथाविधि।।१७।।**

शिवस्य नामकीर्तिं नाम्नः कीर्तिं कारयेत् शिवस्य चिन्तामपि च कारयेत्, सकलदोषनिवारणार्थं शिवनामकीर्तनशिवचिन्तादिकं कारयेत्, अग्रे अनन्तरं यथास्थानं स्थानानुगुणं यथाविधि विधिपूर्वकं विभूतिपट्टं दत्वा विभूतिधारणं कृत्वा—

**पञ्चब्रह्ममयैस्तत्र स्थापितैः कलशोदकैः।**
**आचार्यः सममृत्विग्भिस्त्रिः शिष्यमभिषेचयेत्।।१८।।**

तत्र मण्डले स्थापितैः पञ्चब्रह्ममयैः सद्योजातादिपञ्चब्रह्मस्वरूपैः कलशोदकैः पञ्चकलशोदकैः आचार्यः ऋत्विग्भिः समं पञ्चभिः ऋत्विग्भिः सह तं शिष्यं त्रिः त्रिवारम् अभिषेचयेत् अभिषिक्तं कारयेत्।

**अभिषेचयेत्** - अभि+षिच् - क्षरणे, णिच्, विधिलिङ्,

अभिषेचयेत् अभिषेचयेताम् इत्यादि।

**अभिषिच्य गुरुः शिष्यमासीनं पुरतः शुचिम्।**
**ततः पञ्चाक्षरीं शैवीं संसारभयतारिणीम्।।१९।।**

**तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत्।**
**छन्दोरूपमृषिं चास्य देवतान्यासपद्धतिम्।।२०।।**

अभिषिच्य पूर्वोक्तरीत्या अभिषिच्य ततः अनन्तरं गुरुः शुचिं परिशुद्धं पुरतः स्वस्य अग्रभागे आसीनम् उपविष्टं शिष्यं प्रति तस्य दक्षिणकर्णे संसारभयतारिणीं संसारस्य भयं तस्मात् तारयतीति संसारभयतारिणी तां संसारभयदूरीकरणसमर्थां शैवीं शिवसम्बन्धिनीं पञ्चाक्षरीं नमः शिवाय इति पञ्चाक्षरयुक्तां निगूढमपि रहस्ययुक्तमपि कीर्तयेत् उपदिशेत्, अपि च अस्य तु मन्त्रस्य छन्दः रूपम् ऋषिम् देवतान्यासपद्धतिम् - अधिदेवताप्रत्यधिदेवतारूपदेवताम् अङ्गन्यास-देहन्यास-करन्यासादिपद्धतिं च कीर्तयेत् उपदिशेत्।

**कीर्तयेत्** - कृत-संशब्दने, विधिलिङ्।

*।।इतिगुरुकारुण्यस्थलम्।।*

## (५) लिङ्गधारणस्थलम्

**स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा।**
**बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत्।।२१।।**

स्फाटिकं स्फटिकमणिमयम् वा शैलजं शैले जातं श्रीशैलादिशिलानिर्मितं वा चन्द्रकान्तमयं वा चन्द्रकान्तमणिनिर्मितं वा बाणं नर्मदावाणलिङ्गं वा सूर्यकान्तं वा सूर्यकान्तमणिनिर्मितं वा इत्येतेषु एकं लिङ्गं दीक्षाकृते समाहरेत् सम्पादयेत्।

**समाहरेत्** – सम् + आ+हृञ् - हरणे प्रापणे स्वीकारे स्तेये नाशे च।

विधिलिङ् - आहरेत् आहरेताम् आहरेयुः इत्यादि।

**सर्वलक्षणसम्पन्ने तस्मिंल्लिङ्गे विशोधिते।**
**पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते।।२२।।**

सर्वलक्षणसम्पन्ने सर्वैः शिल्पशास्त्रोक्तैः लक्षणैः सम्पन्ने युक्ते विशोधिते पञ्चामृताभिषेकादिभिश्च परिशुद्धे अभिषिक्ते रुद्राध्यायादिपूर्वकमभिषिक्ते गन्धपुष्पादिपूजिते गन्धपुष्पादिभिः षोडशोपचारैः पूजिते पीठस्थिते वामकरपीठस्थिते तस्मिन् लिङ्गे।

**मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः।**
**शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत्।।२३।।**

मन्त्रपूते मन्त्रेण पूते पञ्चाक्षरीमहामन्त्रजपपूर्वकं पवित्रीकृते च तत्र तस्मिन् लिङ्गे गुरुः आचार्यः विधिना विधिपूर्वकं शैवीं कलां शिष्यमस्तकस्थितां शिवसम्बन्धिनीं कलां तत्र लिङ्गे योजयेत्, अपि च शिष्यस्य प्राणम् आदाय शिवकलारूपम् आदाय आकृष्य तत्र लिङ्गे निधापयेत् प्रतिष्ठापयेत्।

शिवकलायोजनप्रकारः एवम्–

शिष्यस्य मस्तके सुगन्धेन पञ्चदलकमलं विलिख्य मध्ये च प्रणवं पञ्चदलेषु च यथाक्रमं पञ्चाक्षराणि विलिख्य शिवकलाम् एवं ध्यायेत्—

**नित्यानन्दस्वरूपां निरुपमविभवां निष्कलां निर्विशेषां**
**निर्व्याजेनोर्ध्वमायाविरचितवपुषं विश्ववन्द्यां परां ताम्।**
**आधारामादिशक्तिं गुणगणनमितां देवदेवीं शिवाख्यां**
**वन्दे हृत्पद्मपीठे परमशिवपदां श्रीमतीमूर्ध्व - संज्ञाम्।।**

इति सकलजगद्व्यवहारप्रवृत्तिकां चराचरचैतन्यतेजोरूपिणीं शिवकलां ध्यात्वा गन्धादिना अभ्यर्च्य प्रदीपाद् दीपान्तरमिव क्रोम् - इत्यक्षरम् अङ्कुशमुद्रया आकृष्य आवाह्य तदेव पञ्चदल-कमलं विचिन्त्य पुनश्च गन्धाद्युपचारैः सम्पूजयेत्।

**योजयेत्** - युज-संयमने, विधिलिङ्।

**निधापयेत्** - विधिलिङ्।

**तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः।**
**एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत्।।२४।।**

तत् लिङ्गं तथा शिवकलापूर्णं तत् लिङ्गं तस्य शिष्यस्य प्राणे तु एकभावतः तादात्म्यभावेन स्थापयेत्, एवं कृत्वा गुरुः लिङ्गं शिष्यहस्ते निधापयेत्।

**प्राणवद् धारणीयं तत्प्राणलिङ्गमिदं तव।**
**कदाचित् कुत्रचिद्वापि न वियोजय देहतः।।२५।।**

भो शिष्य! तत् इदं तव प्राणलिङ्गं, त्वया इदं प्राणवत् धारणीयम्, कदाचिदपि कुत्रचिदपि वा देहतः देहात् न वियोजय, सर्वदा धारणीयं परं वियोगो मा भवतु।

**वियोजय** - वि+युज-संयमने, लोट्।

वियोजयतु-वियोजयतात् इत्यादि।

**यदि प्रमादात् पतिते लिङ्गे देहान्महीतले।**
**प्राणान् विमुञ्च सहसा प्राप्तये मोक्ष सम्पदः।।२६।।**

यदि लिङ्गे प्रमादात् प्रमादवशात् देहात् महीतले भूमौ पतिते सति तदा सहसा मोक्षसम्पदः मोक्षः एव सम्पत् तस्याः मोक्षरूपस्य ऐश्वर्यस्य प्राप्तये प्राप्त्यर्थं प्राणान् विमुञ्च परित्यज।

**विमुञ्च** – वि + मुच्लृ - मोक्षणे, लोट् विमुञ्चतु - इत्यादि।

**इति सम्बोधितः शिष्यो गुरुणा शास्त्रवेदिना।**
**धारयेच्छाङ्करे लिङ्गं शरीरे प्राणयोगतः।।२७।।**

शास्त्रवेदिना वीरशैवशास्त्रपरिज्ञानवता गुरुणा आचार्येण इति एवं पूर्वोक्तरीत्या सम्बोधितः उपदिष्टः शिष्यः शाङ्करं लिङ्गं शङ्करेण अधिष्ठितं लिङ्गं प्राणयोगतः प्राणानां योगात् यावत्पर्यन्तं प्राणास्तिष्ठन्ति तावत्पर्यन्तं शरीरे धारयेत् धारणं कुर्यात्। **धारयेत्** - धृञ् - धारणे, स्वर्थिकणिच्, विधिलिङ्।

**लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम्।**
**आदृतं मुनिभिः सर्वैरागमार्थविशारदैः।।२८।।**

लिङ्गस्य धारणं तावत् पुण्यं पुण्यप्रदं, सर्वपापप्रणाशनं सर्वाणि च तानि पापानि सर्वपापानि तेषां प्रणाशनम् प्रणाशकम्, अत एव आगमार्थविशारदैः आगमानाम् अर्थस्य विशारदैः शिवागमार्थपरिज्ञानवद्भिः सर्वैरपि मुनिभिः आदृतम् अङ्गीकृतम्।

**लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकम्।**
**बाह्यमाभ्यन्तरं चेति मुनिभिर्मोक्षकांक्षिभिः।।२९।।**

सर्वार्थसाधकं सर्वे च ते अर्थाश्च सर्वार्थाः तेषां साधकम् भोग-मोक्षादिरूपसकलफलप्रदायकं लिङ्गधारणं तावत् मोक्षकांक्षिभिः मोक्षेच्छुभिः मुनिभिः बाह्यं बाह्यलिङ्गधारणं आभ्यन्तरम् आभ्यन्तरलिङ्गधारणञ्चेति द्विधा आख्यातम्।

**चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम्।**
**यत्तस्य धारणं चित्ते तदान्तरमुदाहृतम्।।३०।।**

चिद्रूपं सच्चिदानन्दात्मकं परमं श्रेष्ठतमं शाङ्करं शङ्करस्य यत् इदं शाङ्करं लिङ्गं तु सर्वकारणम् सर्वस्यापि कारणमस्ति, तस्य तादृशस्य लिङ्गस्य चित्ते धारणं यत् तत् आभ्यन्तरं लिङ्गधारणमिति उदाहृतम्। आन्तरम् आभ्यन्तरम्।

**चिद्रूपं हि परं तत्त्वं शिवाख्यं विश्वकारणम्।**
**निरस्तविश्वकालुष्यं निष्कलं निर्विकल्पकम्।।३१।।**

विश्वकारणं विश्वस्य कारणं विश्वस्य कारणीभूतं शिवाख्यं शिवः इत्यभिधेयकं परं तत्त्वं हि परतत्त्वं तावत् चिद्रूपं, निरस्तविश्वकालुष्यं निरस्तं विश्वस्य कालुष्यं यस्मात् तत् दूरीकृतविश्वसम्बन्धिमलादिकम्, निष्कलं कलाशून्यम्, निर्विकल्पकं विकल्परहितमस्ति।

**सत्तानन्दपरिस्फूर्ति – समुल्लासकलामयम्।**
**अप्रमेयमनिर्देश्यं मुमुक्षुभिरुपासितम्।।३२।।**

सत्तानन्दपरिस्फूर्तिसमुल्लासकलामयं सत्ता च आनन्दश्च सत्तानन्दौ तयोः परिस्फूर्तिः तस्याः समुल्लासः स एव कला सा एव स्वरूपं यस्य तत् नित्यानन्दप्रकाशात्मकत्वात् समुल्लास्यमान-तुर्यातीतकलास्वरूपम् अप्रमेयं प्रमातुं न योग्यम्, अनिर्देश्यं निर्देष्टुं न शक्यम्-प्रत्यक्षानुमानादिप्रमाणैः प्रमातुमसाध्यम्, इदमित्थमिति वक्तुमशक्यम्, मुमुक्षुभिः मोक्षकांक्षिभिः उपासितं ध्यानधारणादिना सम्पूजितम् वर्तते।

**परं ब्रह्म महालिङ्गं प्रपञ्चातीतमव्ययम्।**
**तदेव सर्वभूतानामन्तस्त्रिस्थानगोचरम्।।३३।।**

प्रपञ्चातीतं प्रपञ्चात् अतीतं प्रपञ्चमतीत्य वर्तमानम्, अव्ययं कालत्रयेणापि अबाधितम् महालिङ्गं यत् परं ब्रह्म तदेव सर्वभूतानां सर्वे च ते भूताश्च तेषां सर्वेषामपि प्राणिनाम् अन्तः हृदयकमले त्रिस्थानगोचरं स्थूल-सूक्ष्मकारणरूपेषु त्रिषु स्थानेषु इष्टप्राणभावलिङ्गरूपेण गोचरं प्रकाशमानं सत् आधारहृदयभ्रूमध्यरूपत्रिस्थानेषु वा प्रकाशमानं सत् वर्तते।

**मूलाधारे च हृदये भ्रूमध्ये सर्वदेहिनाम्।**
**ज्योतिर्लिङ्गं यदा भाति यद्ब्रह्मेत्याहुरागमाः।।३४।।**

आगमाः सर्वे शिवागमाः यत् यद्वस्तु ब्रह्म इत्याहुः तत् ज्योतिर्लिङ्गं सर्वदेहिनां सर्वेषां शरीरिणां च मूलाधारे मूलाधारस्थाने पूर्वहृदये मूलाधारचक्रे हृदये हृदयकमले भ्रूमध्ये च मध्यहृदये ऊर्ध्वहृदये च सदा भाति प्रकाशते।

**भाति**-भा-दीप्तौ, लट्, भाति भातः भान्ति इत्यादि।

**आहुः** - ब्रूञ्-व्यक्तायां वाचि, लट्, आह आहतुः आहुः इत्यादि।

**अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम्।**
**उपासनार्थमन्तःस्थं परिच्छिन्नं स्वमायया।।३५।।**

अपरिच्छिन्नं परिच्छिन्नभिन्नम् अखण्डितम् अव्यक्तम् अप्रकटम् सनातनं नित्यं ब्रह्म अन्तःस्थं हृदयस्थं लिङ्गम् एकं सदपि उपासनार्थम् उपासनकृते स्वमायया स्वातन्त्र्यमिति अपरपर्यायनामकमायाशक्त्या परिच्छिन्नं सत् स्थानभेदेन अभिधानभेदेन लिङ्गत्रयरूपं प्राप्नुवत् सत् प्रतिभाति।

**लयं गच्छति यत्रैव जगदेतच्चराचरम्।**
**पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम्।।३६।।**

यत्र एव यस्मिन्नेव लिङ्गे चराचरं जगत् एतत् चराचरात्मकमेतत् जगत् लयं गच्छति लीनत्वमाप्नोति पुनः पुनः समुत्पत्तिं पुनरुत्पत्तिं प्राप्नोति तत् शाश्वतं ब्रह्म लिङ्गमिति व्यपदिश्यते। गच्छति - गम्ऌ - गतौ, लट्।

**तस्माल्लिङ्गमिति ख्यातं सत्तानन्दचिदात्मकम्।**
**बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मशब्दाभिधेयकम्।।३७।।**

तस्मात् सर्वस्यापि जगतः कारणत्वात् सत्तानन्दचिदात्मकं सच्चिदानन्दस्वरूपं लिङ्गं तावत् बृहत्त्वात् महत्त्वात् बृंहणत्वात् विश्वसृष्टेः उन्मुखत्वात् च ब्रह्मशब्दाभिधेयकं च ब्रह्म इति शब्दवाच्यं सत् लिङ्गम् इति ख्यातं प्रख्यातं वर्तते।

**आधारे हृदये वापि भ्रूमध्ये वा निरन्तरम्।**
**ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम्।।३८।।**

आधारे आधारचक्रे वा हृदये हृदयकमले वा भ्रूमध्ये वा निरन्तरम् अविच्छिन्नतया यत् ज्योतिर्लिङ्गानुसन्धानं ज्योतिर्लिङ्गस्य अनुसन्धानं ध्यानधारणादिना अनुसन्धानं तदेव आन्तरं लिङ्गधारणम् आभ्यन्तरं लिङ्गधारणमिति कथ्यते।

**आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्।**
**भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत्।।३९।।**

आधारे आधारचक्रे कनकप्रख्यं कनकवत् प्रख्यं शोभमानं लिङ्गं, हृदये हृदयकमले विद्रुमप्रभं विद्रुमेन प्रभं विद्रुमवत् कान्तिमत् लिङ्गं, भ्रूमध्ये च स्फटिकच्छायं स्फटिकाभं स्फटिकमणिकान्तिमल्लिङ्गं योगी शिवयोगी विभावयेत् चिन्तयेत्।

**विभावयेत्** – वि+भुवो अवकल्पने मिश्रीकरणे वा, विधिलिङ्।

**निरुपाधिकमाख्यातं लिङ्गस्यान्तरधारणम्।**
**विशिष्टं कोटिगुणितं बाह्यलिङ्गस्य धारणात्।।४०।।**

लिङ्गस्य आन्तरधारणं तावत् अन्तर्लिङ्गधारणं तु निरुपाधिकम् इति आख्यातम् उपाधिरहितमिति प्रख्यातमस्ति, इदमान्तरधारणं तु बाह्यलिङ्गस्य बाह्ये लिङ्गस्य धारणादपेक्षया कोटिगुणितं सत् कोटिसंख्याधिकत्वेन फलदायकं सत् विशिष्टं वर्तते विशिष्यते।

**ये धारयन्ति हृदये लिङ्गं चिद्रूपमैश्वरम्।**
**न तेषां पुनरावृत्तिर्घोर - संसारमण्डले।।४१।।**

चिद्रूपं चिज्ज्योतिःस्वरूपकम् ऐश्वरम् ईश्वरसम्बन्धि लिङ्गं ये मानवाः शिवयोगिनो वा हृदये हृदयकमले धारयन्ति, तेषाम् अन्तर्लिङ्गधारणवतां तेषां शैवानां घोरसंसारमण्डले घोरश्चासौ संसारश्च घोरसंसारः तस्य मण्डले जननमरणचक्रे सुखदुःखमोहात्मके अस्मिन् घोरे प्रपञ्चे पुनरावृत्तिः जननमरणचक्रभ्रमस्तु नैव भवति।

**धारयन्ति**-धृञ्-धारणे, णिच्, लट्।

**अन्तर्लिङ्गानुसन्धानमात्मविद्यापरिश्रमः ।**
**गुरूपासनशक्तिश्च कारणं मोक्षसम्पदाम्।।४२।।**

अन्तर्लिङ्गानुसन्धानम् अन्तर्लिङ्गस्य प्राणलिङ्गस्य भावलिङ्गस्य च अनुसन्धानम्, आत्मविद्यापरिश्रमः आत्मविद्यायां परिश्रमः अध्यात्मविद्यायाः अध्ययनप्रवचनादिरूपः परिश्रमः, गुरूपासनशक्तिश्च गुरोः उपासनं गुरूपासनं तस्य शक्तिः गुरूपासनशक्तिः गुरोः सेवाकरणं भजनम् इत्यादिरूपेण उपासनेन प्राप्या शक्तिः इति एतत् त्रयमपि मिलित्वैव मोक्षसम्पदां मोक्षस्य सम्पदः तासां मोक्षरूपसम्पत्प्राप्तेः कारणम्।

**वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम्।**
**अन्तर्लिङ्गानुसन्धाने रुचिर्बाह्ये न जायते।।४३।।**

वैराग्यज्ञानयुक्तानां वैराग्यं च ज्ञानं च वैराग्यज्ञाने ताभ्यां युक्तानां वैराग्ययुक्तानां ज्ञानयुक्तानां च स्थिरचेतसां स्थिरं चेतः येषां तेषां स्थिरचित्तानाम् योगिनां शिवयोगसम्पन्नानाम् अन्तर्लिङ्गानुसन्धाने अन्तर्लिङ्गस्य अनुसन्धाने विषये एव केवलं रुचिः जायते, किन्तु बाह्ये लिङ्गधारणे तावत् रुचिः आसक्तिः नैव जायते।

**जायते**-जनी-प्रादुर्भावे, लट्।

**ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः।**
**मुनयः सिद्धगन्धर्वा दानवा मानवास्तथा।।४४।।**

**सर्वे च ज्ञानयोगेन सर्वकारणकारणम्।**
**पश्यन्ति हृदये लिङ्गं परमानन्दलक्षणम्।।४५।।**

ब्रह्मा, विष्णुः, रुद्रः, वासवाद्याः इन्द्रादयः लोकपाः च लोकपालकाश्च, मुनयः वसिष्ठादयः, सिद्धगन्धर्वाः सिद्धाश्च गन्धर्वाः च, दानवाः, तथा मानवाः इत्येवं सर्वे च सर्वकारणकारणं सर्वस्यापि कारणस्य कारणरूपं, परमानन्दलक्षणम् परमश्चासौ आनन्दश्च परमानन्दः श्रेष्ठः शिवानन्दः एव लक्षणं यस्य तत् लिङ्गं तु ज्ञानयोगेन ध्यानादिरूपज्ञानयोगेन हृदये पश्यन्ति अनुभवविषयीकुर्वन्ति।

**पश्यन्ति** – दृशिर्-प्रेक्षणे - लट्।

**तस्मात् सर्वप्रयत्नेन शाङ्करं लिङ्गमुत्तमम्।**
**अन्तर्विभावयेद्विद्वानशेषक्लेशमुक्तये ।।४६।।**

तस्मात् कारणात् सर्वप्रयत्नेन सर्वात्मना उत्तमं श्रेष्ठं शाङ्करं शङ्करसम्बन्धि लिङ्गं तावत् अशेषक्लेशमुक्तये अशेषाः च ते क्लेशाश्च अशेषक्लेशाः तेषां मुक्तये मुक्त्यर्थम् अन्तः स्वहृदयकमले विद्वान् शिवाद्वैतविद्याविचक्षणः विभावयेत् अनुसन्धानं कुर्यात्।

पञ्चक्लेशाः - अविद्या, रागः, द्वेषः, अस्मिता, अभिनिवेशः।

**विभावयेत्** - वि+भुवो - अवकल्पने मिश्रीकरणे वा, विधिलिङ्।

**अन्तर्धारयितुं लिङ्गमशक्तः शक्त एव वा।**
**बाह्यं संधारयेल्लिङ्गं तद्रूपमिति निश्चयात्।।४७।।**

लिङ्गम् अन्तः हृदयकमले धारयितुम् यदि वा शक्तः यदि वा अशक्तः, सः तावत् बाह्यं लिङ्गं इष्टलिङ्गं तु निश्चयात् तत्त्वतः तद्रूपं तस्यैव अन्तर्लिङ्गस्य रूपम् इति भावयित्वा धारयेत्।

**लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्।**
**इष्टलिङ्गमिदं स्थूलं यद्बाह्ये धार्यते तनौ।।४८।।**

लिङ्गं तु स्थूलं सूक्ष्मं परात्परं चेति त्रिविधं प्रोक्तम्। बाह्ये तनौ बाह्यशरीरे यत् स्थूलं लिङ्गं धार्यते तत् लिङ्गम् इदम् इष्टलिङ्गम् इति कथ्यते।

**धार्यते** – धृञ् - धारणे - कर्मणि लट्।

**प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम्।**
**परात्परं च यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते।।४९।।**

यत् लिङ्गम् अन्तः हृदये भावनामयं भावनया ग्राह्यम् इदं सूक्ष्मं लिङ्गं तु प्राणलिङ्गमिति उच्यते। परात्परं च यत् लिङ्गं प्रोक्तं तत् तृप्तिलिङ्गम् इत्युच्यते।

**उच्यते** - वच - परिभाषणे, कर्मणि लट्।

**भावनातीतमव्यक्तं परब्रह्म शिवाभिधम्।।५०।।**

शिवाभिधं शिवः इति अभिधा यस्य तत् शिवाभिधं परब्रह्म तावत् अव्यक्तम् रूपाद्यभावादव्यक्तम् भावनातीतं च भावनाभिश्च अतीतमस्ति।

**इष्टलिङ्गमिदं साक्षादनिष्ट – परिहारतः।**
**धारयेदवधानेन शरीरे सर्वदा बुधः।।५१।।**

साक्षात् प्रत्यक्षानुभवगोचरत्वेन अनिष्टपरिहारतः अनिष्टस्य परिहारात् इदम् इष्टलिङ्गं तावत् बुधः शिवज्ञानसम्पन्नः अवधानेन सावधानमनस्कतया सर्वदा शरीरे धारयेत्।

**मूर्ध्नि वा कण्ठदेशे वा कक्षे वक्षःस्थलेऽपि वा।**
**कुक्षौ हस्ततले वापि धारयेल्लिङ्गमैश्वरम्।।५२।।**

मूर्ध्नि मूर्धस्थाने वा, कण्ठदेशे वा कक्षे कक्षस्थले वा वक्षःस्थलेऽपि वा कुक्षौ कुक्षप्रदेशे वा हस्ततलेऽपि वा ऐश्वरं लिङ्गं ईश्वरसम्बन्धि लिङ्गं धारयेत्।

**नाभेरधस्ताल्लिङ्गस्य धारणं पापकारणम्।**
**जटाग्रे त्रिकभागे च मलस्थाने न धारयेत्।।५३।।**

नाभेः अधस्तात् लिङ्गस्य धारणं तु पापकारणं पापस्य कारणम्, जटाग्रे, त्रिकभागे पृष्ठभागे, मलस्थाने च न धारयेत्।

**लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोरमम्।**
**अर्चयेद् गन्धपुष्पाद्यैः करपीठे समाहितः।।५४।।**

लिङ्गधारी वीरशैवः सदाशुद्धः सन् मनोरमं मनोहरं निजलिङ्गं निजेष्टलिङ्गं समाहितः सन् तन्निविष्टचित्तः सन् करपीठे वामकरपीठे संस्थाप्य गन्धपुष्पाद्यैः गन्धपुष्पादिभिः अर्चयेत्।

**बाह्यपीठार्चनादेतत् करपीठार्चनं वरम्।**
**सर्वेषां वीरशैवानां मुमुक्षूणां निरन्तरम्।।५५।।**

**ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः।**
**धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः।।५६।।**

ब्रह्मविष्ण्वादयः ब्रह्मा विष्णुः इत्यादयः देवा गौतमादयः मुनयः सदा लिङ्गं विशेषतः उत्तमाङ्गे शिरोभागे धारयन्ति।

**लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः।**
**धारयन्त्यलिकाग्रेषु शिवलिङ्गमहर्निशम्।।५७।।**

लक्ष्म्यादिशक्तयः लक्ष्मीः आदिः यासां ताः शक्तयः सर्वाः लक्ष्म्यादिशक्तयः शिवभक्तिविभाविताः शिवस्य भक्तिः शिवभक्तिः तया विभाविताः सम्पन्नाः सत्यः अहर्निशं सर्वदा काले अलिकाग्रेषु मस्तक-भागेषु धारयन्ति।

**वेदशास्त्रपुराणेषु कामिकाद्यागमेषु च।**
**लिङ्गधारणमाख्यातं वीरशैवस्य निश्चयात्।।५८।।**

वेदशास्त्रपुराणेषु वेदाश्च शास्त्राणि च पुराणानि च वेदशास्त्रपुराणानि तेषु कामिकाद्यागमेषु कामिकादिवातुलान्तेषु च आगमेषु च वीरशैवस्य निश्चयात् निश्चिततत्वेन लिङ्गधारणम् आख्यातम्।

**ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते।**
**तस्मात्पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्।।५९।।**

हे ब्रह्मणस्पते ब्रह्मणः पतिः ब्रह्मणस्पतिः तत्सम्बुद्धौ हे लिङ्गरूप शरीरावच्छेदेन शरीरिभावेन अधिष्ठित परशिव! ते तव शरीरं पवित्रम् अत्यन्तं पावनम् विततं शिवादिभूम्यन्तं विस्तृतम् इति ऋक् ऋग्वेदः आह कथयति। तस्मात् पवित्रं परिशुद्धम् अनामयम् रोगादिरहितम् शैवं तत् लिङ्गं धार्यं धारणीयमस्ति।

**ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणः पतिरीश्वरः।**
**पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुः शुचिः।।६०।।**

लिङ्गं तावत् ब्रह्म परब्रह्म इति आख्यातम्, ईश्वरः ब्रह्मणः चतुर्मुखब्रह्मणः पतिः कारणम्। तत् हि लिङ्गं पवित्रम् इति विख्यातम्, तत्सम्पर्कात् तस्य सम्पर्कात् धारणात् तनुः अपि शुचिः पवित्रा भवति।

**अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः।**
**दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम्।।६१।।**

अतप्ततनुः न तप्ता तनुः यस्य सः अकृततपस्कः, अज्ञः शिवज्ञानादिरहितः नित्यानित्यवस्तुविवेकशून्यः, आमः अपरिपक्वः अवैराग्यशीलः, संस्कारवर्जितः संस्कारेण वर्जितः गुरूपदेशश्रवणादिसंस्कारहीनः दीक्षया रहितः पुरुषः उत्तमं लिङ्गं साक्षात् स्वेच्छया न आप्नुयात् नैव प्राप्नुयात्।

**आप्नुयात्** आप्लृ-व्याप्तौ, आशीर्लिङ्

आप्नुयात् आप्नुयास्ताम् आप्नुयासुः इत्यादि।

**अघोरा पापकाशीति या ते रुद्र शिवा तनूः।**
**यजुषा गीयते यस्मात् तस्माच्छैवोऽघवर्जितः।।७२।।**

हे रुद्र! ते तव या शिवा तनूः मङ्गलस्वरूपं यत् शरीरम् सा अघोरा शान्ता, अपापकाशी अपापेषु काशते इति अपापकाशी पापरहितेषु स्थूलादिशरीरेषु इष्टादिरूपेण प्रकाशते इति यस्मात् कारणात् याजुषा यजुर्वेदेन गीयते प्रशंस्यते तस्मात् शैवः शिवलिङ्गधारी वीरशैवः अघवर्जितः पापरहितः अस्ति।

**यो लिङ्गधारी नियतान्तरात्मा**
**नित्यं शिवाराधनबद्धचित्तः।**
**स धारयेत् सर्वमलापहत्यै**
**भस्मामलं चारु यथाप्रयोगम्।।६३।।**

यः शिवभक्तः लिङ्गधारी धृतलिङ्गः नियतान्तरात्मा नियतश्च असौ अन्तरात्मा च जितेन्द्रियत्वात् निर्मलान्तःकरणः सन् नित्यं शिवाराधनबद्धचित्तः शिवस्य आराधने बद्धं चित्तं यस्य सः शिवलिङ्गपूजातत्परश्च सन् वर्तते सः सर्वमलापहत्यै सर्वं च तत् मलं च सर्वमलं तस्य अपहत्यै विनाशार्थम् अमलं परिशुद्धं चारु सुन्दरं भस्म विभूतिं यथाप्रयोगम् प्रयोगम् अनतिक्रम्य यथा स्यात् तथा विध्यनुसारं धारयेत् धारणं कुर्यात्।

अत्र प्रथमद्वितीयचतुर्थपादेषु इन्द्रवज्रावृत्तम् तृतीयपादे उपेन्द्रवज्रावृत्तम् अतः उपजातिः छन्दः।

'स्यादिन्द्रवज्रा यदि तौ जगौ गः'

उपेन्द्रवज्रा जतजास्ततो गौ'

'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणम्।

*इति श्रीवीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ*
*भक्तस्थले गुरुकारुण्यलिङ्गधारणप्रसङ्गो नाम*
*।।षष्ठः परिच्छेदः।।*



# ।।सप्तमः परिच्छेदः।।

## (६) भस्मधारणस्थलम्

**भस्मधारणसंयुक्तः पवित्रो नियताशयः।**
**शिवाभिधानं यत्प्रोक्तं भासनात् भसितं तथा।।१।।**

शिवलिङ्गधारकः भस्मधारणसंयुक्तः भस्मनः धारणं भस्मधारणं तेन संयुक्तः सन् पवित्रः परिशुद्धः अपि च नियताशयः नियतः आशयः यस्य सः नियताशयः निश्चलचित्तः भवति। शिवाभिधानं शिवः इत्यभिधानं यस्य तत् इति यत् भस्म प्रोक्तं तत् तथा भासनात् शिवकान्तिवत् भासनात् भसितम् इति कथ्यते।

**महाभस्मेति सञ्चिन्त्य महादेवं प्रभामयम्।**
**वर्तन्ते ये महाभागाः मुख्यास्ते भस्मधारिणः।।२।।**

प्रभामयं ज्योतिर्लिङ्गस्वरूपं महादेवं महाभस्म महत् च तत् भस्म च महाभस्म इति सञ्चिन्त्य ये महाभागाः महात्मानः मुख्याः प्रमुखाः सन्तः वर्तन्ते ते भस्मधारिणः निरुपाधिकभस्म धृतवन्तः इति व्यपदिश्यन्ते।

**शिवाग्न्यादिसमुत्पन्नं मन्त्रन्यासादियोगतः।**
**तदुपाधिकमित्याहुर्भस्म तन्त्रविशारदाः।।३।।**

मन्त्रन्यासादियोगतः मन्त्रस्य न्यासः मन्त्रन्यासः सः आदिः यस्य सः मन्त्रन्यासादिः तस्य योगात् मन्त्रन्यासादिसम्बन्धात् शिवाग्न्यादिसमुत्पन्नं शिवाग्निः आदिः यस्य सः शिवाग्न्यादिः तस्मात् शिवहोमाग्न्यादिना समुत्पन्नं यत् भस्म तत् च भस्म तन्त्रविशारदाः सर्वागमज्ञानविशारदाः उपाधिकं भस्म इति आहुः कथयन्ति।

**विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः।**
**एतानि पञ्च नामानि हेतुभिः पञ्चभिर्भृशम्।।४।।**

भस्मनः - विभूतिः, भसितम्, भस्म, क्षारम्, रक्षा-इति पञ्चभिः हेतुभिः पञ्चभिः कारणैः भृशं सत्यत्वेन एतानि पञ्च नामानि विद्यन्ते।

**विभूतिर्भूतिहेतुत्वाद् भसितं तत्त्वभासनात्।**
**पापानां भर्त्सनाद्भस्म क्षरणात् क्षारमापदाम्।।५।।**

भूतिहेतुत्वात् भूतेः हेतुत्वात् अणिमादीनां मूलकारणात् विभूतिः इति, तत्त्वभासनात् तत्त्वस्य भासनात् शिवतत्त्वस्य प्रकाशकत्वात् भसितम् इति, पापानां मनोवाक्कायजादिपापानां भर्त्सनात् नाशात् भस्म इति, आपदाम् आध्यात्मिकादिसर्वापदां क्षरणात् नाशात् क्षारम् इति अभिधानम्।

**रक्षणात् सर्वभूतेभ्यो रक्षेति परिगीयते।**
**नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा।।६।।**

सर्वभूतेभ्यः सर्वे च ते भूताश्च सर्वभूताः तेभ्यः रक्षणात् रक्षणकरणात् रक्षा इति परिगीयते। नन्दा, भद्रा, सुरभिः, सुशीला, तथा सुमनाः इति पञ्च गावः।

**पञ्च गावो विभोर्जाताः सद्योजातादिवक्त्रतः।**
**कपिला कृष्णा च धवला धूम्रा रक्ता तथैव च।।७।।**

विभोः परमेश्वरस्य सद्योजातादिवक्त्रतः सद्योजातवामदेवादिपञ्चमुखेभ्यः सकाशात् नन्दाद्याः पञ्च गावः जाताः तासां वर्णाः तावत् यथाक्रमं कपिला कृष्णा धवला धूम्रा तथैव रक्ता चेति।

**नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः।**
**सद्योजाताद्विभूतिश्च वामाद्भसितमेव च।।८।।**

इत्येवं नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः। सद्योजातात् सद्योजातमुखात् विभूतिः सञ्जाता, वामात् वामदेवमुखात् च भसितमेव सञ्जातम्।

**अघोरात् भस्म सञ्जातं तत्पुरुषात् क्षारनाम च।**
**रक्षा चेशानवक्त्राच्च नन्दादिद्वारतोऽभवत्।।९।।**

अघोराद् अघोरमुखात् भस्म सञ्जातं, तत्पुरुषात् तत्पुरुषमुखात् क्षारनाम क्षारं च सञ्जातम्, ईशानवक्त्रात् च ईशानमुखात् रक्षा सञ्जाता इत्येवं नन्दादिद्वारतः क्रमात् नन्दा भद्रा सुरभिः सुशीला सुमनाः इति गवां सकाशाद्

यथाक्रमं विभूतिः भसितं भस्म क्षारं रक्षा चेति तासां गोमयात् पञ्चविधं भस्म अभवत्।

**धारयेन्नित्यकार्येषु विभूतिं च प्रयत्नतः।**
**नैमित्तिकेषु भसितं क्षारं काम्येषु सर्वदा।।१०।।**

सर्वदा नित्यकार्येषु नित्यं पूजादिकार्येषु प्रयत्नतः प्रयत्नपूर्वकं विभूतिं धारयेत्, नैमित्तिकेषु कार्येषु भसितं धारयेत् काम्येषु च कार्येषु क्षारं धारयेत्।

**प्रायश्चित्तेषु सर्वेषु भस्मनाम यथाविधि।**
**रक्षा च मोक्षकार्येषु प्रयोक्तव्या सदा बुधैः।।११।।**

सर्वेषु प्रायश्चित्तेषु कार्येषु यथाविधि विधिपूर्वकं भस्म नाम भस्मनामकं भस्म-विशेषं धारयेत्: मोक्षकार्येषु च रक्षा सदा बुधैः वीरशैवविद्वज्जनैः प्रयोक्तव्या धारणीया।

**नन्दादीनां तु ये वर्णाः कपिलाद्याः प्रकीर्तिताः।**
**त एव वर्णा विख्याता भूत्यादीनां यथाक्रमम्।।१२।।**

नन्दादीनां धेनूनां कपिलाद्याः ये वर्णाः प्रकीर्तिताः कथिताः ते तु एव वर्णाः यथाक्रमं भूत्यादीनां विभूत्यादिपञ्चविधभस्मनामपि विख्याताः प्रख्याताः।

**भस्मोत्पादनमुद्दिष्टं चतुर्धा तन्त्रवेदिभिः।**
**कल्पं चैवानुकल्पं च तूपकल्पमकल्पकम्।।१३।।**

भस्मोत्पादनं भस्मनः उत्पादनम् तावत् कल्पम् अनुकल्पम् उपकल्पम् अकल्पकम् च इति तन्त्रवेदिभिः आगमपरिज्ञानवद्भिः चतुर्धा उद्दिष्टम्।

**एषामादिममुत्कृष्टमन्यत् सर्वमभावतः।**
**यथाशास्त्रोक्तविधिना गृहीत्वा गोमयं नवम्।।१४।।**

एषाम् चतुर्णां प्रकाराणां मध्ये आदिमं कल्पनामकं भस्म उत्कृष्टम्, अन्यत् सर्वं त्रिप्रकारकम् अभावतः कल्पभस्मनः अभावात् स्वीकार्यम्। यथा शास्त्रोक्तविधिना यथाशास्त्रम् उक्तेन विधिना शास्त्रोक्तरीत्या नवं गोमयं नन्दादिधेनुभिः गृहीत्वा।

**सद्येन वामदेवेन कुर्यात्पिण्डमनुत्तमम्।**
**शोषयेत्पुरुषेणैव दहेद् घोराच्छिवाग्निना।।१५।।**

सद्येन सद्योजातमन्त्रेण अन्तरे भूस्पर्शात्पूर्वमेव नवं गोमयं गृहीत्वा, वामदेवेन वामदेवमन्त्रेण अनुत्तमं श्रेष्ठ-पिण्डं कुर्यात्, अनन्तरं पुरुषेण एव तत्पुरुषमन्त्रेणैव शोषयेत् शुष्कं कारयेत्, तथा घोरात् अघोरमन्त्रात् शिवाग्निना शिवमन्त्रसंस्कृतवह्निना दहेत् दहनं कुर्यात्।

**कुर्यात्** - डु-कृञ्-करणे, विधिलिङ्।

**शोषयेत्** - शुष-शोषणे, णिचि विधिलिङ्।

**दहेत्** - दह-भस्मीकरणे, विधिलिङ्।

**कल्पं तद्भस्म विज्ञेयमनुकल्पमथोच्यते।**
**वनेषु गोमयं यच्च शुष्कं चूर्णीकृतं तथा।।१६।।**

तत् भस्म एवं सिद्धीकृतं भस्म तु कल्पम् इति विज्ञेयम्, अथ, अनन्तरम् अनुकल्पं भस्म उच्यते, तथा वनेषु अरण्यभागेषु यच्च शुष्कं गोमयं वर्तते तत् तथा पूर्वोक्तविधिना चूर्णीकृतं सत् तत्—

**दग्धं चैवानुकल्पाख्यमापणादिगतं तु यत्।**
**वस्त्रेणोत्तारितं भस्म गोमूत्राबद्धपिण्डितम्।।१७।।**

तथा सम्पादितं सत् शिवाग्निना दग्धं च अनुकल्पाख्यं भस्म अनुकल्पम् इति आख्या यस्य तत् अनुकल्पमिति व्यपदिश्यते। यत् तु आपणादिगतं तत् आनीय तत् वस्त्रेण उत्तारितं संशोधितं कृत्वा तत् भस्म गोमूत्राबद्धपिण्डितं गोमूत्रेण आबद्धं पिण्ड़ितं च कृत्वा—

**दग्धं प्रागुक्तविधिना भवेद्भस्मोपकल्पकम्।**
**अन्यैरापादितं भस्माप्यकल्पमिति निश्चितम्।।१८।।**

प्रागुक्तविधिना पूर्वोक्तरीत्या शिवमन्त्रसंस्कृताग्निना दग्धं चेत् तत् भस्म उपकल्पकं भवेत्। तथैव अन्यैः मन्त्रज्ञानशून्यैः आपादितं सम्पादितं भस्म अपि अकल्पं भस्म इति निश्चितम्।

**एष्वेकतममादाय पात्रेषु कलशादिषु।**
**त्रिसन्ध्यमाचरेत् स्नानं यथासम्भवमेव वा।।१९।।**

कलशादिषु पात्रेषु भिन्नभिन्नतया संस्थापितेषु एषु चतुर्विधेषु एकतमम् आदाय त्रिसन्ध्यं त्रिकालं वा यथासम्भवं वा यथाशक्ति द्विकालं एककालं वा स्नानं भस्मस्नानम् आचरेत्।

**आचरेत्** - आ+चर-गतौ विधिलिङ्।

**स्नानकाले करौ पादौ प्रक्षाल्य विमलाम्भसा।**
**वामहस्ततले भस्म क्षिप्त्वाच्छाद्यान्यपाणिना।।२०।।**

स्नानकाले विमलाम्भसा विमलेन अम्भसा शुद्धेन जलेन करौ हस्तौ पादौ च प्रक्षाल्य, अनन्तरं वामहस्ततले वामकरतले भस्म क्षिप्त्वा संस्थाप्य अन्यपाणिना दक्षिणहस्तेन आच्छाद्य-

**अष्टकृत्वोऽथ मूलेन मौनी भस्माभिमन्त्र्य च।**
**शिर ईशानमन्त्रेण पुरुषेण मुखं तथा।।२१।।**

अथ दक्षिणोरौ संस्थाप्य, मौनी सन् मूलेन ओंकारेण अष्टकृत्वः अष्टवारम् अभिमन्त्र्य संप्रोक्ष्य अनन्तरं च ईशानमन्त्रेण शिरः सेचयेत्, पुरुषेण तत्पुरुषमन्त्रेण तथा मुखं सेचयेत्।

**हृत्प्रदेशमघोरेण वामदेवेन गुह्यकम्।**
**पादौ सद्येन सर्वाङ्गं प्रणवेनैव सेचयेत्।।२२।।**

अघोरेण अघोरमन्त्रेण हृत्प्रदेशं हृदयप्रदेशं सेचयेत्, वामदेवेन वामदेवमन्त्रेण गुह्यकं गुह्यप्रदेशं नाभिस्थानं सेचयेत्, पादौ तु सद्येन सद्योजातमन्त्रेण सेचयेत् अपि च प्रणवेन ओंकारेण सर्वाङ्गं सेचयेत्।

**भस्मना विहितं स्नानमिदमाग्नेयमुत्तमम्।**
**स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम्।।२३।।**

भस्मना विहितं कृतं स्नानं भस्मोद्धूलनादिकं तु स्नानं यत् तदिदं आग्नेयं स्नानम्, इतरस्नानापेक्षया उत्तमम्। यतः वारुणाद्येषु स्नानेषु मान्त्रस्नानम्, भौमस्नानम्, आग्नेयस्नानम्, वायव्यस्नानम्, दिव्यस्नानम्,

वारुणस्नानम्, मानसस्नानम् इति सप्तसु स्नानेषु मलापहं मलानि अपहन्ति इति मलापहम् सकलमलनाशकं भस्मस्नानमिदं मुख्यम् एतत् आग्नेयं स्नानं प्रधानम्।

**भस्मस्नानवतां पुंसां यथायोगं दिने दिने।**
**वारुणाद्यैरलं स्नानैर्बाह्यदोषापहारिभिः।।२४।।**

यथायोगं शास्त्रप्रकारं यथाशक्ति दिने दिने प्रतिदिनम् भस्मस्नानवतां भस्मनः स्नानमस्ति एषामिति भस्मस्नानवन्तः तेषां भस्मस्नानवतां भस्मस्नानमाचरतां पुंसां जनानाम् बाह्यदोषापहारिभिः बाह्याश्च ते दोषाश्च बाह्यदोषाः तान् अपहर्तुं शीलम् येषां तैः बाह्यमलापहारिभिः बाह्यदोषनाशकैः वारुणाद्यैः स्नानैः अलं पर्याप्तं न किमपि प्रयोजनम्।

**आग्नेयं भस्मना स्नानं यतिभिस्तु विधीयते।**
**आर्द्रस्नानात्परं भस्म आर्द्रे जन्तुवधो ध्रुवम्।।२५।।**

भस्मना स्नानं आग्नेयम् इति तु यतिभिः विधीयते क्रियते, अतः आर्द्रस्नानात् जलस्नानापेक्षया भस्म भस्मस्नानं परं श्रेष्ठम्, आर्द्रे स्नाने जन्तुवधः तु ध्रुवं भविता।

**आर्द्रं तु प्रकृतिं विन्द्यात् प्रकृतिं बन्धनं विदुः।**
**प्रकृतेस्तु प्रहाणार्थं भस्मना स्नानमिष्यते।।२६।।**

आर्द्रं तु जलं तु प्रकृतिं विन्द्यात् जानीयात्, परं प्रकृतिं बन्धनं भोज्य-भोजनरूपेण पुरुषस्य पाशरूपं विदुः जानन्ति, प्रकृतेः तु प्रहाणार्थं जलस्नानोत्थदोषाणां निवृत्त्यर्थं भस्मना स्नानं तु इष्यते इच्छाविषयीक्रियते। **विन्द्यात्** - विद-चेतनाख्याननिवासेषु प्राप्तौ च, आशीर्लिङ् - विन्द्यात् विन्द्यास्ताम् विन्द्यासुः इत्यादि। **विदुः** विद-ज्ञाने, लिट्, वेद विदतुः, विदुः इत्यादि।

**ब्रह्माद्या विबुधाः सर्वे मुनयो नारदादयः।**
**योगिनः सनकाद्याश्च बाणाद्या दानवा अपि।।२७।।**

ब्रह्माद्याः ब्रह्मा विष्णुः इन्द्रः इत्यादयः सर्वे विबुधाः देवाः नारदादयः सर्वे मुनयः सनकाद्याः योगिनश्च बाणाद्याः दानवाः अपि—

**भस्मस्नानयुताः सर्वे शिवभक्तिपरायणाः।**
**निर्मुक्तदोषकलिला नित्यशुद्धा भवन्ति हि।।२८।।**

इत्येते सर्वेऽपि भस्मस्नानयुताः भस्मनः स्नानं तेन युताः भस्मस्नानयुक्ताः सन्तः शिवभक्तिपरायणाः शिवस्य भक्तौ परायणाः आसक्ताः सन्तः निर्मुक्तदोषकलिलाः नितरां मुक्तः दोषाणां कलिलः समूहः यैः ते दूरीकृतसकलदोषाश्च सन्तः नित्यशुद्धाः भवन्ति हि वर्तन्ते खलु!

**नमः शिवायेति भस्म कृत्वा सप्ताभिमन्त्रितम्।**
**उद्धूलयेत् तेन देहं त्रिपुण्ड्रं चापि धारयेत्।।२९।।**

नमः शिवाय इति मन्त्रेण भस्म सप्ताभिमन्त्रितं कृत्वा सप्तवारम् अभिमन्त्रितं सत् कृत्वा तेन तेन भस्मना देहम् उद्धूलयेत् लेपनं कुर्यात्, अपि च त्रिपुण्ड्रं निर्दिष्टस्थानेषु धारयेत्।

**उद्धूलयेत्**– धूलिं करोति इति धूलयति, णिच्, नामधातुः उद्धूलयेत् उद्धूलयेताम् उद्धूलयेयुः इत्यादि विधिलिङ्रूपाणि। **धारयेत्** – धृञ् - धारणे, णिच्, विधिलिङ्।

**सर्वाङ्गोद्धूलनं चापि न समानं त्रिपुण्ड्रकैः।**
**तस्मात् त्रिपुण्ड्रमेवैकं लिखेदुद्धूलनं विना।।३०।।**

सर्वाङ्गोद्धूलनं सर्वेषु अङ्गेषु अद्धूलनं च अपि त्रिपुण्ड्रकैः त्रिपुण्ड्रधारणैः समानं वर्तते। तस्मात् उद्धूलनं विना एकं प्राधान्येन त्रिपुण्ड्रमेव लिखेत् त्रिपुण्ड्रमेव धारयेत्। **लिखेत्** – लिख-अक्षरविन्यासे विधिलिङ्।

**त्रिपुण्ड्रं धारयेन्नित्यं भस्मना सलिलेन च।**
**स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः।।३१।।**

नित्यं सलिलेन भस्मना जलमिश्रितभस्मना साधकोत्तमः साधकश्रेष्ठः वीरशैवः शरीरे पञ्चदशसु स्थानेषु त्रिपुण्ड्रं धारयेत्। स्थानानि तु—

**उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा।**
**गले भुजद्वये चैव हृदि नाभौ च पृष्ठके।।३२।।**

उत्तमाङ्गे शिरसि ललाटे फालस्थाने श्रवणद्वितये श्रवणयोः द्वितये द्वयोः

श्रवणयोः, गले कण्ठस्थाने, भुजद्वये द्वयोः भुजयोः हृदि हृदयस्थाने नाभौ पृष्ठके च पृष्ठप्रदेशे च मूलमन्त्रेण त्रिपुण्ड्रं धार्यम्।

**बाहुयुग्मे ककुद्देशे मणिबन्धद्वये तथा।**
**त्रिपुण्ड्रं भस्मना धार्यं मूलमन्त्रेण साधकैः।।३३।।**

बाहुयुग्मे बाहुयुगले ककुद्देशे कुकुद्द्वयप्रदेशे तथा मणिबन्धद्वये मणिबन्धयोश्च साधकैः मूलमन्त्रेण भस्मना त्रिपुण्ड्रं धार्यम्।

**वामहस्ततले भस्म क्षिप्त्वाच्छाद्यान्यपाणिना।**
**अग्निरित्यादिमन्त्रेण स्पृशन् वाराभिमन्त्र्य च।।३४।।**

भस्म स्वस्य वामहस्ततले वामहस्ते क्षिप्त्वा निक्षिप्य अन्यपाणिना दक्षिणहस्तेन आच्छाद्य 'अग्निरिति भस्म–' इति इत्यादिमन्त्रेण भस्म स्पृशन् वारा जलेन सप्तवारमभिमन्त्र्य, 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः।

**त्रिपुण्ड्रमुक्तस्थानेषु दध्यात् सजलभस्मना।**
**शिवं शिवंकरं शान्तं स प्राप्नोति न संशयः।।३५।।**

उक्तस्थानेषु पूर्वोक्तस्थानेषु सजलभस्मना त्रिपुण्ड्रं दध्यात् धारयेत्। एवं धारणेन शिवंकरं मङ्गलकरं शान्तं च शिवं सः धारकः साधकः प्राप्नोति इत्यत्र न संशयः। **दध्यात्** - डु-धाञ् - धारणोषणयोः, विधिलिङ्।

**मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु।**
**षडङ्गुलायतं मानमपि वालिकमानकम्।।३६।।**

स्वदक्षिणकरस्य मध्याङ्गुलित्रयेण तर्जनी मध्यमा अनामिका इति मध्यस्थेन अङ्गुलित्रयेण षडङ्गुलायतं मानं षडङ्गुलप्रमाणकम् अथवा अलिकमानकं वा अलिकस्य ललाटस्य मानप्रमाणकं वा, अथवा—

**नेत्रयुग्मप्रमाणेन फाले दध्यात् त्रिपुण्ड्रकम्।**
**मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः ।।३७।।**

नेत्रयुग्मप्रमाणेन नेत्रयुगलमध्यस्यान्तरालप्रमाणेन फाले त्रिपुण्ड्रकं दध्यात्, अथवा मध्यमानामिकाङ्गुष्ठैः मध्यमा अनामिका अङ्गुष्ठः इत्येतैः अनुलोम-विलोमतः अनुलोमश्च विलोमश्च अनुलोमविलोमौ ताभ्यां-प्रथमं

मध्यमानामिकाभ्याम् अनुलोमक्रमेण प्रदक्षिणक्रमेण रेखाद्वयं तन्मध्ये अङ्गुष्ठेन विलोमक्रमेण अप्रदक्षिणतः एकां तृतीयां रेखां रचयेत्।

**धारयेद्यस्त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः।**
**ऋजुश्वेतमनुव्याप्तं स्निग्धं श्रोत्रप्रमाणकम्।।३८।।**

इत्येवं रीत्या यः त्रिपुण्ड्रं तु ऋजु सरलम् श्वेतं शुभ्रम अनुव्याप्तम् अविच्छिन्नम् स्निग्धं सान्द्रं स्यात् अपि च श्रोत्रप्रमाणकं श्रोत्रयोः मध्यप्रमाणकं स्यात्।

**एवं सल्लक्षणोपेतं त्रिपुण्ड्रं सर्वसिद्धिदम्।**
**प्रातःकाले च मध्याह्ने सायाह्ने च त्रिपुण्ड्रकम्।।३९।।**

एवं वर्णितं त्रिपुण्ड्रं सल्लक्षणोपेतं समीचीनलक्षणैः युक्तं सत् सर्वसिद्धिदं सर्वाः सिद्धीः ददाति इति सर्वसिद्धिदं भवति। अपि च त्रिपुण्ड्रकं तु प्रातःकाले मध्याह्ने सायं काले वा कुर्यात्।

**कदाचिद् भस्मना कुर्यात् स रुद्रो नात्र संशयः।**
**एवंविधं विभूत्या च कुरुते यस्त्रिपुण्ड्रकम्।।**
**स रौद्रधर्मसंयुक्तस्त्रयीमय इति श्रुतिः।।४०।।**

कदाचित् कालत्रयमध्ये यथायोगम् भस्मना त्रिपुण्ड्रकं कुर्यात्, इति यः कुर्यात् सः रुद्रः अत्र न संशयः, एवंविधं त्रिपुण्ड्रकं विभूत्या यश्च कुरुते सः रौद्रधर्मसंयुक्तः रुद्रस्य अयं रौद्रः रौद्रश्चासौ धर्मश्च रौद्रधर्मः तेन संयुक्तः सन् रुद्राभिन्नः सन् त्रयीमयः भवति वेदत्रयस्वरूपवान् भवति इति श्रुतिः भवति। अत्र श्रुतिः— 'य इदं त्रिपुण्ड्रं धरते स वेदत्रयधारी भवति। स सन्ततं त्रेताग्निर्भवति स पुष्करस्नातो भवति। यस्त्रिपुण्ड्रधारी पुरुषः स रुद्रः स परमेष्ठी, य इदं त्रिपुण्ड्रं धृतवन्तं पुरुषं पश्यति स सर्वपापेभ्यो विनिर्मुक्तो भवति स सर्ववेदाध्ययनजन्मफलवान् भवति।।'' इत्यादि।

**कुर्यात्** - डु-कृञ्-करणे, विधिलिङ्।

**कुरुते** - डु-कृञ्-करणे, आत्मने लट् कुरुते कुर्वाते - इत्यादि।

**ब्रह्मा विष्णुश्च रुद्रश्च देवाः शक्रपुरोगमाः।**
**त्रिपुण्ड्रं धारयन्त्येव भस्मना परिकल्पितम्।।४१।।**

ब्रह्मा, विष्णुः, रुद्रश्चेति शक्रपुरोगमाः इन्द्रादयश्च देवाः भस्मना परिकल्पितं विरचितं त्रिपुण्ड्रं धारयन्त्येव। **धारयन्ति**-धृञ्-धारणे, णिच्, लट्।

**वसिष्ठाद्या महाभागा मुनयः श्रुतिकोविदाः।**
**धारयन्ति सदाकालं त्रिपुण्ड्रं भस्मना कृतम्।।४२।।**

महाभागाः महात्मानः श्रुतिकोविदाः श्रुतिविशारदाः वसिष्ठाद्याः मुनयः अपि सदाकालं भस्मना कृतं त्रिपुण्ड्रं धारयन्ति।

**शैवागमेषु वेदेषु पुराणेष्वखिलेषु च।**
**स्मृतीतिहासकल्पेषु विहितं भस्मपुण्ड्रकम्।।**
**धारणीयं समस्तानां शैवानां च विशेषतः।।४३।।**

शैवागमेषु सर्वेषु वेदेषु सर्वेषु अखिलेषु पुराणेषु च स्मृतीतिहासकल्पेषु स्मृतयश्च इतिहासाश्च कल्पश्च स्मृतीतिहासकल्पाः तेषु स्मृतिषु इतिहासेषु कल्पेषु कल्पसूत्रेषु च भस्मपुण्ड्रकं भस्मनः पुण्ड्रकं त्रिपुण्ड्रधारणं तावत् समस्तानां सर्वेषामपि, विशेषतश्च शैवानाम् धारणीयमिति विहितम्। न केवलं शैवैः सर्वैरपि धारणीयम्।

**नास्तिको भिन्नमर्यादो दुराचारपरायणः।**
**भस्मत्रिपुण्ड्रधारी चेन्मुच्यते सर्वकिल्बिषैः।।४४।।**

नास्तिकः वेदविरुद्धाचारनिष्ठः, भिन्नमर्यादः भिन्ना मर्यादा येन सः उल्लङ्घितशास्त्रनियमः, दुराचारपरायणः दुराचारसम्पन्नः एतादृशः यः पुरुषः सः यदि भस्मत्रिपुण्ड्रधारी चेत् भस्मना धृतत्रिपुण्ड्रः चेत् तदा सः सर्वकिल्बिषैः सर्वाणि च तानि किल्बिषाणि तैः सर्वैश्च पापैः मुच्यते विमुक्तो भवति। **मुच्यते** - मुचॢ-मोक्षणे, कर्मणि लट्।

*।।इति भस्मधारणस्थलम्।।*

## (७) रुद्राक्षधारणस्थलम्

**भस्मना विहितस्नानस्त्रिपुण्ड्राङ्कितमस्तकः।**
**शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत्।।४५।।**

भस्मना विहितस्नानः विहितं स्नानं येन सः कृतस्नानः त्रिपुण्ड्राङ्कितमस्तकः त्रिपुण्ड्रेन अङ्कितं मस्तकं येन सः त्रिपुण्ड्रधारी च सन् शिवार्चनपरः शिवार्चने परः निष्ठः साधकः नित्यं रुद्राक्षमपि धारयेत्।

**भस्मना विहितस्नानस्त्रिपुण्ड्राङ्कितमस्तकः।**
**शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत्।।४५।।**

भस्मना विहितस्नानः विहितं स्नानं येन सः कृतस्नानः त्रिपुण्ड्राङ्कितमस्तकः त्रिपुण्ड्रेन अङ्कितं मस्तकं येन सः त्रिपुण्ड्रधारी च सन् शिवार्चनपरः शिवार्चने परः निष्ठः साधकः नित्यं रुद्राक्षमपि धारयेत्।

**रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः।**
**दुष्टचित्ता दुराचारा दुष्प्रजा अपि मानवाः।।४६।।**

दुष्टचित्ताः दुष्टानि चित्तानि येषां ते दुष्टमनस्काः, दुराचाराः दुष्टाः आचाराः येषां ते दुराचारिणः दुष्प्रजाः दुष्टाः प्रजाः येषां ते दुष्प्रजाः दुष्टसन्ततिमन्तः अपि मानवाः रुद्राक्षधारणादेव रुद्राक्षाणां धारणादेव सर्वपातकैः सर्वाणि च तानि पातकानि तैः सर्वैरपि पापैः मुच्यन्ते विमुच्यन्ते।

**पुरा त्रिपुरसंहारे त्रिनेत्रो जगतां पतिः।**
**उदपश्यत् पुरां योगमुन्मीलितविलोचनः।।४७।।**

पुरा त्रिपुरसंहारे त्रिपुराणां संहारे काले जगतां पतिः त्रिनेत्रः परमेश्वरः पुरा त्रिपुराणां संहारे काले जगतां पतिः त्रिनेत्रः परमेश्वरः पुरां त्रिपुराणां योगम् एकरेखासम्बन्धं उन्मीलितविलोचनः सन् उन्मीलितानि लोचनानि यस्य सः उन्मीलितलोचनः सन् उदपश्यत् अपश्यत्।

**उदपश्यत्** – उत् + अपश्यत् - दृशिर्-प्रेक्षणे, लङ्लकारः

उदपश्यत् उदपश्यताम् उदपश्यन् इत्यादि।

**निपेतुस्तस्य नेत्रेभ्यो बहवो जलबिन्दवः।**
**तेभ्यो जाता हि रुद्राक्षा रुद्राक्षा इति कीर्तिताः।।४८।।**

तस्य परमेश्वरस्य नेत्रेभ्यः बहवः जलबिन्दवः निपेतुः पतिताः, तेभ्यः जलबिन्दुभ्यः रुद्राक्षाः जाताः हि, तस्मादेव कारणात् रुद्राक्षाः रुद्रस्य अक्षिभ्यः

सकाशात् उत्पन्नत्वात् रुद्राक्षाः इति कीर्तिताः।

**निपेतुः** — नि+पत्लृ - गतौ, लिट् पपात पेततुः इत्यादि।

**रुद्रनेत्रसमुत्पन्ना रुद्राक्षा लोकपावनाः।**
**अष्टत्रिंशत्प्रभेदेन भवन्त्युत्पत्तिभेदतः।।४९।।**

रुद्रनेत्रसमुत्पन्नाः रुद्रस्य नेत्रेभ्यः समुत्पन्नाः रुद्राक्षाः लोकपावनाः लोके पावनाः लोकान् पावयन्ति इति वा लोकपावनाः सन्तः, उत्पत्तिभेदतः उत्पत्तेः भेदात् अष्टत्रिंशत्प्रभेदेन अष्टत्रिंशत्प्रभेदयुक्ताः भवन्ति।

**नेत्रात् सूर्यात्मनः शम्भोः कपिला द्वादशोदिताः।**
**श्वेताः षोडश सञ्जाताः सोमरूपाद्विलोचनात्।।५०।।**

शम्भोः सूर्यात्मनः नेत्रात् कपिलाः कपिलवर्णाः द्वादश उदिताः उत्पन्नाः, सोमरूपात् विलोचनात् श्वेताः श्वेतवर्णयुक्ताः षोडश सञ्जाताः।

**कृष्णा दशविधा जाता वह्निरूपाद्विलोचनात्।**
**एवमुत्पत्तिभेदेन रुद्राक्षा बहुधा स्मृताः।।५१।।**

वह्निरूपात् विलोचनात् कृष्णाः कृष्णवर्णयुक्ताः दशविधाः जाताः। एवम् उत्पत्तिभेदेन रुद्राक्षाः बहुधा अनेकविधाः स्मृताः।

सूर्यनेत्रोद्भवाः द्वादशरुद्राक्षाः - तपिनी, तापिनी, धूमा, मरीची, ज्वलिनी, रुची, सुषुम्ना, भोगदा, विश्वा, बोधिनी, धारिणी, क्षमा चेति।

चन्द्रनेत्रोद्भवाः षोडश रुद्राक्षाः - अमृता, मानदा, पूषा, तुष्टिः, पुष्टिः, रतिः, धृतिः, शशिनी, कीर्तिः, चन्द्रिका, ज्योत्स्ना, श्रीः, प्रीता, जगदा, पूर्णा, पूर्णामृता चेति।

अग्निनेत्रोद्भवाः दश रुद्राक्षाः - धूम्रा, अर्चिः, ऊष्मा, ज्वलिनी, ज्वालिनी, विस्फुलिङ्गिनी, सश्रीः, सुरूपा, कपिला, हव्यकव्यवहा चेति।

**अच्छिद्रं कनकप्रख्यमनन्यधृतमुत्तमम्।**
**रुद्राक्षं दारयेत्प्राज्ञः शिवपूजापरायणः।।५२।।**

अच्छिद्रं छिद्ररहितम् क्रिमिकीटाद्यविद्धम् कनकप्रख्यं कनक-

कान्तियुक्तम् अनन्यधृतम् अन्यैः धृतं न भवतीति अनन्यधृतम् उत्तमं च रुद्राक्षं शिवपूजापरायणः प्राज्ञः धारयेत्।

**यथास्थानं यथावक्त्रं यथायोगं यथाविधि।**
**रुद्राक्षधारणं वक्ष्ये रुद्रसायुज्य-सिद्धये।।५३।।**

यथास्थानं स्थानानुगुणम्, यथावक् वक्त्रानुगुणम्, यथायोगं सम्बन्धानुगुणं प्राप्त्यनुगुणम्, यथाविधि विध्यनुसारम्, रुद्रसायुज्यसिद्धये रुद्रेण सह सायुज्यस्य सिद्धये सामरस्यप्राप्त्यर्थं रुद्राक्षधारणं रुद्राक्षधारणक्रमं वक्ष्ये कथयिष्ये।

**शिखायामेकमेकास्यं रुद्राक्षं धारयेद्बुधः।**
**द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत्।।५४।।**

**षट्त्रिंशद्धारयेन्मूर्ध्नि नित्यमेकादशाननान्।**
**दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत्।।५५।।**

**षडष्टवदनान् कण्ठे द्वात्रिंशद्धारयेत् सदा।**
**पञ्चाशद्धारयेद्विद्वान् चतुर्वक्त्राणि वक्षसि।।५६।।**

**त्रयोदशमुखान् बाह्वोर्धरेत् षोडश षोडश।**
**प्रत्येकं द्वादश वहेन्नवास्यान् मणिबन्धयोः।।५७।।**

**चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम्।**
**धारयेत् सार्वकालं तु रुद्राक्षं शिवपूजकः।।५८।।**

बुधः ज्ञानी शिखायाम् एकमुखं रुद्राक्षमेकं धारयेत्, शिरसि त्रीणि तत्र एकं द्विमुखं द्वितीयं त्रिमुखं तृतीयं तु द्वादशमुखम् एकादशमुखान् षट्-त्रिंशत्संख्याकान् मस्तके धारयेत्, कर्णद्वये प्रत्येकं षट् षट् रुद्राक्षाः, तत्र दशमुखकं द्वयं सप्तमुखकं द्वयं पञ्चमुखकं द्वयम्, कण्ठे द्वात्रिंशद्रुद्राक्षाः, तत्र षण्मुखकाः षोडश, अष्टमुखकाः षोडश, वक्षसि वक्षः स्थले चतुर्वक्त्राणि पञ्चाशत्, बाह्वोः प्रत्येकं त्रयोदशमुखान् षोडश षोडश, मणिबन्धयोः प्रत्येकं नवमुखकान् द्वादश द्वादश, यज्ञसूत्रार्थे चतुर्दशमुखान् अष्टोत्तरशतानइत्येवं शिवपूजकः शिवपूजाकाले सार्वकालं तु रुद्राक्षं धारयेत्।

संस्कृतव्याख्या— 'अयं भावः शुद्धमिश्रसंकीर्णभुवनाधीशशिवाष्ट-विद्येश्वरशतरुद्रसंख्यातयज्ञोपवीतधारणेन भुवनाध्वशुद्धिः, वर्णसंख्यातवक्षोमालया वर्णाध्वशुद्धिः, पदसंख्यातमणिबन्धबाहुकण्ठमालया पदाध्वशुद्धिः, षडङ्गपञ्चब्रह्म-प्रणवमन्त्रसंख्यातकर्णाभरणेन मन्त्राध्वशुद्धिः, शिवशक्त्यात्मक-कर्णाभरणेन वा तत्त्वसंख्यातमस्तकमालया तत्त्वाध्वशुद्धिः, अष्टत्रिंशत्कलापूर्णसोमसूर्याग्नि-लक्षण-शिरोरन्ध्रमालया कलाध्वशुद्धिः-एवंरूप-षडध्वकारणीभूतपरशिवब्रह्म-मयशिखागतैकरुद्राक्षधारणेन परशिवस्वरूप एव। (श्रीमरितोण्टदार्याः)

**एवं रुद्राक्षधारी यः सर्वकाले तु वर्तते।**
**तस्य पापकथा नास्ति मूढस्यापि न संशयः।।५९।।**

एवं उक्तप्रकारेण अत्रोक्तस्थानेषु सर्वकाले सदैव तु यः रुद्राक्षधारी वर्तते तस्य मूढस्यापि सतः पापकथा नास्ति पापलेशोऽपि न सम्भवति इत्यत्र न संशयः।

**ब्रह्महा मद्यपायी च स्वर्णहृद् गुरुतल्पगः।**
**मातृहा पितृहा चैव भ्रूणहा कृतघातकः।।**
**रुद्राक्षधारणादेव मुच्यते सर्वपातकैः।।६०।।**

ब्रह्महा ब्रह्म हन्ति इति ब्रह्महा ब्रह्महत्यां कृतवान्, मद्यपायी मद्यं पिबति इति मद्यपायी मद्यव्यसनी, स्वर्णहृत् स्वर्णं हरति इति स्वर्णहृत्, गुरुतल्पगः गुरुतल्पं गच्छति इति गुरुतल्पगः गुरुशयनशायी, मातृहा मातरं हन्ति इति मातृहा मातृहन्ता पितृहा पितृहन्ता च, एवं, भ्रूणहा भ्रूणःहन्ता, कृतघातकः कृतः घातः येन सः घातककारी, इति एतादृशः रुद्राक्षधारणात् एव सर्वपातकैः सर्वाणि च तानि पातकानि च तैः मुच्यते मुक्तो भवति।

**दर्शनात् स्पर्शनाच्चैव स्मरणादपि पूजनात्।**
**रुद्राक्षधारणाल्लोके मुच्यन्ते पातकैः जनाः।।६१।।**

रुद्राक्षस्य दर्शनात्, स्पर्शनात्, स्मरणात् पूजनात् तथैव रुद्राक्षधारणाच्च लोके जनाः पातकैः पापैः मुच्यन्ते मुक्ताः भवन्ति।

**ब्राह्मणो वान्त्यजो वापि मूर्खो वा पण्डितोऽपि वा।**
**रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः।।६२।।**

यदि वा ब्राह्मणः अन्त्यजः, मूर्खः, पण्डितः अपि वा सर्वे एते रुद्राक्षधारणादेव सर्वपातकैः मुच्यन्ते।

**गवां कोटिप्रदानस्य यत्फलं भुवि लभ्यते।**
**तत्फलं लभते मर्त्यो नित्यं रुद्राक्षधारणात्।।६३।।**

भुवि भूलोके गवां कोटिप्रदानस्य कोटिसंख्याकधेनूनां प्रदानेन यत् फलं लभ्यते तत् फलं तत्सदृशं फलं मर्त्यः मनुष्यः नित्यं रुद्राक्षधारणात् लभते प्राप्नोति।

**मृत्युकाले च रुद्राक्षं निष्पीड्य सह वारिणा।**
**यः पिबेच्चिन्तयन् रुद्रं रुद्रलोकं स गच्छति।।६४।।**

मृत्युकाले मृत्योः काले मरणकाले यः रुद्राक्षं वारिणा सह निष्पीड्य रुद्रं चिन्तयन् सन् पिबेत् पानं कुर्यात् सः रुद्रलोकं गच्छति।

**पिबेत्** - पा-पाने, विधिलिङ्।

**गच्छति** गम् ऌ - गतौ, लट्।

**भस्मोद्धूलितसर्वाङ्गा धृतरुद्राक्षमालिकाः।**
**ये भवन्ति महात्मानस्ते रुद्रा नात्र संशयः।।६५।।**

भस्मोद्धूलितसर्वाङ्गा भस्मना उद्धूलितानि सर्वाणि च तानि अङ्गानि येषां ते सर्वेष्वपि अङ्गेषु भस्मना उद्धूलिताः ये च भवन्ति तथैव धृतरुद्राक्षमालिकाः धृताः रुद्राक्षमालिकाः यैः ते तादृशाः ये भवन्ति महात्मानः ते रुद्राः एव इत्यत्र न संशयः।

**नित्यानि काम्यानि निमित्तजानि**
**कर्माणि सर्वाणि सदापि कुर्वन्।**
**यो भस्मरुद्राक्षधरो यदि स्याद्**
**द्विजो न तस्यास्ति फलोपपत्तिः।।६६।।**

यः द्विजः ब्रह्मज्ञानी नित्यानि विहितानि कर्माणि, काम्यानि कर्माणि निमित्तजानि नैमित्तिकानि च सर्वाणि कर्माणि सदापि कुर्वन् सन् यदि भस्मरुद्राक्षधरः भस्म च रुद्राक्षश्च भस्मरुद्राक्षौ तौ धरति इति धरः

भस्मरुद्राक्षधारी सन् स्यात् चेत् तस्य फलोपपत्तिः फलानाम् उपपत्तिः एव न अस्ति जीवन्मुक्तत्वात्।

प्रथमद्वितीयतृतीयपादाः इन्द्रवज्रावृत्तान्विताः, चतुर्थस्तु पादः उपेन्द्रवज्रावृत्तान्वितः अतः अत्र उपजातिः छन्दः।

**सर्वेषु वर्णाश्रमसङ्गतेषु**
**नित्यं सदाचारपरायणेषु।**
**श्रुतिस्मृतिभ्यामिह चोद्यमानो**
**विभूति - रुद्राक्षधरः समानः।।६७।।**

वर्णाश्रमसङ्गतेषु वर्णाश्च आश्रमाश्च वर्णाश्रमाः तेषु सङ्गताः ये तेषु, वर्णाश्रमधर्मपरिपालकेषु, नित्यं प्रतिनित्यं सदाचारपरायणेषु सदाचारेषु परायणाः ये तेषु सदाचारसम्पन्नेषु एतादृशेषु परायणाः ये तेषु सदाचारसम्पन्नेषु एतादृशेषु सर्वेषु विषये विभूतिरुद्राक्षधरः तु समानः मानेन सह वर्तते इति समानः एक एव गौरवार्हः इति इह लोके श्रुतिस्मृतिभ्यां श्रुतिश्च स्मृतिश्च श्रुतिस्मृती ताभ्यां श्रुतिस्मृतिभ्यां चोद्यमानःश्लाघनीयः वर्तते।

अत्रापि उपजातिः छन्दः।

पूर्वार्धे इन्द्रवज्रावृत्तम्, उत्तरार्धे उपेन्द्रवज्रावृत्तम्।

*इति श्रीषट्स्थलब्रह्मिणा शिवयोगिनाम्ना प्रणीते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ भक्तस्थले विभूतिरुद्राक्षधारणप्रसङ्गो नाम*
*।।सप्तमः परिच्छेदः।।*



# ।।अष्टमः परिच्छेदः।।

## (८) पञ्चाक्षरजपस्थलम्

**धृतश्रीभूतिरुद्राक्षः प्रयतो लिङ्गधारकः।**
**जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम्।।१।।**

लिङ्गधारकः लिङ्गधारी वीरशैवः प्रयतः निष्ठायुक्तः सन् धृतश्रीभूतिरुद्राक्षः श्रीभूतिश्च रुद्राक्षश्च श्रीभूतिरुद्राक्षौ धृतौ श्रीभूतिरुद्राक्षौ येन सः विभूतिरुद्राक्षधारी च सन् शिवतत्त्वप्रबोधिनीं शिवतत्त्वस्य प्रबोधिनीं शिवतत्त्वप्रकाशिनीं पञ्चाक्षरीविद्यां पञ्चाक्षरीमहामन्त्रं जपेत्।

**जपेत्** - जप - अव्यक्तायां वाचि, विधिलिङ्।

**शिवतत्त्वात् परं नास्ति यथा तत्त्वान्तरं महत्।**
**तथा पञ्चाक्षरीमन्त्रान्नास्ति मन्त्रान्तरं महत्।।२।।**

यथा शिवतत्त्वात् शिवतत्त्वापेक्षया महत् श्रेष्ठतमं परं तत्त्वान्तरं उत्तमोत्तमम् अन्यत् तत्त्वमेव नास्ति तथैव पञ्चाक्षरीमन्त्रात् पञ्चाक्षरीमहामन्त्रा-पेक्षया महत् श्रेष्ठतमं मन्त्रान्तरम् अन्यः मन्त्रः नास्ति एव।

पूर्वार्धोत्तरार्धयोः विम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारः 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' इति लक्षणम्। यथा शिवतत्त्वात् तत्त्वान्तरं नास्ति तथा पञ्चाक्षरीमन्त्रात् मन्त्रान्तरं नास्ति इति उपमाध्वनिश्च। अनुप्रासश्च।

**ज्ञाते पञ्चाक्षरीमन्त्रे किं वा मन्त्रान्तरैः फलम्?।**
**ज्ञाते शिवे जगन्मूले किं फलं देवतान्तरैः?।।३।।**

पञ्चाक्षरीमन्त्रे ज्ञाते सति मन्त्रान्तरैः इतरैः मन्त्रैः किं वा फलं स्यात्? न किमपि फलं स्यात्। तथैव जगन्मूले शिवे जगत्कारणे शिवे ज्ञाते सति देवतान्तरैः किं वा फलं स्यात्? न किमपि स्यात्।

अत्रापि दृष्टान्तालङ्कारः पूर्वार्धोत्तरार्धयोः बिम्बप्रतिबिम्बभावात्। तथैव उपमाध्वनिरपि। मन्त्रान्तराणां देवतान्तराणां च कैमर्थ्यस्य वर्णनात् पञ्चमः

प्रतीपालङ्कारः। 'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते।' इति लक्षणम्।

**सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान्।**
**ब्रह्मविष्णवादिदेवेषु यथा शम्भुर्महत्तरः।।४।।**

ब्रह्मविष्णवादिदेवेषु ब्रह्मविष्णवादित्रयस्त्रिंशेषु कोटिषु देवेषु उपास्यत्वात् अजातत्वात् शम्भुः यथा महत्तरः तथा सप्तकोटिषु मन्त्रेषु पञ्चाक्षरः मन्त्रः एव महान् श्रेष्ठतमः। अत्र वाक्यार्थोपमालङ्कारः।

**अशेषजगतां हेतुः परमात्मा महेश्वरः।**
**तस्य वाचकमन्त्रोऽयं सर्वमन्त्रैककारणम्।।५।।**

यथा परमात्मा महेश्वरः अशेषजगतां समस्तजगतां हेतुः कारणं तथैव तस्य वाचकमन्त्रः अयं पञ्चाक्षरमन्त्रः सर्वमन्त्रैककारणम् सर्वेषां मन्त्राणाम् एकं प्रधानं कारणं वर्तते। उपमाध्वनिः।

**तस्याभिधानमन्त्रोऽयभिधेयश्च स स्मृतः।**
**अभिधानाभिधेयत्वान्मन्त्रात् सिद्धः परः शिवः।।६।।**

तस्य परमेश्वरस्य अयं मन्त्रः अभिधानमन्त्रः अभिधानश्च असौ मन्त्रश्च अभिधानमन्त्रः वाचकमन्त्रः, स च परमेश्वरः अभिधेयः अभिधातुं योग्यः तस्य वाच्यः इति स्मृतः। एवं मन्त्रशिवयोः अभिधानाभिधेयत्वात् अभिधानत्वाभिधेयत्वसम्बन्धात् परः शिवः मन्त्रात् अस्मात् सिद्धः भवति प्रकाशितो भवति।

वाचकवाच्ययोः अभिधानाभिधेययोः यथा अभेदः सम्बन्धः तथैव मन्त्रशिवयोः अभिधानत्वाभिधेयत्वयुक्तयोः अभेदः सम्बन्धः। वागर्थयोः अविनाभावत्वं महाकविना कालिदासेन एवं प्रतिपादितः—

'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।' इति।

**नमः शब्दं वदेत्पूर्वं शिवायेति ततः परम्।**
**मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः।।७।।**

प्रथमं पूर्वं नमः इति शब्दं वदेत् ततः परम् अनन्तरम् शिवाय इति वदेत्।

एवं नमः शिवाय इति एषः मन्त्रः पञ्चाक्षरः सर्वश्रुतिशिरोगतः अस्ति सर्वासु च श्रुतिषु शिरोगतः शिरसि वर्तते अर्थात् सर्वश्रुतिशिरोमणिरेवास्ति।

शिवजीवैक्यप्रकाशनार्थं नमः शब्दपूर्वकत्वेन चित्तत्वेन च पञ्चाक्षररूपेण सर्वश्रुतिशिरोगतः सन् मन्त्रोऽयं प्रतिभाति। मन्त्रेऽस्मिन् 'नमः शिव+अय' इति अंशत्रयं वर्तते। अत्र नमः इति पदेन जीवत्वम्, शिव-इति शब्देन परब्रह्मत्वम्, अय इति प्रत्ययेन जीवब्रह्मणोः सामरस्यम् अनुबध्यते।

**आदितः परिशुद्धत्वान्मलत्रयवियोगतः।**
**शिव इत्युच्यते शम्भुश्चिदानन्दघनः प्रभुः।।८।।**

आदितः आदिकालादारभ्य मलत्रयवियोगतः मलत्रयस्य वियोगात् अभावात् परिशुद्धत्वात् कारणात् चिदानन्दघनः सच्चिदानन्दात्मकः प्रभुः स्वतन्त्रत्वात् अधीश्वरत्वात् सुखप्रदत्वात् शिवानन्दमयत्वात् परब्रह्मनामकः परमेश्वरः शम्भुः तावत् शिवः स्वच्छप्रकाशरूपः मङ्गलप्रदः इति उच्यते।

'वश-कान्तौ' इति धातोः वकारशकारयोः व्यत्ययेन अकारस्य इकारे च सति 'शिवः' इति पदं निष्पन्नम्।

**आस्पदत्वादशेषाणां मङ्गलानां विशेषतः।**
**शिवशब्दाभिधेयो हि देवदेवस्त्रियम्बकः।।९।।**

त्रियम्बकः सृष्टिस्थितिलयकारणपरब्रह्मवाचकः देवदेवः परमेश्वरः विशेषतः विशिष्टतः विशिष्टतया अनितरसाधारणतया अशेषाणामपि मङ्गलानां आस्पदत्वात् आश्रयस्थानवत्त्वात् शिवशब्दाभिधेयः शिवः इति शब्देन अभिधातुं योग्यः वर्तते हि।

**शिव इत्यक्षरद्वन्द्वं परब्रह्मप्रकाशकम्।**
**मुख्यवृत्त्या तदन्येषां शब्दानां गुणवृत्तिता।।१०।।**

शिवः इति अक्षरद्वन्द्वं मुख्यवृत्त्या वाच्यार्थबोधकसामर्थ्यवत्या अभिधावृत्त्या परब्रह्मप्रकाशकं परब्रह्मणः प्रकाशकं बोधकमस्ति, तदन्येषां तस्मादन्येषां शिवः इति पदापेक्षया भवः शर्वः मृडः इत्यादीनाम् अन्येषां शब्दानां विषये गुणवृत्तिता अमुख्यव्यापारवत्ता बोध्या।

**तस्मान्मुख्यतरं नाम शिव इत्यक्षरद्वयम्।**
**सच्चिदानन्दरूपस्य शम्भोरमिततेजसः।।११।।**

तस्मात् मुख्यवृत्त्या प्रतिपादकत्वात् शिवः इति अक्षरद्वयं तावत् सच्चिदानन्दरूपस्य अमिततेजसः अपरिमितप्रकाशवतः शम्भोः परमेश्वरस्य मुख्यतरं नाम मुख्यतरमभिधानम्।

**एतन्नामावलम्बेन मन्त्रः पञ्चाक्षरः स्मृतः।**
**यस्मादतः सदा जप्यो मोक्षकाङ्क्षिभिरादरात्।।१२।।**

एतन्नामावलम्बेन एतस्य नाम्नः अवलम्बेन शिवः इति पदस्य आश्रयेण यस्मात् पञ्चाक्षरः मन्त्रः स्मृतः प्रख्यातः यस्मादेव कारणात् पञ्चाक्षरमन्त्रत्वं सिद्धं, अतः तस्मात्कारणात् आदरात् प्रीतिपूर्वकं मोक्षकाङ्क्षिभिः मोक्षापेक्षिभिः सदा जप्यः जपितुं योग्यः।

**यथानादिर्महादेवः सिद्धः संसारमोचकः।**
**तथा पञ्चाक्षरीमन्त्रः संसारक्षयकारकः।।१३।।**

यथा महादेवः अनादिः न विद्यते आदिः यस्य सः अनादिः, अपि च संसारमोचकः संसारं मोचयति इति संसारमोचकः संसारनाशकः मोक्षदायकत्वात् इति सिद्धः प्रसिद्धः तथैव पञ्चाक्षरः मन्त्रः अपि संसारक्षयकारकः संसारस्य क्षयं करोति इति संसारक्षयकारकः इति प्रसिद्धः।

अत्र वाक्यार्थोपमालङ्कारः।

**पञ्चभूतानि सर्वाणि पञ्च तन्मात्रकानि च।**
**ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च।।**
**पञ्च ब्रह्माणि पञ्चापि कृत्यानि सह कारणैः।**
**बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः।।१५।।**

पञ्चभूतानि पृथिवी आपः तेजः वायुः आकाशः इति पञ्चभूतानि सर्वाणि, सर्वाणि पञ्चतन्मात्रकानि गन्धः रसः रूपं स्पर्शः शब्दः इति पञ्च तन्मात्राणि पञ्चज्ञानेन्द्रियाणि घ्राणः रसना नेत्रं चर्म श्रवणमिति पञ्चज्ञानेन्द्रियाणि अपि च पञ्च कर्मेन्द्रियाणि वाक् पाणिः पादः पायुः उपस्थ इति पञ्चकर्मेन्द्रियाणि, पञ्चब्रह्माणि सद्योजातः वामदेवः अघोरः तत्पुरुषः ईशानश्चेति पञ्चब्रह्ममन्त्राः,

उपलक्षणया शिवसादाख्यम् अमूर्तसादाख्यम् मूर्तसादाख्यम् कर्तृसादाख्यम् कर्मसादाख्यं चेति पञ्च सादाख्यानि, आचारलिङ्गम् गुरुलिङ्गम् शिवलिंगम जंगमलिंगम् प्रसादलिंगम् चेति पञ्च लिङ्गानि, पञ्चकारणैः सह भव-मृड-हरादि पञ्चकारणपुरुषैः सह पञ्चकृत्यानि सृष्टिः स्थितिः लयः तिरोधानम् अनुग्रहः इति पञ्चकृत्यानि इत्यादीनि एतानि पञ्चावयवभरितानि सर्वाणि अपि पञ्चाक्षरमहामनोः पञ्चाक्षरमहामन्त्रस्य नमः शिवाय इति पञ्चभिः वर्णैः यथाक्रमं बोध्यानि सन्ति।

**पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः।**
**तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि।।१६।।**

पञ्चधा पञ्चधा पञ्च पञ्च प्रकारेण विशेषतः विशेषाकारेण यानि यानि प्रसिद्धानि वर्तन्ते तानि सर्वाणि अपि वस्तूनि पञ्चाक्षरमयानि एव सन्ति हि - यथाहि— पञ्चशक्तयः - क्रियाशक्तिः, ज्ञानशक्तिः इच्छाशक्तिः आदिशक्तिः पराशक्तिः, पञ्चतत्त्वानि–मनःबुद्धिः अहङ्कारः प्रकृतिः पुरुषः, इत्यादीनि पञ्चावयवयुक्तानि सर्वाण्यपि वस्तूनि पञ्चवर्णैः बोध्यानि सन्ति। 'वर्णानां शक्तिरूपत्वम्' इति अवगन्तव्यम्।

**ओंकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः।**
**शैवागमेषु वेदेषु षडक्षर इति स्मृतः।।१७।।**

परः श्रेष्ठतमः पञ्चाक्षरमयः पञ्चाक्षरैः युक्तः अयं मन्त्रः ओंकारपूर्वः सन् प्रथमम् ओंकारयुक्तः सन् अर्थात् ओं नमः शिवाय-इति अयं मन्त्रः शैवागमेषु वेदेषु च षडक्षरः षट् अक्षराणि यस्य सः षडक्षरः इति स्मृतः। 'शिवो मे अस्तु सदाशिवोम्' इत्यादिरूपेण श्रूयमाणत्वात् वेदप्रसिद्धत्वम्,

'शिवो वा प्रणवः प्रोक्तः प्रणवो वा शिवः प्रोक्तः' इत्याद्यागमोक्तेश्च। पुनश्च—

**'प्रथमं तारकारूपं द्वितीयं दण्ड उच्यते।**
**तृतीयं कुण्डलाकारं चतुर्थं चार्धचन्द्रकम्।।**
**पञ्चमं दर्पणाकारं षष्ठं ज्योतिः स्वरूपकम्।**
**नकारस्तारकारूपो मकारो दण्ड उच्यते।**
**शिकारः कुण्डलाकारो वकारश्चार्धचन्द्रकः।।**

यकारो दर्पणाकार ओंकारः पञ्चवर्णराट्।।

इत्यागमोक्तिः।

**मन्त्रस्यास्यादिभूतेन प्रणवेन महामनोः।**
**प्रबोध्यते महादेवः केवलश्चित्सुखात्मकः।।१८।।**

महामनोः अस्य मन्त्रस्य अस्य पञ्चाक्षरमहामन्त्रस्य आदिभूतेन आद्यक्षरत्वेन परिगणितेन प्रणवेन ओंकारेण चित्सुखात्मकः सच्चिदानन्दात्मकः केवलः एक एव नान्यः महादेवः प्रबोध्यते प्रकाश्यते।

**प्रबोध्यते**— प्र+बुध - अवगमने, कर्मणि लट्

**प्रणवेनैकवर्णेन परब्रह्म प्रकाश्यते।**
**अद्वितीयं परानन्दं शिवाख्यं निष्प्रपञ्चकम्।।१९।।**

अद्वितीयं द्वितीयवस्तुरहितं 'शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम्' इत्यागमोक्तेः, शिवाख्यं परानन्दं सच्चिदानन्दलक्षणं वस्तु– 'एकमेवाद्वितीयम्' इति श्रुतेः द्वितीयवस्तुशून्यं सत् 'आनन्दं ब्रह्मेति व्यजानात्' इति श्रुतिवाक्यानुसारं परानन्दं च सत् निष्प्रपञ्चकं 'नेह नानास्ति किञ्चन' इति श्रुतेः हेयप्रपञ्चशून्यं सत् शिवाख्यं परब्रह्म केवलं प्रणवेन एकवर्णेन ओम्-इति एकेनैव प्रणवाक्षरेण प्रकाश्यते अवबुध्यते, प्रणवस्य अंशीभूतानाम् अकारोकारमकाराणां सत्-चित्-आनन्दवाचकत्वात् प्रणवेन प्रकाश्यते इति भावः। एवं च न-मः-शि-वा-य-इति पञ्च अक्षराणि क्रमेण आचारलिङ्ग-गुरुलिङ्ग-शिवलिङ्ग-जङ्गमलिङ्ग-प्रसादलिङ्गानां पञ्चलिङ्गानां बीजाक्षराणि, ओंकारः तावत् महालिङ्गस्य बीजाक्षरमिति बीजवृक्षरूपप्रणवपञ्चाक्षरम् एव षट्स्थलानामपि बीजमित्यवधेयम्। **प्रकाश्यते** – काशृ-दीप्तौ - कर्मणि लट्।

**परमात्ममनुर्ज्ञेयः सोऽहंरूपः सनातनः।**
**जायते सहयोर्लोपादोमित्येकाक्षरो मनुः।।२०।।**

सनातनः मनुः शिवस्य पञ्चाक्षरः मन्त्रः सोऽहं रूपः इतिज्ञेयः, सोऽहम् इत्यत्र वर्तमानयोः सहयोः सकारहकारयोः लोपात् ओम् इति एकाक्षरः मनुः मन्त्रः जायते। केवलकुम्भकेन सोऽहम् इत्यत्र स-हवर्णयोः लोपे सति ओम् इति एकाक्षरः मन्त्रः जायते। 'सकारस्य चन्द्रबीजत्वात् वेद्यरूपत्वम्, हकारस्य

सूर्यबीजत्वात् वेदनरूपत्वम्, एवंरूपयोः सकारहकारयोः लोपात् वृत्तिशून्यवेदकमात्रप्रकाशरूपः ओंकार एव अवशिष्यते - इति निष्प्रपञ्च-ब्रह्मप्रतिपादकः अयं प्रणवः। एतेन शिवजीवैक्यलक्षणलिङ्गाङ्गसामरस्यरूप-श्रुत्यागमप्रसिद्धपरमुक्तिरिति बोध्यम्।

**प्रणवेनैव मन्त्रेण बोध्यते निष्कलः शिवः।**
**पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुस्तथा।।२१।।**

**निष्कलः संविदाकारः सकलो विश्वमूर्तिकः।**
**उभयात्मा शिवो मन्त्रे षडक्षरमये स्थितः।।२२।**

निष्कलः इति पदेन शिवे शुद्धचिद्रूपत्वम्, सकलः इति पदेन प्रपञ्चविशिष्टत्वम् उच्यते। एवञ्च-प्रणवेन एव मन्त्रेण केवलम् ओंकारेण मन्त्रेण निष्कलः शिवः सच्चिदानन्दात्मकः शिवः बोध्यते, तथैव पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुः पञ्चब्रह्ममयः शिवः बोध्यते। अतः शिवः निष्कलः संविदाकारः शुद्धचिदानन्दात्मकः, सकलः शिवः विश्वमूर्तिकः सकलप्रपञ्चस्वरूपात्मकः, उभयात्मा च शिवः सकलनिष्कलात्मकः परमात्मा षडक्षरमये मन्त्रे स्थितः सन् नित्यं प्रकाशते। प्रणवस्यापि सप्रपञ्चब्रह्ममयत्वेऽपि वेद्यसंस्कारात्मक-बिन्दुघटितत्वेन सूक्ष्मप्रपञ्चमयत्वात् निष्कलत्वव्यपदेशः। स्थूलप्रपञ्चमयस्य पञ्चाक्षरमन्त्रद्रुमस्य प्रणवः बीजम्, तस्य अकारोकारमकारनादबिन्दुलक्षण-पञ्चावयवसम्पन्नत्वात् - इति ज्ञेयम्।

**मूलं विद्या शिवः शैवं सूत्रं पञ्चाक्षरस्तथा।**
**एतानि नामधेयानि कीर्तितानि महामनोः।।२३।।**

महामनोः पञ्चाक्षरमहामन्त्रस्य मूलम्, विद्या, शिवः, शैवम्, सूत्रम्, पञ्चाक्षरः इति एतानि नामधेयानि कीर्तितानि प्रसिद्धानि, पर्यायपदानि।

**पञ्चाक्षरीमिमां विद्यां प्रणवेन षडक्षरीम्।**
**जपेत् समाहितो भूत्वा शिवपूजापरायणः।।२४।।**

इमां पञ्चाक्षरीं विद्यां प्रणवेन सह षडक्षरीम् षडक्षरमहामन्त्रं शिवपूजापरायणः लिङ्गपूजानिष्ठः समाहितः सन् एकाग्रचित्तः सन् जपेत्।

**प्राणायामत्रयं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा।**
**चिन्तयन् हृदयाम्भोजे देवदेवं त्रियम्बकम्।।२५।।**

**सर्वालङ्कारसंयुक्तं साम्बं चन्द्रार्धशेखरम्।**
**जपेदेतां महाविद्यां शिवरूपामनन्यधीः।।२७।।**

परिशुद्धे प्रदेशे भद्रपीठे प्राङ्मुखोदङ्मुखो वा प्राङ्मुखः अथवा उदङ्मुखः अपि वा सन् उपविश्य धृतभस्मरुद्राक्षधारणः प्राणायामत्रयं कृत्वा स्वकीये हृदयाम्भोजे हृदयकमलमध्ये देवदेवं त्रियम्बकम् सर्वालङ्कारसंयुक्तं सर्वैः अलङ्कारैः संयुक्तं विभूषितं साम्बं भवानीपतिम् चन्द्रार्धशेखरं चन्द्रशेखरम् अनन्यधीः चित्तैकाग्रः सन् चिन्तयन् परिभावयन् शिवरूपाम् एतां महाविद्यां जपेत्, गुरूपदिष्टमार्गेण सगर्भजपं कुर्यात्।

**जपेत्** - जपव्यक्तायां वाचि मानसे च, विधिलिङ्।

**जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः।**
**श्रूयते यस्तु पार्श्वस्थैर्यथा वर्णसमन्वयः।।२७।।**

**वाचिकः स तु विज्ञेयः सर्वपापप्रभञ्जनः।**
**ईषत् स्पृष्ट्वाधरपुटं यो मन्दमभिधीयते।।२८।।**

**पार्श्वस्थैरश्रुतः सोऽयमुपांशुः परिकीर्तितः।**
**अस्पृष्ट्वाधरमस्पन्दि जिह्वाग्रं योऽन्तरात्मना।।**
**भाव्यते वर्णरूपेण स मानस इति स्मृतः।।२९।।**

जपस्तु वाचिकोपांशुमानसः वाचिकश्च उपांशुश्च मानसश्च यस्य सः वाचिकोपांशुमानसः वाचिकजपः उपांशुजपः मानसजपश्चेति त्रिविधः प्रोक्तः, यस्तु जपः यथा वर्णसमन्वयः वर्णानाम् उच्चारणं पार्श्वस्थैः समीपस्थैः जनैरपि श्रूयते तथा क्रियमाणः जपः वाचिकः जपः, स तु जपः सर्वपापप्रभञ्जकः सर्वाणि च तानि पापानि प्रभञ्जयति इति सर्वपापप्रभञ्जकः सर्वेषां पापानां नाशकः इति विज्ञेयः, यः जपः अधरपुटम् अधरद्वयम् ईषत् स्पृष्ट्वा मन्दं यथा स्यात् अभिधीयते, परं पार्श्वस्थैः अश्रुतः सन् जप्यते सः अयम् उपांशुः जपः इति परिकीर्तितः, यश्च मन्त्रोच्चारः अधरमपि अस्पृष्ट्वा जिह्वाग्रं च अस्पन्दि यथा स्यात् तथा स्पन्दरहिततया केवलम् अन्तरात्मना वर्णरूपेण मन्त्राक्षरस्वरूपवता

चित्तेन भाव्यते मनसि पुरश्चरणमनुसन्धीयते सः मानसः जपः इति स्मृतः।

**श्रूयते** - श्रु-श्रवणे, कर्मणि लट्।

**अभिधीयते** - अभि+डुधाञ् - धारणे, लट्।

**भाव्यते** — भू-सत्तायाम्, कर्मणि लट्णिजन्ताद्।

**यावन्तः कर्मयज्ञाद्याः व्रतदानतपांसि च।**
**सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्।।३०।।**

यावन्तः यावत्संख्याकाः कर्मयज्ञाद्याः ज्योतिष्टोमादयः कर्मप्रधानाः यज्ञाः सन्ति, यावन्ति च यावत्संख्याकानि व्रतदानतपांसि व्रतानि च दानानि च तपांसि च व्रतदानतपांसि च वर्तन्ते ते सर्वे जपयज्ञस्य जपरूपयज्ञस्य षोडशीमपि कलां न अर्हन्ति। महामन्त्रजपस्तु श्रेष्ठतमः। **अर्हन्ति**-अर्ह-पूजायाम्, लट्।

**माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्तितम्।**
**तस्माच्छतगुणोपांशुः सहस्रो मानसः स्मृतः।।३१।।**

वाचिकस्य एतज्जपयज्ञस्य एतस्य जपयज्ञस्य यावत् माहात्म्यं कीर्तितम् तस्मात् शतगुणश्चासौ उपांशुश्च शतगुणोपांशुः शतगुणः श्रेष्ठः उपांशुजपः, एतस्मादपि सहस्रः गुणः श्रेष्ठः मानसः जपः इति स्मृतः।

**वाचिकात् तदुपांशोश्च जपादस्य महामनोः।**
**मानसो हि जपः श्रेष्ठो घोरसंसारनाशकः।।३२।।**

महामनोः अस्य वाचिकात् जपात् अपि च तस्मात् च उपांशोश्च जपात् घोरसंसारनाशकः घोरस्य संसारस्य नाशकः मानसः जपः तावत् श्रेष्ठः हि।

**एतेष्वेतेन विधिना यथाभावं यथाक्रमम्।**
**जपेत् पञ्चाक्षरीमेतां विद्यां पाशविमुक्तये।।३३।।**

एतेषु वाचिकोपांशुमानसरूपेषु त्रिषु जपेषु मध्ये यथासम्भवम् एतेन विधिना विध्युक्तप्रकारेण न्यासादिकमनुसृत्य यथाभावं भावानुगुणम् यथाक्रमं क्रमानुगुणं च पाशविमुक्तये मलमायादि-सकल-पाशादीनां विनाशाय एतां पञ्चाक्षरीं विद्याम् एतं पञ्चाक्षरी-महामन्त्रं जपेत्।

**अनेन मूलमन्त्रेण शिवलिङ्गं प्रपूजयेत्।**
**नित्यं नियमसम्पन्नः प्रयतात्मा शिवात्मकः।।३४।।**

नियमसम्पन्नः यमनियमासनादिक्रियासम्पन्नः, प्रयतात्मा प्रयतः आत्मा यस्य सः शुद्धान्तःकरणः शिवात्मकः शिवः आत्मा यस्य सः शिवोऽहम्भावसम्पन्नः सन् नित्यं शिवलिङ्गम् अनेन मूलमन्त्रेण प्रपूजयेत्।

**प्रपूजयेत्** –प्र+पूज-पूजायाम्, विधिलिङ्।

**भक्त्या पञ्चाक्षरैणैव यः शिवं सकृदर्चयेत्।**
**सोऽपि गच्छेच्छिवस्थानं मन्त्रस्यास्यैव गौरवात्।।३५।।**

यः साधकः भक्त्या पच्चाक्षरेणैव केवलं पञ्चाक्षरमन्त्रेण केवलं पञ्चाक्षरमहामन्त्रमेव समुच्चरन् सन् शिवं सकृत् एकवारं वा अर्चयेत् चेत्, सः अपि अस्य मन्त्रस्य गौरवादेव महत्त्वादेव शिवस्थानं गच्छेत् मोक्षं प्राप्नुयात्।

**अर्चयेत्** - अर्च् - पूजायाम्, विधिलिङ्।

**गच्छेत्** - गम्लृ-गतौ, विधिलिङ्।

**अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः।**
**तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः।।३६।।**

अब्भक्षाः अपः भक्षयन्ति इति अब्भक्षाः केवलं जलाहारिणः, वायुभक्षाश्च वायुं भक्षयन्ति वायुभक्षाः वाय्वाहारिणः केवलम्, एवं रीत्या ये च अन्ये व्रतकर्शिताः कृच्छ्रचान्द्रायणादिव्रतनियमैः कृशशरीरिणः सन्ति, तेषाम् एतैः व्रतैः एतादृशक्लेशसाध्यैः व्रतैः शिवलोकसमागमः शिवलोकप्राप्तिः नास्ति। केवलं मन्त्रजपेनैव सम्भवति।

**तस्मात् तपांसि यज्ञाश्च व्रतानि नियमास्तथा।**
**पञ्चाक्षरार्चनस्यैव कोट्यंशेनापि नो समाः।।३७।।**

तस्मात् तपांसि यज्ञाः व्रतानि तथा नियमाश्च एते सर्वेऽपि पञ्चाक्षरार्चनस्य पञ्चाक्षरेण अर्चनस्य पञ्चाक्षरार्चनस्य एवं कोट्यंशेनापि नो समाः नैव समानाः।

**अशुद्धो वा विशुद्धो वा सकृत्पञ्चाक्षरेण यः।**
**पूजयेत् पतितो वापि मुच्यते नात्र संशयः।।३८।।**

अशुद्धः वा विशुद्धः वा यः सकृदेव पञ्चाक्षरेण मन्त्रेण एकवारं वा पूजाकरणेन पतितः वापि पापी अपि पूजयेत् चेत् सः अत्र मुच्यते संसारबन्धनात् मोक्षम् आप्नोति अत्र संशयः नास्ति।

**सकृदुच्चारमात्रेण पञ्चाक्षरमहामनोः।**
**सर्वेषामपि जन्तूनां सर्वपापक्षयो भवेत्।।३९।।**

पञ्चाक्षरमहामनोः पञ्चाक्षरमहामन्त्रस्य सकृत् एकवारमेव उच्चारमात्रेण केवलमुच्चारणेन सर्वेषामपि जन्तूनां सर्वेषां प्राणिनामपि सर्वपापक्षयः सर्वेषां पापानां क्षयः नाशः भवेत्।

**अन्येऽपि बहवो मन्त्रा विद्यन्ते सकलागमे।**
**भूयो भूयः समभ्यासात् पुरुषार्थप्रदायिनः।।४०।।**

सकलागमे सकलेषु आगमेषु अन्ये अपि इतरे अपि बहवः मन्त्राः विद्यन्ते दृश्यन्ते, किन्तु एते भूयः भूयः समभ्यासात् अनेकवारं पौनःपुन्येन पुरश्चरणात् पुरुषार्थ-प्रदायिनः धर्मार्थकामरूपान् पुरुषार्थान् प्रददति इति प्रदायिनः, न तु मोक्षप्रदायिनः।

**एष मन्त्रो महाशक्तिरीश्वरप्रतिपादकः।**
**सकृदुच्चारणादेव सर्व - सिद्धिप्रदायकः।।४१।।**

ईश्वरप्रातिपादकः ईश्वरं प्रतिपादयति इति ईश्वरप्रतिपादकः ईश्वरेण सह सामरस्य-प्रतिपादकः एषः मन्त्रः तावत् महाशक्तिः महती शक्तिः यस्य सः महासामर्थ्यवान्, अत एव सकृत् एकवारम् उच्चारणात् एव सर्वसिद्धिप्रदायकः सर्वासां सिद्धीनां प्रदायकः। सर्वाः च ताः सिद्धयश्च अणिमादयः तासां प्रदायकः सर्वसिद्धिप्रदायकः सर्वदायकः।

**पञ्चाक्षरीं समुच्चार्य पुष्पं लिङ्गे विनिक्षिपेत्।**
**यस्तस्य वाजपेयानां सहस्रफलमिष्यते।।४२।।**

यः शिवपूजकः पञ्चाक्षरीं समुच्चार्य समुच्चरन् लिङ्गे इष्टलिङ्गे पुष्पं विनिक्षिपेत् समर्पयेत् चेत् तस्य पूजकस्य वाजपेयानाम् वाजपेयादियागानां सहस्रफलम् इष्यते सम्भवति।

**इष्यते** - इष - इच्छायाम्, गतौ, कर्मणि लट्।

**अग्निहोत्रं त्रयो वेदा यज्ञाश्च बहुदक्षिणाः।**
**पञ्चाक्षरजपस्यैते कोट्यंशेनापि नो समाः।।४३।।**

अग्निहोत्रम् अग्निहोमकर्म, त्रयः वेदाः, बहुदक्षिणाः बहवः दक्षिणाः येषु ते बहुदक्षिणाः महादानादिरूपाः यज्ञाश्च एते पञ्चाक्षरजपस्य कोट्यंशेनापि नो समाः। अनेन पञ्चाक्षरमहामन्त्रस्य अद्वितीयफलदायकत्वं प्रोक्तम् भवति।

**पुरा सानन्दयोगीन्द्रः शिवज्ञानपरायणः।**
**पञ्चाक्षरं समुच्चार्य नारकानुदतारयत्।।४४।।**

पुरा शिवज्ञानपरायणः शिवस्य ज्ञाने परायणः निष्ठः सानन्दयोगीन्द्रः सानन्दः इति योगीन्द्रः पञ्चाक्षरं पञ्चाक्षरमहामन्त्रं समुच्चार्य नारकान् नरके स्थितान् उदतारयत् उद्धारयामास।

**उदतारयत्** - उद्+तृ - प्लवनतरणयोः, णिच्, लङ्।

अतारयत् अतारयताम् अतारयन् इत्यादि।

**सिद्ध्या पञ्चाक्षरस्यास्य शतानन्दः पुरा मुनिः।**
**नरकं स्वर्गमकरोत् सङ्गिरस्यापि पापिनः।।४५।।**

पुरा शतानन्दः मुनिः अस्य पञ्चाक्षरस्य पञ्चाक्षरमन्त्रस्य सिद्ध्या पापिनः पापिष्ठस्य सङ्गिरस्य अपि कृते नरकं स्वर्गमेव अकरोत्। नरकः स्वर्गायितः।

**उपमन्युः पुरा योगी मन्त्रेणानेन सिद्धिमान्।**
**लब्धवान् परमेशानाच्छैवशास्त्रप्रवक्तृताम्।।४६।।**

पुरा योगी उपमन्युः अनेन मन्त्रेण सिद्धिमान् सिद्धियुक्तः सन् परमेशानात् परमेश्वरात् शास्त्रप्रवक्तृतां शैवशास्त्रे प्रवक्तृत्वम् आचार्यत्वं लब्धवान् प्राप्तवान्।

**वसिष्ठवामदेवाद्या मुनयो मुक्तकिल्बिषाः।**
**मन्त्रेणानेन संसिद्धा महातेजस्विनोऽभवन्।।४७।।**

वसिष्ठवामदेवाद्याः वसिष्ठश्च वामदेवश्च आद्यः येषां ते वसिष्ठवामदेवाद्याः मुनयः मुक्तकिल्बिषाः मुक्तं किल्बिषं यैः ते दूरीकृतपापकर्माणः सन्तः अनेन मन्त्रेण संसिद्धाः समीचीनतया सिद्धिं प्राप्ताः सन्तः महातेजस्विनः शापानुग्रहदानसमर्थाः अभवन् बभूवुः।

**ब्रह्मादीनां च देवानां जगत्सृष्ट्यादिकर्मणि।**
**मन्त्रस्यास्यैव माहात्म्यात् सामर्थ्यमुपजायते।।४८।।**

ब्रह्मादीनां ब्रह्मा आदिः येषां तेषां देवानां ब्रह्मा विष्णुः रुद्रः इत्यादीनां देवानां जगत्सृष्ट्यादिकर्मणि जगतः सृष्टिः आदिः यस्मिन् तस्मिन् कर्मणि यथाक्रमं सृष्टि-स्थितिलयकर्मसु अस्यैव मन्त्रस्य माहात्म्यात् प्रभावात् सामर्थ्यं सृष्टयादिकर्मसु शक्तिः उपजायते उत्पन्नमस्ति।

**उपजायते**– उप+जनी - प्रादुर्भावे, लट्।

**किमिह बहुभिरुक्तैर्मन्त्रमेवं महात्मा**
**प्रणवसहितमादौ यस्तु पञ्चाक्षराख्यम्।**
**जपति परमभक्त्या पूजयन् देवदेवं**
**स गतदुरितबन्धो मोक्षलक्ष्मीं प्रयाति।।४९।।**

इह पञ्चाक्षरमहामन्त्रस्य विषये बहुभिः उक्तैः किम्? अनेकैः वर्णनैः किं वा स्यात्? किन्तु यः महात्मा यः महामहिमशाली शिवपूजकः आदौ पूजायाः प्रारम्भे प्रणवसहितम् ओंकारसहितं पञ्चाक्षराख्यं मन्त्रं पञ्चाक्षरमहामन्त्रम् एवं-विध्युक्तरीत्या परमभक्त्या परमया भक्त्या च, देवदेवं परमेश्वरं पूजयन् सन् पूजां कुर्वन्नेव सन् जपति उक्तप्रकारेण जपं करोति सः गतदुरितबन्धः दुरितानां बन्धः दुरितबन्धः गतः दुरितबन्धः यस्य सः सकलैः पापैः विमुक्तः सन् मोक्षलक्ष्मीं मोक्षरूपां लक्ष्मीं प्रयाति प्राप्नोति।

**जपति** – जप-व्यक्तायां वाचि, मानसे च, लट्।

**प्रयाति** – प्र + या - प्रापणे लट्।

अत्र मालिनीवृत्तम्। लक्षणं तावत् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना माहेश्वरेण विरचिते सिद्धान्तशिखामणौ भक्तस्थले पञ्चाक्षरीजपप्रसङ्गो नाम*
*।।अष्टमः परिच्छेदः।।*



# ।।नवमः परिच्छेदः।।

## (९) भक्तमार्गक्रियास्थलम्

**भूतिरुद्राक्ष-संयुक्तो लिङ्गधारी सदा शुचिः।**
**पञ्चाक्षरजपोद्योगी शिवभक्त इति स्मृतः।।१।।**

भूतिरुद्राक्षसंयुक्तः भूतिश्च रुद्राक्षश्च भूतिरुद्राक्षौ ताभ्यां संयुक्तः भूतिश्च भूतिरुद्राक्षधारकः लिङ्गधारी लिङ्गत्रयसम्पर्कवान् शिवभक्तः सदा शुचिः निर्मलान्तःकरणः सन् यदि पञ्चाक्षरजपोद्योगी पञ्चाक्षरस्य जपः एव उद्योगः यस्य सः तथाभूतः शिवभक्तः इति स्मृतः कथ्यते।

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।२।।**

**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना।**
**दुर्लभा पापिनां लोके सुलभा पुण्यकर्मणाम्।।३।।**

शम्भोः शिवस्य श्रवणं शिवकथानां संश्रवणम्, शम्भोः कीर्तनं स्तोत्राणां सङ्कीर्तनम्, शम्भोः स्मरणं ध्यानम्, शम्भोः पादसेवनं पादयोः मर्दनादिरूपं सेवनम्, शम्भोः अर्चनं पूजनम्, शम्भोः वन्दनं नमस्कारकरणम्, शम्भोः दास्यं भृत्यत्वभावनम्, शम्भोः सख्यं मित्रत्वभावः, शम्भोः आत्मनिवेदनम् आत्मनः एव निवेदनं समर्पणम् - एवं रीत्या नवविधा भक्तिः देवेन शम्भुना प्रोक्ता, इयं भक्तिः लोके पापिनां परभूयिष्ठानां दुर्लभा नैव सुलभा, अशक्या, किन्तु पुण्यकर्मणां पुण्यं कर्म येषां तेषां पुण्यकर्मप्रवृत्तानां सुलभा सुखेन लब्धुं शक्या।

**अधमे चोत्तमे वापि यत्र कुत्रचिदूर्जिता।**
**वर्तते शाङ्करी भक्तिः स भक्त इति गीयते।।४।।**

अधमे वा उत्तमे वा यत्र कुत्रचिदपि वा पुरुषेषु शाङ्करी भक्तिः शङ्करसम्बन्धिनी भक्तिः ऊर्जिता श्रेष्ठा सती वर्तते श्रेष्ठरूपेण वर्तते सः भक्तः

इति गीयते कथ्यते।

**वर्तते** - वृतु - वर्तने लट्,

**गीयते गै** - शब्दे, कर्मणि लट्।

**भक्तिः स्थिरीकृता यस्मिन् म्लेच्छे वा द्विजसत्तमे।**
**शम्भोः प्रियः स विप्रश्च न प्रियो भक्तिवर्जितः।।५।।**

म्लेच्छे अस्पृश्ये वा द्विजसत्तमे द्विजश्रेष्ठे वा यस्मिन् मनुष्ये वा भक्तिः स्थिरीकृता अस्थिरा स्थिरा सम्पद्यमाना जाता स्थिरीकृता दृढतरतया वर्तते सः शम्भोः प्रियः एव, किन्तु यः भक्तिवर्जितः भक्त्या वर्जितः भक्तिहीनः यदि विप्रःचेदपि च शम्भोः नैव प्रियः।

**सा भक्तिर्द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः।**
**बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता।।६।।**

सा च भक्तिः बाह्याभ्यन्तरभेदतः बाह्या च आभ्यन्तरा च बाह्याभ्यन्तरे इत्येतयोः भेदात् बाह्या भक्तिः आभ्यन्तरा भक्तिः इति द्विविधा ज्ञेया। बाह्या भक्तिः स्थूला इति कथ्यते, आन्तरा च सूक्ष्मा भक्तिः, इयमेव वीरमाहेश्वरादृता वीरमाहेश्वरैः आदृता अङ्गीकृता।

**सिंहासने शुद्धदेशे सुरम्ये रत्नचित्रिते।**
**शिवलिङ्गस्य पूजा या सा बाह्या भक्तिरुच्यते।।७।।**

सुरम्ये मनोहरे रत्नचित्रिते रत्नैः चित्रिते अलङ्कृते शुद्धदेशे शुद्धप्रदेशे वर्तमाने सिंहासने पीठे संस्थाप्य शिवलिङ्गस्य या पूजा सा बाह्या भक्तिः इत्युच्यते।

**उच्यते** — वच-परिभाषणे, कर्मणि लट्।

**लिङ्गे प्राणं समाधाय प्राणे लिङ्गं तु शाम्भवम्।**
**स्वस्थं मनस्तथा कृत्वा न किञ्चिच्चिन्तयेद्यदि।।८।।**

**साभ्यन्तरा भक्तिरिति प्रोच्यते शिवयोगिभिः।**
**सा यस्मिन् वर्तते तस्य जीवनं भ्रष्टबीजवत्।।९।।**

लिङ्गे शिवलिङ्गे प्राणं समाधाय संस्थापयित्वा तथैव प्राणे शाम्भवं लिङ्गं शिवलिङ्गं तु समाधाय संस्थाप्य तथा मनः चित्तं स्वस्थं कृत्वा सुसम्बद्धं सत् सम्पादयित्वा, यदि च तदा कञ्चिदपि न चिन्तयेत् चेत् सा भक्तिः शिवयोगिभिः शिवयोगसम्पन्नैः आभ्यन्तरा भक्तिरिति प्रोच्यते, सा तादृशी भक्तिः यस्मिन् शिवभक्ते वर्तते तस्य जीवनं भ्रष्टबीजवत् भ्रष्टं च तत् बीजं च तद्वत् अग्निदग्ध- बीजवत् पुनरावृत्तिरहितं भवति।

**बहुनात्र किमुक्तेन गुह्याद् गुह्यतरा परा।**
**शिवभक्तिर्न सन्देहस्तया युक्तो विमुच्यते।।१०।।**

अत्र विषये बहुना उक्तेन किम्? यतः इयं शिवभक्तिः गुह्यात् गुह्यतरा अत्यन्तं गोप्या परा च श्रेष्ठा च वर्तते अत्र विषये सन्देहः नास्ति, अपि च तया भक्त्या युक्तः विमुच्यते मुक्तः भवति इत्यत्रापि न सन्देहः।

**प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः।**
**यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरम्।।११।।**

सा भक्तिः तावत् शिवस्य प्रसादात् एव सम्भवति, तथैव शिवस्य प्रसादः भक्तिसम्भवः भक्त्या सम्भवः, यथैव अङ्कुरतः भ्रूणात् बीजं भवति बीजतः वा बीजात् च अङ्कुरं यथा भवति तथा प्रसादात् भक्तिः भक्तेः प्रसादः। एवं शिवभक्ति- शिवप्रसादयोः बीजाङ्कुरन्यायः सादृश्यम्। पूर्वार्धः उपमेयवाक्यम् उत्तरार्धः उपमानवाक्यम्, अतः अत्र वाक्यार्थोपमालङ्कारः।

**प्रसादपूर्विका येयं भक्तिर्मुक्तिविधायिनी।**
**नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना।।१२।।**

मुक्तिविधायिनी मुक्तेः विधायिनी मुक्तिप्रदायिनी या इयं भक्तिः सा प्रसादपूर्विका प्रसादः पूर्वः यस्याः सा शिवप्रसादलभ्या एव, सा च नरैः एकेन जन्मना प्राप्तुं नैव शक्यते।

**शक्यते** – शकॢ - शक्तौ, कर्मणि लट्।

**अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम्।**
**विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः।।१३।।**

अनेकानि च तानि जन्मानि अनेकजन्मानि तेषु शुद्धानां शिव पूजाध्यानादिना परिशुद्धानाम्, श्रौतस्मार्तानुवर्तिनां श्रौतं च स्मार्तं च श्रौतस्मार्ते ते अनुवर्तन्ते इति अनुवर्तिनः तेषाम् श्रुत्युक्तानां स्मृत्युक्तानां च नित्यनैमित्तिकादिकर्मणाम् अनुष्ठानं कुर्वताम्, विरक्तानां काम्यादिकर्मसु निःस्पृहाणाम् प्रबुद्धानां शिवज्ञानसम्पन्नानां च विषये महेश्वरः प्रसीदति प्रसन्नो भवति।

**प्रसीदति**– प्रषद्लृ-विशरणगत्यवसादनेषु, लट्।

**प्रसन्ने सति मुक्तोऽभून्मुक्तः शिवसमो भवेत्।**
**अल्पभक्त्यापि यो मर्त्यस्तस्य जन्मत्रयात्परम्।।१४।।**

शिवे प्रसन्ने सति शिवभक्तः मुक्तः अभूत् अभवदेव, अपि च तथा मुक्तः शिवसमः भवेत् शिवेन सदृशः भवेत्, परम् अल्पभक्त्या अपि यः मर्त्यः मुक्तः भवति तस्य जन्मत्रयात् परं शिवसाम्यं स्यात् अथवा मुक्तिः स्यात्।

**न योनियन्त्रपीडा वै भवेन्नैवात्र संशयः।**
**साङ्गा न्यूना च या सेवा सा भक्तिरिति कथ्यते।।१५।।**

शिवभक्त्या योनियन्त्रपीडा योनिरूपस्य यन्त्रस्य पीडा पुर्जन्मबाधाः न वै भवेत्, अत्र नैव संशयः, तस्मात्, साङ्गा श्रवणकीर्तनादिभिः अङ्गैः नवभिः युक्ता च या भक्तिः सा पूर्णाभक्तिः तैः न्यूना चेत् अल्पा भक्तिः, इत्येवं शिवस्य श्रवणादिद्वारा या सेवा प्रवर्तते सा एव भक्तिरिति कथ्यते।

**सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः।**
**शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता।**
**जपादि वाचिकी सेवा कर्मपूजा च कायिकी।।१६।।**

सा च भक्तिः पुनः मनोवाक्कायसाधनैः मनश्च वाक् च कायश्च मनोवाक्कायाः ते एव साधनानि तैः मनसा साधनेन वाचा साधनेन कायेन साधनेन चेति त्रेधा भिद्यते, शिवरूपादिचिन्ता शिवस्य रूपादीनां या चिन्ता अनुसन्धानं सा मानसी सेवा मानसी भक्तिरिति स्मृता, जपादि-शिवमन्त्रजपादिरूपा च या सेवा सा वाचिकी सेवा वाचिकी भक्तिः इति स्मृता, कर्मपूजा कर्मप्रधानपूजा च या सेवा सा कायिकी सेवा कायिकी भक्तिः इति स्मृता।

**बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव वा।**
**मनोवाक्कायभेदैश्च त्रिधा तद्भजनं विदुः।।१७।।**

पुनः तद्भजनं तस्य भजनं तस्य शिवस्य सेवा तावत् मनोवाक्कायभेदैः मनसः वाचः कायस्य च भेदैः बाह्यं भजनम् आभ्यन्तरं भजनं बाह्याभ्यन्तरं च भजनमिति त्रिधा विदुः जानन्ति।

**विदुः**– विद-ज्ञाने, लिट्, वेद विदतुः विदुः इत्यादि।

**मनो महेशध्यानाढ्यं नान्यध्यानरतं मनः।**
**शिवनामरता वाणी वाङ्मता चैव नेतरा।।१८।।**

महेशध्यानाढ्यं महेशस्य ध्याने आढ्यं केवलं परमेश्वरस्य ध्याने नितराम् आसक्तमेव वस्तुतः मनः इति कथ्यते, किन्तु अन्यध्यानरतं शिवात् अन्यस्य ध्याने रतं मनः तावत् न मनः इति कथ्यते, तथैव शिवनामरता शिवस्य नाम्नि रता आसक्ता शिवनामसङ्कीर्तनासक्ता वाणी वागेव वाक् इति मता तदितरा च नैव वाणी इति मता अभिप्रायः।

अत्र प्रथमः मनःशब्दःप्रथमश्च वाक्शब्दः उभावपि विशिष्टगुणयुक्तत्वात् शब्दशक्तिमूलध्वनिविशिष्टौ। इतरस्य मनसः इतरायाः वाचश्च वैयर्थ्यम् ध्वन्यते।

**लिङ्गैः शिवस्य चोद्दिष्टैस्त्रिपुण्ड्रादिभिरङ्कितः।**
**शिवोपचारनिरतः कायः कायो न चेतरः।।१९।।**

उद्दिष्टैः शास्त्रादिभिः प्रोक्तैः त्रिपुण्ड्रादिभिः त्रिपुण्ड्रधारणेन रुद्राक्षधारणेन इत्यादिभिः शिवस्य लिङ्गैः शिवस्य चिह्नभूतैः एतैः अङ्कितः चिह्नितः अपि च शिवोपचारनिरतः शिवस्य उपचारेषु पूजादिषु निरतः यः कायः स एव कायः, इतरस्तु कायः नैव कायः।

अत्रापि प्रथमकायशब्दः शब्दशक्तिमूलध्वनिविशिष्टः।

इतरस्य च कायस्य वैयर्थ्यध्वनिः।

**अन्यात्मविदितं बाह्यं शम्भोरभ्यर्चनादिकम्।**
**तदेव तु स्वसंवेद्यमाभ्यन्तरमुदाहृतम्।**
**मनो महेशप्रवणं बाह्याभ्यन्तरमुच्यते।।२०।।**

अन्यात्मविदितम् अन्ये च ते आत्मानश्च अन्यात्मानः तैः विदितं ज्ञानं यत् शम्भोः अभ्यर्चनादिकं तत् बाह्यं भजनम्, तदेव तु पूजादिकं केवलं स्ववेद्यं चेत् स्वेनैव वेद्यं चेत् तत् आभ्यन्तरं भजनमिति उदाहृतम्, यदि च पूजादिषु मनः महेशप्रवणं महेशे प्रवणं संसक्तं चेत् भवति तत् बाह्याभ्यन्तरम् भजनम् इत्युच्यते बाह्यस्य आभ्यन्तरस्य च भजनस्य युक्तत्वात्।

**पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः।**
**तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम्।।२१।।**

पुनश्च तदेव भजनं अनुपूर्वकं क्रमशः यथाक्रमं तपः, कर्म, जपः, ध्यानम्, ज्ञानं चेति सद्भिः शिवयोगसम्पन्नैः पञ्चधा कथ्यते। एते एव पञ्च यज्ञाः इत्येवं प्रसिध्यन्ति।

**शिवार्थे देहसंशोषस्तपः कृच्छ्रादि नो मतम्।**
**शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।।२२।।**

शिवार्थे शिवस्य कृते देह-संशोषः देहस्य संशोषः पत्रपुष्पादि-सामग्रीसम्पादने दण्डनं तु तपः इत्युच्यते किन्तु कृच्छ्रादि कृच्छ्रचान्द्रायणादि तपः न तपः इति मतम्, एवमेव शिवार्चा शिवपूजादि एव कर्म इति विज्ञेयम् न पुनः बाह्यं बहुवित्तव्ययसाध्यं यागादि कर्म इत्युच्यते। अत्रापि तपः कर्म इति पदद्वयं शब्दशक्तिमूलध्वनिविशिष्टम्।

**जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा।**
**रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम्।।२३।।**

पञ्चाक्षराभ्यासः पञ्चाक्षरस्य मन्त्रस्य अभ्यासः अनुसन्धानम् वा अथवा प्रणवाभ्यासः एव वा ओंकारस्य अनुसन्धानं वा जपः, अपि च रुद्राध्या-यादिकाभ्यासः रुद्राध्यायादिकस्य श्रीरुद्राध्यायस्य आदिपदेन अथर्वशिखा-श्वेताश्वतर-कैवल्यादिश्रुतीनाम् अभ्यासः एव जपः, किन्तु वेदाध्ययनादिकं पशुकर्मप्रतिपादकानां वेदादीनां अभ्यासः नैव जपः। जपः इति शब्दः शब्दशक्तिमूलः।

**ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम्।**
**शिवागमार्थ-विज्ञानं ज्ञानं नान्यार्थवेदनम्।।**
**इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः।।२४।।**

शिवस्य रूपादिचिन्ता चन्द्रशेखरत्वगङ्गाधरत्वादिरूपाणां चिन्ता एव ध्यानं, न तु आत्मादिचिन्तनम् अहमात्मा इत्यादि शरीरेन्द्रियाद्युपाधि-संवलितचिन्तनं ध्यानम्, अपि च शिवागमार्थविज्ञानमेव शिवागमानां गूढार्थचिन्तनमेव ज्ञानम् न तु सांख्यादिशास्त्ररूपस्य अन्यार्थस्य वेदनम्। इत्येवं शिवयज्ञः अयं पञ्चप्रकारः इति प्रकीर्तितः।

अत्र कृच्छ्रादि, यागादि, वेदाध्ययनादि, आत्मादिचिन्तनम्, अन्यार्थवेदनम् - इत्येतानि निषिध्य, यथाक्रमं देहसंशोषः, पञ्चाक्षराभ्यासः, शिवरूपचिन्ता, शिवार्चा, शिवागमार्थचिन्तनम् इत्येतत्पञ्चकस्य समारोपात् पर्यस्तापह्नवालङ्कारः। 'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः' इति लक्षणम् जपादीनां शब्दशक्तिमूलध्वनित्वं च।

**अनेन पञ्चयज्ञेन यः पूजयति शङ्करम्।**
**भक्त्या परमया युक्तः स वै भक्त इतीरितः।।२५।।**

अनेन पञ्चयज्ञेन यः परमया भक्त्या युक्तः सन् शंकरं पूजयति सः वै भक्तः इतीरितः उक्तः।

**पूजनाच्छिवभक्तस्य पुण्या गतिरवाप्यते।**
**अवमानान्महाघोरो नरको नात्र संशयः।।२६।।**

शिवभक्तस्य पूजनात् दानपूजादिभिः पुण्या गतिः अवाप्यते पुण्यलोकप्राप्तिः भवति, किन्तु अवमानात् अवमानकरणेन महाघोरः नरकः प्राप्यते अत्र विषये न संशयः।

**अवाप्यते**– अव+आप्लृ - व्याप्तौ, कर्मणि लट्।

**शिवभक्तो महातेजाः शिवभक्तिपराङ्मुखान्।**
**न स्पृशेन्नैव वीक्षेत न तैः सह वसेत् क्वचित्।।२७।।**

यतः शिवभक्तः महातेजाः वर्तते अत एव सः शिवभक्तिपराङ्मुखान् शिवस्य भक्तिः तया पराङ्मुखान् शिवभक्तिहीनान् न स्पृशेत् न स्पर्शनं कुर्यात्, न एव वीक्षेत नैव तेषां दर्शनं कुर्यात् अपि च तैः सह क्वचित् कुत्रापि न वसेत् न वासं कुर्यात्।

**यदा दीक्षाप्रवेशः स्याल्लिङ्गधारणपूर्वकः।**
**तदाप्रभृति भक्तोऽसौ पूजयेत् स्वागमस्थितान्।।२८।।**

यदा लिङ्गधारणपूर्वकः लिङ्गधारणं पूर्वं यस्य सः लिङ्गधारणक्रियापूर्वकः दीक्षाप्रवेशः दीक्षायाः प्रवेशः दीक्षाकार्यं स्यात् तदाप्रभृति तदारभ्य असौ भक्तः तथा दीक्षितः असौ शिवभक्तः स्वागमस्थितान् सुष्ठुतया वीरशैवागममार्गानुसारिणः माहेश्वरान् पूजयेत् पूजां कुर्यात्।

**पूजयेत्** - पूज - पूजायाम् - विधिलिङ्।

**स्वमार्गाचारनिरताः सजातीया द्विजास्तु ये।**
**तेषां गृहेषु भुञ्जीत नेतरेषां कदाचन।।२९।।**

ये तु स्वमार्गाचारनिरताः स्वस्य मार्गः स्वमार्गः तस्य आचारः स्वमार्गाचारः तस्मिन् निरताः शिवदीक्षाग्निदग्धमलत्रयपूर्वकप्राप्तमन्त्रपिण्डत्वात् वीरमतोचिताचारनिष्ठाः, सजातीयाः स्वस्वजातिसम्भवाः द्विजाः वीरशैवभक्तमाहेश्वराः तु तेषामेव गृहेषु तादृशवीरशैवानामेव गृहेषु भुञ्जीत सहपङ्क्तौ भोजनं कुर्यात्, किन्तु इतरेषाम् अदीक्षितानां गृहेषु कदाचन नैव भुञ्जीत। भुञ्जीत -भुज-पालनाभ्यवहारयोः, विधिलिङ्। भुञ्जीत भुञ्जीयाताम् भुञ्जीरन् इत्यादि।

**स्वमार्गाचारविमुखैर्भविभिः प्राकृतात्मभिः।**
**प्रेषितं सकलं द्रव्यमात्मलीनमपि त्यजेत्।।३०।।**

स्वमार्गाचारविमुखैः वीरशैवमार्गाचारविहीनैः प्राकृतात्मभिः प्राकृतः आत्मा येषां ते प्राकृतात्मानः तैः भवभीतिसम्पन्नैः भविभिः अदीक्षितैः प्रेषितं सकलमपि द्रव्यम् आत्मलीनम् अपि स्वस्वाधीनं सदपि त्यजेत् परित्यजेत्।

**त्यजेत्** - त्यज-हानौ, विधिलिङ्।

**नार्चयेदन्यदेवांस्तु न स्मरेन्न च कीर्तयेत्।**
**न तन्नैवेद्यमश्नीयाच्छिवभक्तो दृढव्रतः।।३१।।**

दृढव्रतः दृढं व्रतं यस्य सः दृढतरशिवव्रते निष्ठः शिवभक्तः अन्यदेवान् अन्ये च ते देवाश्च तान् शिवेतरान् देवान् न अर्चयेत् नैव पूजयेत्, न स्मरेत् नैव स्मरेत् नैव कीर्तयेदपि, न केवलमेतत् परं तन्नैवेद्यम् अपि तस्य नैवेद्यमपि

शिवभिन्नदेवार्पितं नैवेद्यम् अपि नैव अश्नीयात्।

**स्मरेत्** - स्मृ-आध्याने विधिलिङ्।

**अर्चयेत्** - अर्च-पूजायाम् विधिलिङ्।

**कीर्तयेत्** - कृत-संशब्दने, विधिलिङ्।

**अश्नीयात्** - अश-भोजने; आशीर्लिङ्

**अश्नीयात्** अश्नीयास्ताम् अश्नीयासुः इत्यादि।

**यद्गृहेष्वन्यदेवोऽस्ति तद्गृहाणि परित्यजेत्।**
**नान्यदेवार्चकान् मर्त्यान् पूजाकाले निरीक्षयेत्।।३२।।**

यद्गृहेषु येषां गृहेषु अन्यदेवः शिवादन्यः देवः अस्ति चेत् तद्गृहाणि परित्यजेत् तत्र वासादिकं नैव कुर्यात्, अन्यदेवार्चकान् अन्ये च ते देवाश्च अन्यदेवाः तेषाम् अर्चकान् शिवभिन्नदेवार्चकान् मर्त्यान् मनुष्यान् पूजाकाले शिवपूजासन्दर्भे न निरीक्षयेत् दर्शनं नैव कुर्यात्।

**परित्यजेत्** - परि+त्यज - हानौ, विधिलिङ्।

**निरीक्षयेत्** - निर् + ईक्ष - दर्शने, विधिलिङ्।

**सदा शिवैकनिष्ठानां वीरशैवाध्ववर्तिनाम्।**
**न हि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते।।३३।।**

सदा निरन्तरं शिवैकनिष्ठानां शिवे एका निष्ठा येषां तेषां शिवैकनिष्ठचित्तानाम् वीरशैवाध्ववर्तिनाम् वीरशैवस्य अध्वा तस्मिन् वर्तिनाम् वीरशैवमार्गानुवर्तिनाम् स्थावरलिङ्गानां च निर्माल्यादि न उपयुज्यते उपभोक्तुं नैव युज्यते। **उपयुज्यते** – उप+युजिर् - योगे, कर्मणि लट्।

अथापि—

**यत्र स्थावरलिङ्गानामपायः परिवर्तते।**
**अथवा शिवभक्तानां शिवलाञ्छनधारिणाम्।।३४।।**

**तत्र प्राणान् विहायापि परिहारं समाचरेत्।**
**शिवार्थं मुक्तजीवश्चेच्छिवसायुज्यमाप्नुयात्।।३५।।**

यत्र यत्र स्थले स्थावरलिङ्गानां देवदेवर्षिमानवादिभिः प्रतिष्ठापितानाम् स्थावरलिङ्गानाम् अपायः प्रत्यूहः विघ्नः परिवर्तते चेत् सम्भवति चेत्, अथवा शिवलाञ्छनधारिणाम् शिवस्य लाञ्छनानि तानि धारयन्तीति तेषां शिवलाञ्छनानां भस्मरुद्राक्षादीनां धारिणाम् शिवभक्तानां अपायः प्रत्यूहः अथवा विघ्नः परिवर्तते चेत् सम्भवति चेत् तत्र स्थले प्राणान् विहाय परित्यज्य अपि परिहारं विघ्ननिवारणादिकं समाचरेत्, यतः यः शिवार्थं शिवकृते मुक्तजीवः मुक्तः जीवः येन सः त्यक्तजीवनःत्यक्तप्राणः चेत् सः शिवसायुज्यम् आप्नुयात्।

**परिवर्तते** – परि + वृतु - वर्तते, लट्।

**समाचरेत्** – सम् + आ +चर -गतौ, विधिलिङ्।

**आप्नुयात्** – आप्लृ - व्याप्तौ, आशीर्लिङ्।

**शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत्।**
**स्थानं वा तत्परित्यज्य गच्छेद् यद्यक्षमो भवेत्।।३६।।**

शिवनिन्दाकरं शिवस्य निन्दां करोति इति तं शिवनिन्दां कुर्वन्तं दृष्ट्वा तं घातयेत् नाशयेत् अथवा शपेत् शापं दद्यात् वा अथवा यदि तथा कर्तुं अक्षमः भवेत् चेत् असमर्थः स्याच्चेत् तत् स्थानं परित्यज्य अन्यत्र गच्छेत्।

घातयेत् – हन-हिंसागत्योः, णिच्, विधिलिङ्, शपेत् - शप-आक्रोशे, विधिलिङ्, गच्छेत् - गम् - गतौ, विधिलिङ्। भूसत्तायाम् विधिलिङ्- भवेत् - विधिलिङ्।

**यत्र चाचारनिन्दास्ति कदाचित्तत्र न व्रजेत्।**
**यद्गृहे शिवनिन्दास्ति तद्गृहाणि परित्यजेत्।।३७।।**

यत्र स्थले आचारनिन्दा आचारस्य निन्दा शिवाचारस्य निन्दा अस्ति तत्रस्थले कदाचित् न व्रजेत् नैव गच्छेत्, तथैव यद्गृहे यस्मिन् गृहे शिवनिन्दा अस्ति तद्गृहाणि तानि गृहाणि परित्यजेत्।

**व्रजेत्** - व्रज-गतौ, विधिलिङ्।

**परित्यजेत्** - परि+त्यज -हानौ, विधिलिङ्।

**यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति।**
**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि।।३८।।**

यः सर्वभूताधिपतिं सर्वेच ते भूताश्च सर्वभूताः तेषाम् अधिपतिं सकल-प्राणिनामधीश्वरं विश्वेशानं विश्वस्य ईशानम् अधिपतिं विश्वाधिपतिं विनिन्दति निन्दां करोति, तस्य निष्कृतिः पापपरिहारः वर्षशतैः अपि शतवर्षानन्तरमपि कर्तुं न शक्या नैव साध्या। विनिन्दति – वि+णिदि -कुत्सायाम्, लट्।

**शिवपूजापरो भूत्वा पर्वकर्म विसर्जयेत्।**
**अथवा पूर्वकर्म स्यात् सा पूजा निष्फला भवेत्।।३९।।**

शिवपूजापरः शिवपूजायां तत्परः भूत्वा पूर्वकर्म सन्ध्यावन्दनादि प्राकृतं कर्म विसर्जयेत् परित्यजेत्, अथवा यदि पूर्वकर्म आचरितं स्यात् चेत् सा पूजा निष्फला फलहीना भवेत्।

**विसर्जयेत्** – वि+ सृज - विसर्गे, विधिलिङ्।

**उत्तमां गतिमाश्रित्य नीचां वृत्तिं समाश्रितः।**
**आरूढ – पतितो ज्ञेयः सर्वकर्मबहिष्कृतः।।४०।।**

लिङ्गपूजकः यदि उत्तमां गतिम् श्रेष्ठं प्रवृत्तिम् आश्रित्य, नीचां वृतिं निकृष्टां वृत्तिं समाश्रितः स्यात् चेत् सः सर्वकर्मबहिष्कृतः सर्वाणि च तानि कर्माणि सर्वकर्माणि तैः बहिष्कृतः तिरस्कृतः सन् आरूढपतितः, प्रथमम् आरूढः उपरि गतः उत्तमां स्थितिं प्राप्तः अनन्तरं पतितः अधस्तात् पतितः यः सः आरूढपतितः इति ज्ञेयः।

**पञ्चाक्षरोपदेशी च नरस्तुतिकरो यदि।**
**सोऽलिङ्गी सदुचारी कुकविः स तु विश्रुतः।।४१।।**

पञ्चाक्षरोपदेशी पञ्चाक्षरस्य उपदेशः अस्ति अस्मिन् इति पञ्चाक्षरोपदेशी पञ्चाक्षरस्य उपदेशं प्राप्तवान् यः सः यदि नरस्तुतिकरः नरस्य स्तुतिं करोति इति नरस्य स्तोत्रं करोति चेत् सः अलिङ्गी लिङ्गवानपि लिङ्गरहितः, स दुराचारी दुष्टाचारसम्पन्नः, कुकविः कुत्सितः कविः इति सः तु विश्रुतः प्रख्यातः।

**चर्मपात्रे जलं तैलं न ग्राह्यं भक्ति-तत्परैः।**
**गृह्यते यदि भक्तेन रौरवं नरकं व्रजेत्।।४२।।**

भक्तितत्परैः शिवभक्तिसम्पन्नैः चर्मपात्रे चर्मणा निर्मिते पात्रे जलं वा तैलं वा न ग्राह्यम्, यदि च तथा गृह्यते चेत् भक्तेन सः भक्तः रौरवं कठोरं नरकं व्रजेत् गच्छेत्।

**गृह्यते–** ग्रह-उपादाने, कर्मणि लट्।

**न तस्य सूतकं किञ्चित्प्राणलिङ्गाङ्गसङ्गिनः।**
**जन्मनोत्थं मृतोत्थं च विद्यते परमार्थतः।।४३।।**

प्राणलिङ्गाङ्गसङ्गिनः प्राणलिङ्गस्य अङ्गे सङ्गः अस्ति अस्य इति प्राणलिङ्गाङ्गसङ्गी तस्य प्राणलिङ्गाङ्गसङ्गयुक्तस्य वीरशैवस्य परमार्थतः वास्तवतया जन्मना उत्थं वा मृतेन उत्थं वा शिशुजननात् प्राप्तं वा जनस्य मरणेन प्राप्तं वा किञ्चित् सूतकम् आशौचं तस्य तु न विद्यते।

**लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम्।**
**तया प्रसूतिकायाश्च सूतकं नैव विद्यते।।४४।।**

लिङ्गार्चनरतायाः लिङ्गार्चने रतायाः इष्टलिङ्गपूजासक्तायाः नार्याः स्त्रियः ऋतौ सत्यामपि मासिकरजोदर्शनकालेऽपि सूतकं नैव विद्यते, तथैव प्रसूतिकायाः च प्रसूते इति प्रसूतिका तस्याः अपि सूतकं नैव विद्यते। व्यावहारिकसूतके सत्यपि इष्टलिङ्गपूजायाः सूतकं नैव वर्तते।

**गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्र विद्यते।**
**शिवपादाम्बु-संस्पर्शात् सर्वपापं प्रणश्यति।।४५।।**

यस्मिन् गृहे स्त्री प्रसूता भवति अत्र गृहे सूतकं न विद्यते, यतः शिवपादाम्बुसंस्पर्शात् शिवपादाम्बुनः संस्पर्शात् सेवनात् सर्वपापं प्रणश्यति।

**प्रणश्यति** – प्र + णश - अदर्शने, लट्।

**शिवस्थानानि तीर्थानि विशिष्टानि शिवार्चकः।**
**शिवयात्रोत्सवं नित्यं सेवेत परया मुदा।।४६।।**

शिवार्चकः इष्टलिङ्गाराधकः शिवभक्तः विशिष्टानि तीर्थानि शिवस्थानानि

श्रीशैलकेदारकाश्यादि-दिव्य-लिङ्गस्थानानि, तीर्थानि शिवतीर्थक्षेत्राणि, शिवयात्रोत्सवं शिवस्य यात्रा एव उत्सवः शिवयात्रोत्सवः तं शिवक्षेत्रयात्रां च नित्यं परया मुदा अत्यन्तं सन्तोषेणैव सेवेत कुर्यात्।

**सेवेत** – षेवृ-सेवने, विधिलिङ्।

**शिवक्षेत्रोत्सवमहायात्रादर्शनकाङ्क्षिणाम् ।**
**मार्गेऽन्नदानपानं च कुर्यान्माहेश्वरो जनः।।४७।।**

शिवक्षेत्रोत्सवमहायात्रादर्शनकाङ्क्षिणां शिवस्य क्षेत्रेषु उत्सवः शिवक्षेत्रोत्सवः तस्य महायात्रा शिवक्षेत्रोत्सवमहायात्रा तस्याः दर्शनं ये कांक्षन्ति तेषां कृते शिवक्षेत्रेषु उत्सवनिमित्तं यात्रार्थं गच्छतां जनानां कृते मार्गे माहेश्वरः जनः वीरशैवः अन्नदानपानं च अन्नस्य दानं अन्नदानं अन्नदानं च पानं च एतयोः समाहारः अन्नदानपानम् अन्नदानपानं अन्नदानं पानदानं कुर्यात्।

**कुर्यात्** –डु-कृञ् - करणे, विधिलिङ्। कुर्यात् कुर्याताम् –

**नान्नतोयसमं दानं न चाहिंसापरं तपः।**
**तस्मान्महेश्वरो नित्यमन्नतोयप्रदो भवेत्।।४८।।**

अन्ततोयसमं अन्नं च तोयं च अन्नतोये तयोः समं दानं नास्ति, अहिंसापरं च अहिंसायाः परं अहिंसापेक्षया श्रेष्ठं तपः न अस्ति, तस्मात् महेश्वरः नित्यम् अन्नतोयप्रदः अन्नतोये प्रददाति इति प्रदः अन्नदान-जलदानपरः भवेत् स्यात्।

**स्वमार्गाचारवर्तिभ्यः स्वजातिभ्यः सदा व्रती।**
**दद्यात् तेभ्यः समादद्यात् कन्यां कुलसमुद्भवाम्।।४९।।**

सदाव्रती नियमशीलः वीरशैवः स्वमार्गाचारवर्तिभ्यः स्वस्य मार्गस्य आचारः स्वमार्गाचारः तं वर्तितुं शीलमस्ति येषां तेभ्यः शिवागमाद्युक्तमार्गाचारनिरतेभ्यः स्वजातिभ्यः स्वजातीयेभ्यः कुलसमुद्भवां कुले समुद्भवां स्वकीयकुले समुत्पन्नां कन्यां दद्यात् तेभ्यः सकाशात् कन्यां समादद्यात्।

**दद्यात्, समादद्यात्** — सम् + आ+डु-दाञ् - दाने, विधिलिङ्।

**एवमाचारसंयुक्तो वीरशैवो महाव्रती।**
**पूजयेत्परया भक्त्या गुरुं लिङ्गं च सन्ततम्।।५०**

एवम् उक्तप्रकारेण आचारसंयुक्तः आचारेण युक्तः सन् महाव्रती शिवव्रतनिष्ठः वीरशैवः परया भक्त्या सन्ततं गुरुं लिङ्गं च पूजयेत्।

*।।इति भक्तमार्गक्रियास्थलम्।।*

## (१०) उभयस्थलम्

**गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः।**
**तयोर्नास्ति भिदा किञ्चिदेकत्वात् तत्त्वरूपतः।।५१।।**

न केवलं लिङ्गस्य परं गुरोः अभ्यर्चनेन अपि शिवः साक्षात् प्रत्यक्षतया अभ्यर्चितः भवति, यतः, तत्त्वरूपतः परमार्थत्वात् एकत्वात् अभिन्नत्वात् तयोः गुरुलिङ्गयोः किञ्चिदपि अणुमात्रमपि भिदा भेदः नास्ति।

पूर्वार्धमुत्तरार्धः समर्थयतीति अत्र काव्यलिङ्गालङ्कारः।

**यथा देवे जगन्नाथे सर्वानुग्रहकारके।**
**तथा गुरुवरे कुर्यादुपचारान् दिने दिने।।५२।।**

सर्वानुग्रहकारके सर्वेषाम् अनुग्रहं करोति इति तस्मिन् सर्वानुग्रहकरणसमर्थे जगन्नाथे विश्वनाथदेवे विषये यथा उपचारान् कुर्यात् तथैव गुरुवरे विषये अपि दिने दिने प्रतिदिनम् उपचारान् कुर्यात्।

**अप्रत्यक्षो महादेवः सर्वेषामात्ममायया।**
**प्रत्यक्षो गुरुरूपेण वर्तते भक्तिसिद्धये।।५३।।**

महादेवः आत्ममायया आत्मनः मायया प्रभावेण सर्वेषां प्रजानाम् अप्रत्यक्षः सन् तेषां जनानां भक्तिसिद्धये भक्तेः सिद्धये भक्तिसिद्ध्यर्थं गुरुरूपेण प्रत्यक्षः वर्तते।

**शिवज्ञानं महाघोरसंसारार्णवतारकम्।**
**दीयते येन स गुरुः कस्य वन्द्यो न जायते।।५४।।**

येन शिवरूपिणा गुरुणा महाघोरसंसारार्णवतारकम् महाघोरश्चासौ संसारश्च महाघोरसंसारः सः एव अर्णवः महाघोरसंसारार्णवः तस्य तारकम् महाभयङ्करसंसारसागरात् उत्तारकम् शिवज्ञानं शिवाद्वैतज्ञानं दीयते उपदिश्यते

तादृशः सः गुरुः कस्य वा जनस्य वन्द्यः पूज्यः न जायते? सर्वस्यापि पूज्यः वर्तते।

**यत्कटाक्षकलामात्रात् परमानन्दलक्षणम्।**
**लभ्यते शिवरूपत्वं स गुरुः केन नार्चितः?।।५५।।**

यत्कटाक्षकलामात्रात् यस्य कटाक्षः यत्कटाक्षः तस्य कलामात्रात् यस्य गुरोः कटाक्षलेशमात्रादेव परमानन्दलक्षणं परमानन्दस्वरूपकं शिवरूपत्वं शिष्येण लभ्यते तादृशः सः गुरुः केन वा न अर्चितः? सर्वैरपि अर्चितः। **लभ्यते**- डुलभष्-प्राप्तौ, कर्मणि लट्।

**हितमेव चरेन्नित्यं शरीरेण धनेन च।**
**आचार्यस्योपशान्तस्य शिवज्ञानमहानिधेः।।५६।।**

उपशान्तस्य रागद्वेषादिदुर्गुणरहितत्वात् प्रशान्तचित्तस्य शिवज्ञानमहोदधेः शिवज्ञानमेव महोदधिः तस्य शिवज्ञानस्य महासमुद्रइव वर्तमानस्य आचार्यस्य नित्यं शरीरेण शरीरदण्डनद्वारा सेवां कृत्वा धनेन च धनदानेन च हितमेव प्रियमेव आचरेत्।

**चरेत्** - चर - गतौ, विधिलिङ्।

**गुरोराज्ञां न लङ्घेत सिद्धिकामो महामतिः।**
**तदाज्ञालङ्घनेनापि शिवाज्ञाच्छेदको भवेत्।।५७।।**

सिद्धिकामी सिद्धिं कामयते इति सिद्धिकामी मोक्षार्थी महामतिः महाज्ञानी शिवभक्तः गुरोः आज्ञां न लङ्घेत नैव उल्लङ्घयेत् यतः तदाज्ञालङ्घनेन तस्य आज्ञायाः लङ्घनेन शिवाज्ञाच्छेदकः अपि शिवस्यापि आज्ञायाः छेदकः उल्लङ्घकः एव भवेत्।।

*।।इत्युभयस्थलम्।।*

## (११) त्रिविधसम्पत्तिस्थलम्।।

**यथा गुरौ यथा लिङ्गे भक्तिमान् परिवर्तते।**
**जङ्गमे च तथा नित्यं भक्तिं कुर्याद्विचक्षणः।।५८।।**

विचक्षणः शिवभक्तिप्रवीणः वीरशैवः यथा गुरौ विषये भक्तिमान् परिवर्तते आचरति, अपि च यथा लिङ्गे च विषये भक्तिमान् परिवर्तते तथैव नित्यं जङ्गमे च विषये भक्तिं कुर्यात्।

**एक एव शिवः साक्षात् सर्वानुग्रहकारकः।**
**गुरुजङ्गमलिङ्गात्मा वर्तते भुक्तिमुक्तिदः।।५९।।**

सर्वानुग्रहकारकः सर्वेषाम् अनुग्रहं करोति इति सर्वानुग्रहकारकः सर्वानुग्रहकर्ता साक्षात् शिवः एक एव भुक्तिमुक्तिदः सन् भुक्तिश्च मुक्तिश्च भुक्तिमुक्ती ते ददाति इति भुक्तिमुक्तिदः भोगमोक्षादिप्रदायकः सन् गुरुजङ्गमलिङ्गात्मा गुरुश्च जङ्गमश्च लिङ्गं च गुरुजङ्गमलिङ्गानि तान्येव आत्मा यस्य सः गुरुजङ्गमलिङ्गात्मा त्रिमूर्तिस्वरूपकः सन् वर्तते।

**लिङ्गं च द्विविधं प्रोक्तं जङ्गमाजङ्गमात्मना।**
**अजङ्गमे यथा भक्तिर्जङ्गमे च तथा स्मृता।।६०।।**

लिङ्गं तावत् जङ्गमाजङ्गमात्मना जङ्गमश्च अजङ्गमश्च जङ्गमाजङ्गमौ तौ एव आत्मा यस्य सः तेन जङ्गमात्मना अजङ्गमात्मना चेति द्विविधं प्रोक्तम्, अजङ्गमे लिङ्गे यथा भक्तिः स्मृता वर्तते तथैव जङ्गमे लिङ्गे अपि च भक्तिः स्मृता वर्तते।

**अजङ्गमं तु यल्लिङ्गं मृच्छिलादिविनिर्मितम्।**
**तद्वरं जङ्गमं लिङ्गं शिवयोगीति विश्रुतम्।।६१।।**

अजङ्गमं तु यत् लिङ्गं तत् मृच्छिलादिविनिर्मितम् मृत् च शिला च आदिना निर्मितम् मृल्लिङ्गं शिलालिङ्गम् इत्यादि रूपम्, यत् च जङ्गमं लिङ्गं शिवयोगी इति च यत् विश्रुतं प्रख्यातम् तत् वरं श्रेष्ठम्।

अनेन श्लोकेन पूर्वश्लोकः समर्थितः इति काव्यलिङ्गालङ्कारः।

**अचरे मन्त्रसंस्कारा लिङ्गे वसति शङ्करः।**
**सदाकालं वसत्येव चरलिङ्गे महेश्वरः।।६२।।**

अचरे लिङ्गे अजङ्गमे लिङ्गे मन्त्रसंस्कारात् शङ्करः वसति, किन्तु चरलिङ्गे महेश्वरः सदाकालं वसत्येव। अतः चरलिङ्गं विशिष्यते।

**शिवयोगिनि यद्दत्तं तदक्षयफलं भवेत्।**
**तस्मात्सर्वप्रयत्नेन तस्मै देयं महात्मने।।६३।।**

तस्मात् शिवयोगिनि विषये यत् वस्तु दत्तं भवति तत् अक्षयफलं भवेत् अक्षयफलदायकं भवेत्। तस्मात् सर्वप्रयत्नेन तस्मै शिवयोगिने महात्मने देयं न तु न देयम्।

**यत्फलं लभते जन्तुः पूजया शिवयोगिनः।**
**तदक्षयमिति प्रोक्तं सकलागमपारगैः।।६४।।**

जन्तुः मनुष्यः शिवयोगिनः पूजया जङ्गमस्य पूजया यत् फलं लभते यादृशं फलं लभते तत् अक्षयं नाशरहितम् इति सकलागमपारगैः सकलागमपरिज्ञानवद्भिः प्रोक्तम्। **लभते** - डु-लभष् - प्राप्तौ, लट्।

**नावमन्येत कुत्रापि शिवयोगिनमागतम्।**
**अवमानाद्भवेत्तस्य दुर्गतिश्च न संशयः।।६५।।**

स्वयमेव आगतं शिवयोगिनं कुत्रापि न अवमन्येत अवमानं न कुर्यात्, यतो हि अवमानात् तस्य अवमानकर्तुः दुर्गतिश्च दुर्गतिरेव भवेत् अत्र नैव संशयः। **अवमन्येत** – अव+मनु - अवबोधने, कर्मणि, विधिलिङ्।

**शिवयोगी शिवः साक्षादिति कैङ्कर्यभक्तितः।**
**पूजयेदादरेणैव यथा लिङ्गं यथागुरुम्।।६६।।**

शिवयोगी तावत् साक्षात् शिवः प्रत्यक्षरूपी परशिवः इति भावनया कैङ्कर्यभक्तितः किङ्करस्य भावः कैङ्कर्यम् तद्रूपा भक्तिः कैङ्कर्यभक्ति तस्याः कैङ्कर्यभक्तितः (तसिल्) आदरेण एव प्रीतिपूर्वकमेव यथालिङ्गं यथा च गुरुं तथैव पूजयेत्।

*।।इति त्रिविधसम्पत्तिस्थलम्।।*

## (१२) चतुर्विधसारायस्थलम्।।

*अथवा*

## ।।प्रसादस्वीकारस्थलम्।।

**पादोदकं यथा भक्त्या स्वीकरोति महेशितुः।**
**तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि।।६७।।**

महेशितुः महान् चासौ ईशिता च महेशिता तस्य महेशितुः परमेश्वरस्य अर्थात् लिङ्गस्य यथा भक्त्या पादोदकं स्वीकरोति तथैव नित्यं शिवात्मनोः शिवस्वरूपयोः गुरुजङ्गमयोः अपि पादोदकं भक्त्या स्वीकरोति स्वीकर्तव्यमिति भावः।

**सर्वमङ्गलमाङ्गल्यं सर्वपावनपावनम्।**
**सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुधारणम्।।६८।।**

शम्भोः शिवलिङ्गरूपिणः शिवस्य पादाम्बुधारणं पादस्य अम्बुनः धारणं पादोदकस्वीकारः तावत् पुंसां सर्वमङ्गलमाङ्गल्यं सर्वाणि च तानि मङ्गलानि सर्वमङ्गलानि तेषामपि माङ्गल्यं सर्वेषु मङ्गलवस्तुषु श्रेष्ठतमं सत् सर्वपावनपावनं सर्वं च तत् पावनं च सर्वपावनं तस्मादपि पावनं सर्वपावनकरं च सत् सर्वसिद्धिकरं सर्वाश्च ताः सिद्धयश्च सर्वसिद्धयः ताः करोति इति सर्वसिद्धिप्रदायकं वर्तते।

**शिरसा धारयेद्यस्तु पत्रं पुष्पं शिवार्पितम्।**
**प्रतिक्षणं भवेत्तस्य पौण्डरीकक्रियाफलम्।।६९।।**

यस्तु शिवभक्तः शिवार्पितं शिवाय अर्पितं समर्पितं वस्तु पत्रं वा पुष्पं वा भवतु तत् शिरसा धारयेत् चेत् तस्य तेन धारणेन प्रतिक्षणं पौण्डरीकक्रियाफलं पौण्डरीकक्रियायाः पौण्डरीकनामकयज्ञस्य फलं भवेत्।

**भुञ्जीयाद् रुद्रभुक्तान्नं रुद्रपीतं जलं पिबेत्।**
**रुद्राघ्रातं सदा जिघ्रेदिति जाबालिकी श्रुतिः।।७०।।**

सदा रुद्रभुक्तान्नं रुद्रेण भुक्तं च तत् अन्नं च रुद्रभुक्तान्नं रुद्रार्पितमन्नं भुञ्जीयात् स्वीकुर्यात्, रुद्रपीतं रुद्रेण पीतं जलं पिबेत्, रुद्राघ्रातं रुद्रेण आघ्रातं आघ्राणितं जिघ्रेत् आघ्राणयेत् इति जाबालिकी श्रुतिः कथयति।

'रुद्रेणात्तमश्नन्ति रुद्रेण पीतं पिबन्ति रुद्रेणाघ्रातं जिघ्रन्ति' – इति जाबालोपनिषत्।

**भुञ्जीयात्** - भुज - पालनाभ्यवहारयोः, विधिलिङ्।
**पिबेत्** - पा - पाने, विधिलिङ्।
**जिघ्रेत्** - घ्रा - गन्धोपादाने, विधिलिङ्।

**अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम्।**
**अन्नाद्यं सर्वभोज्यं च स्वीकुर्याद् भक्तिमान्नरः।।७१।।**

पत्रं पुष्पं फलं जलम् अन्नाद्यं च सर्वभोज्यं वस्तु भक्तिमान् नरः शिवभक्तियुक्तः मानवः निजे लिङ्गे स्वेष्टलिङ्गाय समर्पयित्वा एव स्वीकुर्यात्।

**गुरुत्वात् सर्वभूतानां शम्भोरमिततेजसः।**
**तस्मै निवेदितं सर्वं स्वीकार्यं तत्परायणैः।।७२।।**

सर्वभूतानां सर्वे च ते भूताश्च तेषां सर्वप्राणिनामपि अमिततेजसः अमितं तेजः यस्य सः तस्य अपरिमिततेजःसम्पन्नस्य शम्भोः गुरुत्वात् संरक्षकत्वात् कारणात् तत्परायणैः तस्मिन् परायणैः शिवभक्तैः तस्मै परमेश्वराय निवेदितमेव सर्वं स्वीकार्यं स्वीकर्तव्यम्।

**ये लिङ्गधारिणो लोके ये शिवैकपरायणाः।**
**तेषां तु शिवनिर्माल्यमुचितं नान्यजन्तुषु।।७३।।**

लोके अस्मिन् जगति लिङ्गधारिणः लिङ्गवन्तः ये वर्तन्ते अपि च शिवैकपरायणाः शिवे एव एकस्मिन् परायणाः सन्ति शिवैकनिष्ठाः सन्ति तेषां तु तेषामेव केवलं शिवनिर्माल्यम् शिवस्य निर्माल्यम् उचितं स्वीकारयोग्यम् किन्तु अन्यजन्तुषु अलिङ्गधारिषु नैव उचितम्।

**अन्नजाते तु भक्तेन भुज्यमाने शिवार्पिते।**
**सिक्थे सिक्थेऽश्वमेधस्य यत्फलं तदवाप्यते।।७४।।**

भक्तेन शिवभक्तेन शिवार्पिते शिवाय समर्पिते अन्नजाते अन्नसर्वस्वे भुज्यमाने सति तु स्वीकृते सति सिक्थे सिक्थे प्रतिसिक्थं प्रत्यन्नकणे अश्वमेधस्य अश्वमेघयागस्य यत्फलं भवति तत्फलम् अवाप्यते प्राप्यते।

**अवाप्यते** – अव+आप्लृ - व्याप्तौ, कर्मणि लट्।

**निर्माल्यं निर्मलं शुद्धं शिवेन स्वीकृतं यतः।**
**निर्मलैस्तत्परैर्धार्यं नान्यैः प्राकृतजन्तुभिः।।७५।।**

निर्माल्यं शिवार्पितं वस्तु यतः यस्मात् कारणात् शिवेन स्वीकृतं अत एव निर्मलं मलरहितं शुद्धं च वर्तते, एतत्तु तत्परैः शिवपूजादिनिष्ठैः अतएव

निर्मलैः परिशुद्धचित्तैः धार्यं धर्तुं योग्यम् किन्तु अन्यैः प्राकृतजन्तुभिः भवित्वसम्पन्नैः न धार्यम्।

**शिव-भक्तिविहीनानां जन्तूनां पापकर्मणाम्।**
**विशुद्धे शिवनिर्माल्ये नाधिकारोऽस्ति कुत्रचित्।।७६।।**

यतः शिवभक्तिविहीनानां शिवभक्त्या विहीनानां शिवभक्तिरहितानां जन्तूनां मनुष्याणाम् अतएव पापकर्मणाम् पापं च तत् कर्म च येषां तेषां हिंसादिपापकर्म समाचरतां विशुद्धे अत्यन्तं परिशुद्धे शिवनिर्माल्ये शिवप्रसादे विषये कुत्रचित् अधिकारः नास्ति, अतः तैः न धार्यम्।

अनेन श्लोकेन पूर्वश्लोकस्य समर्थनात् काव्यलिङ्गालङ्कारः।

**शिवलिङ्गप्रसादस्य स्वीकाराद्यत्फलं भवेत्।**
**तथा प्रसादस्वीकाराद् गुरुजङ्गमयोरपि।।७७।।**

शिवलिङ्गप्रसादस्य शिवलिङ्गस्य प्रसादः तस्य शिवलिङ्गप्रसादस्य स्वीकारात् यत् फलं भवेत् तत् फलं तथा तथैव गुरुजङ्गमयोः अपि गुरुश्च जङ्गमश्च गुरुजङ्गमौ तयोः अपि प्रसादस्वीकारात् प्रसादस्य स्वीकारात् भवेदेव।

**तस्माद् गुरुं महादेवं शिवयोगिनमेव च।**
**पूजयेत् तत्प्रसादान्नं भुञ्जीयात् प्रतिवासरम्।।७८।।**

तस्मात् कारणात् गुरुं, महादेवं शिवयोगिनम् जङ्गमम् एव च पूजयेत् तत्प्रसादान्नं तेषां प्रसादरूपमन्नं प्रतिवासरं प्रतिदिनं भुञ्जीयात्।

*।।इति चतुर्विधसारायस्थलम्।।*

अथ सोपाधि-निरुपाधि-सहजदानस्थलानि

(१३) सोपाधिदानस्थलम्,

(१४) निरुपाधिदानस्थलम्,

(१५) सहजदानस्थलम्।

## (१३) सोपाधिदानस्थलम्

**शिवलिङ्गे शिवाचार्ये शिवयोगिनि भक्तिमान्।**
**दानं कुर्याद्यथाशक्ति तत्प्रसादयुतः सदा।।७९।।**

शिवलिङ्गे इष्टलिङ्गे विषये शिवाचार्ये गुरौ विषये तथैव शिवयोगिनि जङ्गमे विषये च भक्तिमान् शिवभक्तः तत्प्रसादयुतः सन् तेषां प्रसादेन युतः युक्तः सन् सदा यथाशक्ति दानं कुर्यात्।

'देहदानात् सत्यसिद्धिः अर्थदानाच्च निर्वृतिः।
प्राणदानात् ज्ञानसिद्धिः एवं सर्वं स्थिरं भवेत्।।' इति

योगजागमोक्तिः। अथ च गुरोः देहदानम् जङ्गमस्य अर्थदानं लिङ्गस्य प्राणदानं कर्तव्यम् प्राणदानं नाम तदेकचित्ततया पूजादि।

**दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम्।**
**सहजं चेति सर्वेषां सर्व - तन्त्रविशारदैः।।८०।।**

सर्वेषां शिवभक्तानां कृते सर्वतन्त्रविशारदैः सर्वागमप्रवीणैः दानं च दानं तावत् सोपाधिनिरूपाधिकं सोपाधि च निरूपाधि च एतयोः समाहारः सोपाधिनिरुपाधिकं सोपाधिदानं निरुपाधिदानं सहजं दानमिति च त्रिविधं प्रोक्तम्।

**फलाभिसन्धि-संयुक्तं दानं यद्विहितं भवेत्।**
**तत् सोपाधिकमाख्यातं मुमुक्षुभिरनाहतम्।।८१।।**

फलाभिसन्धिसंयुक्तं फलस्य अभिसन्धिः तेन संयुक्तं फलाभिलाषसंयुक्तं सत् यत् दानं विहितं तत् सोपाधिकं दानम् इति आख्यातम्, किन्तु एतत् दानं मुमुक्षुभिः मोक्षापेक्षिभिः अनादृतं न आदृतम् न अङ्गीकृतम्।

## (१४) निरुपाधिदानस्थलम्

**फलाभिसन्धिनिर्मुक्तमीश्वरार्पितकाङ्क्षितम् ।**
**निरुपाधिकमाख्यातं दानं दानविशारदैः।।८२।।**

फलाभिसन्धिनिर्मुक्तं फलस्य अभिसन्धिः तेन निर्मुक्तं फलापेक्षारहितं सत् ईश्वरार्पितकाङ्क्षितम् ईश्वराय अर्पितम् इति काङ्क्षितम् अपेक्षितं च सत् यत्

दानमस्ति तत् निरुपाधिकं दानमिति दानविशारदैः आख्यातमुक्तम्। सोपाधिकं फलापेक्षया कृतम् निरुपाधिकं फलापेक्षाराहित्येन कृतम्।

## (१५) सहजदानस्थलम्

**आदातृदातृदेयानां शिवभावं विचिन्तयन्।**
**आत्मनोऽकर्तृभावं च यद्दत्तं सहजं भवेत्।।८३।।**

आदातृदातृदेयानाम् आदाता च दाता च देयं च आदातृदातृदेयानि तेषाम् आदाता दानस्वीकर्ता, दाता दानकर्ता देयं दातुं योग्यं वस्तु इत्येतेषु विषये शिवभावं विचिन्तयन् आत्मनः दानकर्तुः आत्मनश्च अकर्तृभावं न कर्ता अकर्ता तस्य भावं च विचिन्तयन् सन् यत् तेन दत्तं भवति तत् दानं सहजं दानं भवेत्।

**सहजं दानमुत्कृष्टं सर्वदानोत्तमोत्तमम्।**
**शिवज्ञानप्रदं पुंसां जन्मरोगनिवर्तकम्।।८४।।**

सहजं दानमेतत् उत्कृष्टं श्रेष्ठतमम्, सर्वदानोत्तमोत्तमम् सर्वेषु दानेषु उत्तमं यत् सर्वदानोत्तमं तस्मादपेक्षया उत्तमं सर्वश्रेष्ठम्, पुंसां शिवज्ञानप्रदं शिवज्ञानस्य प्रदायकं जन्मरोगनिवर्तकम् जन्मरोगस्य जननमरण-रूपरोगस्य निवर्तकं निवारणे समर्थम्।

**शिवाय शिवभक्ताय दीयते यदि किञ्चन।**
**भक्त्या तदपि विख्यातं सहजं दानमुत्तमम्।।८५।।**

शिवाय शिवभक्ताय च भक्त्या यदि यदपि किञ्चन दीयते तदपि उत्तमं सहजं दानम् इति विख्यातम्।

**दानात् स्वर्णसहस्रस्य सत्पात्रे यत्फलं भवेत्।**
**एकपुष्पप्रदानेन शिवे तत्फलमिष्यते।।८६।।**

सत्पात्रे व्यक्तिविशेषे स्वर्णसहस्रस्य दानात् यत्फलं भवेत् तत्फलं शिवे एक पुष्पप्रदानेन एकस्यैव पुष्पस्य प्रदानेन इष्यते प्राप्यते।

**इष्यते**– इष-गतौ, इच्छायां वा, कर्मणि लट्।

**शिव एव परं पात्रं सर्वविद्यानिधिर्गुरुः।**
**तस्मै दत्तं तु यत्किञ्चित् तदनन्तफलं भवेत्।।८७।।**

सर्वविद्यानिधिः सर्वाश्च ताः विद्याश्च सर्वविद्याः तासां निधिः अतएव गुरुः प्रधानोपदेशकः शिवः एव परमुत्कृष्टं पात्रम्, तस्मै शिवाय यत्किञ्चिदपि दत्तं तु स्यात् चेत् तत् अनन्तफलं अनन्तफलदायकं भवेत्।

**शिवयोगी शिवः साक्षाच्छिवज्ञान-महोदधिः।**
**यत्किञ्चिद्दीयते तस्मै तद्दानं पारमार्थिकम्।।८८।।**

शिवयोगी अपि साक्षात् प्रत्यक्षरूपी शिवः शिवज्ञानमहोदधिः शिवज्ञानस्य महोदधिः समुद्रः इव वर्तमानः अस्ति तस्मै शिवयोगिने यत्किञ्चिदपि दीयते चेत् तत् दानं पारमार्थिकम् परमश्चासौ अर्थश्च परमार्थः तस्य भावः परमार्थः, सः अस्ति अस्मिन् इति पारमार्थिकम् अपरिमित-फलदायकम्।

**शिवयोगी महत्पात्रं सर्वेषां दानकर्मणि।**
**तस्मान्नास्ति परं किञ्चित् पात्रं शास्त्रविचारतः।।८९।।**

दानकर्मणि दानस्य कर्मणि विषये सर्वेषामपि शिवयोगी जङ्गमः एवं महत्पात्रं महत् च तत् पात्रं च महत्पात्रं श्रेष्ठतमं पात्रं स्थानम्, शास्त्रविचारतः शास्त्राणां विचारात् आगमादीनां परिशीलनात् अवगम्यते यत् तस्मात् शिवयोगिनः अपेक्षात् किञ्चिदपि परम् उत्कृष्टपात्रं नास्ति।

**भिक्षामात्रप्रदानेन शान्ताय शिवयोगिने।**
**यत्फलं लभ्यते नैतद् यज्ञकोटिशतैरपि।।९०।।**

शान्ताय जितेन्द्रियाय शिवयोगिने जङ्गमाय भिक्षामात्रप्रदानेन भिक्षामात्रस्यापि प्रदानेन केवलं भिक्षादानेन यत्फलं लभ्यते एतत्फलं यज्ञकोटिशतैः अपि शतकोटिसंख्याकैः यज्ञकार्यैः अपि नैव लभ्यते।

**शिवयोगिनि सन्तृप्ते तृप्तो भवति शङ्करः।**
**तत्तृप्त्या तन्मयं विश्वं तृप्तिमेति चराचरम्।।९१।।**

शिवयोगिनि जङ्गमे सन्तृप्ते सति शङ्करः तृप्तो भवति, तत् तृप्त्या तस्य तृप्त्या तन्मयं तदेव तन्मयं शिवमयं चराचरं विश्वमपि तृप्तिम् एति प्राप्नोति।

**एति**-इण् गतौ, लट्, एति इतः यन्ति इत्यादि।

**तस्मात्सर्वप्रयत्नेन येन केनापि कर्मणा।**
**तृप्तिं कुर्यात् सदाकालमन्नाद्यैः शिवयोगिनः।।९२।।**

तस्मात् कारणात् सर्वप्रयत्नेन सर्वश्चासौ प्रयत्नश्च तेन सर्वात्मना प्रयत्नेन येन केनापि कर्मणा येन केन अपि धार्मिककर्मणा सदाकालं शिवयोगिनः जङ्गमस्य अन्नाद्यैः अन्नपानादिदानद्वारा तृप्तिं कुर्यात्।

**निरुपाधिकचिद्रूपपरानन्दात्म - वस्तुनि।**
**समाप्तं सकलं यस्य स दानी शङ्करः स्वयम्।।९३।।**

निरुपाधिकचिद्रूपपरान्दात्मवस्तुनि निरुपाधिकश्च असौ चिद्रूपपरानन्दः एव आत्मा यस्य वस्तुनः तस्मिन् वस्तुनि - परिपूर्णसच्चिदानन्दरूप-गुरुलिङ्गजङ्गमात्मक-वस्तुविशिष्टे परमेश्वरे विषये यस्य यस्य शिवभक्तस्य सकलमपि शरीरधनप्राणरूपादिकं सकलमपि वस्तुजातं समाप्तं भवेत् चेत् समर्पितं भवेत् चेत् तादृशः सः दानी स्वयं शङ्करः एव सहजदानी इति यावत्।

**उक्ताखिलाचार-परायणोऽसौ**
**सदा वितन्वन् सहजं तु दानम्।**
**ब्रह्मादिसम्पत्सु विरक्तचित्तो**
**भक्तो हि माहेश्वरतामुपैति।।९४।।**

उक्ताखिलाचारपरायणः उक्ताः अखिलाश्च ते आचाराश्च उक्ताखिलाचाराः तेषु परायणः एतावदुक्तसकल-सदाचार-सम्पत्परिपूर्णः असौ भक्तः भक्तस्थली सदा सहजं दानं तु वितन्वन् प्रयच्छन् सन् ब्रह्मादिसम्पत्सु ब्रह्म विष्ण्वादीनां सम्बन्धिषु स्थानेषु विषये विरक्तचित्तः विरक्तं चित्तं यस्य सः अभिलाषरहितः सन् असौ भक्तः एव माहेश्वरताम् उपैति हि माहेश्वरत्वं प्राप्नोति अयमेव भक्तस्थली माहेश्वरस्थलापन्नो भवति।

**उपैति** – उप+इण् - गतौ, लट्।

प्रथम तृतीयचतुर्थपादेषु इन्द्रवज्रावृत्तत्वम् द्वितीयपादे उपेन्द्रवज्रावृत्तत्वम्। अतः उपजातिः छन्दः।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ भक्तस्थलस्य नवविधस्थलप्रसङ्गो नाम*
*।।नवमः परिच्छेदः।।*

# ।।दशमः परिच्छेदः।।

## ।।अथ माहेश्वरस्थलम्।।

### ।।अगस्त्य उवाच।।

**भक्तस्थलं समाख्यातं भवता गणनायक।**
**केन वा धर्मभेदेन भक्तो माहेश्वरो भवेत्?।।१।।**

हे गणनायक! एतावत्पर्यन्तं भवता भक्तस्थलं समाख्यातम्, अथ भक्तः केन वा धर्मभेदेन धर्मस्य भेदेन माहेश्वरः भवेत्? इति कथयतु।

### ।।रेणुक उवाच।।

**केवले सहजे दाने निष्णातः शिवतत्परः।**
**ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः।।२।।**

केवले सहजे दाने निष्णातः परिणतः कुशलः सन् शिवतत्परः शिवे विषये निष्ठः सन् अतएव ब्रह्मादिस्थानविमुखः ब्रह्मादीनां स्थानेषु विषये विमुखः अनासक्तः सन् भक्तः एव माहेश्वरः इति स्मृतः।

**भक्तेर्यदा समुत्कर्षो भवेद् वैराग्यगौरवात्।**
**तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान्।।३।।**

वैराग्यगौरवात् वैराग्यस्य गौरवात् महत्त्वादेव यदा भक्तेः शिवभक्तेः समुत्कर्षः आधिक्यं भवेत् तदा तस्मिन्नेव काले भक्तः भक्तस्थली स्थिर-विवेकवान् स्थिरः विवेकः अस्मिन् अस्ति इति स्थिरीभूतनित्यानित्यवस्तुविवेक-सम्पन्नः सन् माहेश्वरः इति प्रोक्तः।

**माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा।**
**माहेश्वरप्रशंसादौ लिङ्गनिष्ठा ततः परम्।।४।।**

**पूर्वाश्रयनिरासश्च तथाद्वैत – निराकृतिः।**
**आह्वानवर्जनं पश्चादष्टमूर्तिनिराकृतिः।।५।।**

**सर्वगत्वनिरासश्च शिवत्वं विश्वभक्तयोः।**
**एवं नवविधं प्रोक्तं माहेश्वरमहास्थलम्।।६।।**

पूरा पूर्वकाले शम्भुना परमेश्वरेण यथोक्तं तदनुसारेणैव माहेश्वरस्थलं वक्ष्ये– अत्र स्थले-माहेश्वरप्रशंसास्थलम्, लिङ्गनिष्ठास्थलम्, पूर्वाश्रयनिरासस्थलम्, अद्वैतनिरसनस्थलम्, आह्वान-निरसनस्थलम्, अष्टमूर्तिनिरसनस्थलम्, सर्वगत्वनिरसनस्थलम्, शिवजगन्मयस्थलम्, भक्तदेहिकलिङ्गस्थलम् - इति माहेश्वरस्थलं नवविधं प्रोक्तम्।

**आदितः क्रमशो वक्ष्ये स्थलभेदस्य लक्षणम्।**
**समाहितेन मनसा श्रूयतां भवता मुने!।।७।।**

हे मुने! स्थलभेदस्य माहेश्वरस्थलसम्बन्धिनवविधस्य लक्षणं क्रमशः आदितः प्रारम्भतः क्रमेण वक्ष्ये कथयिष्ये भवता समाहितेन मनसा श्रूयताम्।

**वक्ष्ये**-वच-परिभाषणे-लृट् कर्मणि -

वक्ष्यते वक्ष्येते वक्ष्यन्ते - इत्यादि।

## (१६) माहेश्वरप्रशंसास्थलम्

**विश्वस्मादधिको रुद्रो विश्वानुग्रहकारकः।**
**इति यस्य स्थिरा बुद्धिः स वै माहेश्वरः स्मृतः।।८।।**

विश्वानुग्रहकारकः विश्वस्य अनुग्रहं करोति इति विश्वानुग्रहकारकः समस्त-देवदानवमानवादिकस्य अनुग्रहप्रदाता रुद्रः तु विश्वस्मात् अपि अधिकः अस्ति इति यस्य भक्तस्थलसम्पन्नस्य स्थिरा बुद्धिः भवति सः वै माहेश्वरः इति स्मृतः।

**ब्रह्माद्यैर्मलिनप्रायैर्निर्मले परमेश्वरे।**
**साम्योक्तिं यो न सहते स वै माहेश्वराभिधः।।९।।**

मलिनप्रायैः जननमरणपरिपीडितत्वात् मलिन - प्रायैः ब्रह्माद्यैः ब्रह्मविष्ण्वादिभिः सह निर्मले जननादिरहिते परमेश्वरे विषये साम्योक्तिं साम्यस्य उक्तिं यः न सहते सः वै माहेश्वराभिधः माहेश्वरः इति अभिधा यस्य सः माहेश्वरः इति व्यपदिश्यते।

**सहते** - षह - मर्षणे, लट्।

**ईश्वरः सर्वभूतानां ब्रह्मादीनां महानिति।**
**बुद्धियोगात्तदासक्तो भक्तो माहेश्वरः स्मृतः।।१०।।**

सर्वभूतानां पशुपक्षिसदृशानां सर्वेषां प्राणिनां ब्रह्मादीनां च ब्रह्मविष्ण्वादीनां च ईश्वरः परमेश्वरः महान् सर्वश्रेष्ठः इति बुद्धियोगात् बुद्धेः योगात् तदासक्तः तस्मिन् ईश्वरे आसक्तः भक्तः एव माहेश्वरः इति स्मृतः।

**ब्रह्मादिदेवताजालं मोहितं मायया सदा।**
**अशक्तं मुक्तिदाने तु क्षयातिशय-संयुतम्।।११।।**

**अनादिमुक्तो भगवानेक एव महेश्वरः।**
**मुक्तिदश्चेति यो वेद स वै माहेश्वरः स्मृतः।।१२।।**

क्षयातिशयसंयुतं क्षयस्य अतिशयः क्षयातिशयः तेन संयुतं जननमरणादिरूपनाशयुक्तं ब्रह्मादिदेवताजालं ब्रह्मादीनां देवतानां जालं समुदायः मायया शिवस्यैव मायया मोहितं सत् मोहयुक्तं सत् मुक्तिदाने तु विषये मुक्तेः दाने विषये अशक्तं वर्तते, परम् अनादिमुक्तः नित्यमुक्तः भगवान् महेश्वरः एकः एव मुक्तिदः मुक्तिं ददाति इति यश्च वेद जानाति सः वै माहेश्वरः इति स्मृतः।

**वेद**-विद - ज्ञाने, लिट्।

**क्षयातिशयसंयुक्ता ब्रह्मविष्ण्वादि-सम्पदः।**
**तृणवन्मन्यते युक्त्या वीरमाहेश्वरः सदा।।१३।।**

सदा ब्रह्मविष्ण्वादिसम्पदः ब्रह्मविष्ण्वादीनां सम्पदः क्षयातिशयसंयुक्ताः क्षयस्य अतिशयेन संयुक्ताः युक्त्या युक्तिपूर्वकं तृणवत् तृणसमानाः इति यः मन्यते जानाति सः वीरमाहेश्वरः।

**शब्दस्पर्शादिसम्पन्ने सुखलेशे तु निःस्पृहः।**
**शिवानन्दे समुत्कण्ठो वीरमाहेश्वरो भवेत्।।१४।।**

शब्दस्पर्शादिसम्पन्ने शब्दश्च स्पर्शश्च आदिः येषां ते शब्दस्पर्शादयः तैः सम्पन्ने शब्दस्पर्शादिविषयैः भरिते सुखलेशे सुखस्य लेशे अल्पाल्पसुखे तु निःस्पृहः परं शिवानन्दे समुत्कण्ठः यः सः वीरमाहेश्वरः भवेत्।

**परस्त्रीसङ्गनिर्मुक्तः परद्रव्यपराङ्मुखः।**
**शिवार्थकार्यसम्पन्नः शिवागमपरायणः।।१५।।**

परस्त्रीसङ्गनिर्मुक्तः परा चासौ स्त्री च परस्त्री तस्याः सङ्गात् निर्मुक्तः परस्त्रीसहवासरहितः परद्रव्यपराङ्मुखः परस्य द्रव्यं परद्रव्यं तेन पराङ्मुखः परद्रव्यविषये अनासक्तः शिवार्थकार्यसम्पन्नः शिवस्य अर्थं यत् कार्यं तेन सम्पन्नः शिवार्थमेव कार्यतत्परः शिवागमपरायणः शिवागमेषु परायणः वीरमाहेश्वरः।

**शिवस्तुतिरसास्वादमोदमानमनाः शुचिः।**
**शिवोत्कर्षप्रमाणानां सम्पादनसमुद्यतः।।१६।।**

शिवस्तुतिरसास्वादमोदमानमनाः शिवस्य स्तुतिः शिवस्तुतिः तस्याः रसः शिवस्तुतिरसः तस्य आस्वादेन मोदमानं मनः यस्य सः शिवस्तुतिरसास्वादमोदमानमनाः सदा शिवस्तुतितत्परचित्तः शुचिः मलत्रयराहित्यात् परिशुद्धः, शिवोत्कर्षप्रमाणानां शिवस्य उत्कर्षः शिवोत्कर्षः तस्य प्रमाणानां निगमागमस्मृतिपुराणादीनां प्रमाणभूतानां शिवोत्कर्षप्रतिपादकानां सम्पादनसमुद्यतः सम्पादने उद्युक्तवान् प्रयत्नशीलः वीरमाहेश्वरः।

**निर्ममो निरहंकारो निरस्तक्लेशपञ्जरः।**
**अस्पृष्टमदसम्बन्धो मात्सर्यावेशवर्जितः।।१७।।**

निर्ममः ममकाररहितः, निरहंकारः अहङ्काररहितः, निरस्तक्लेशपञ्जरःनिरस्तं क्लेशानां पञ्जरं येन सः दूरीकृतपञ्चक्लेशः, अस्पृष्टमदसम्बन्धः न स्पृष्टः मदस्य सम्बन्धः येन सः मदादिरहितः, मात्सर्यावेशवर्जितः मात्सर्यस्य आवेशेन वर्जितः मात्सर्यादि-रहितः वीरमाहेश्वरः।

**निरस्तमदनोन्मेषो निर्धूतक्रोधविप्लवः।**
**सदा सन्तुष्टहृदयः सर्वप्राणिहिते रतः।।१८।।**

निरस्तमदनोन्मेषः निरस्तः मदनस्य उन्मेषः येन सः मदनावेशरहितः निर्धूतक्रोधविप्लवः निर्धूतः क्रोधस्य विप्लवः येन सः क्रोधादि-रहितः, सदा सन्तुष्टहृदयः सन्तुष्टं हृदयं यस्य सः शिवानन्देन सन्तोषितचित्कः सर्वप्राणिहिते सर्वेषां प्राणिनां हिते रतः सर्वप्राणिहितचिन्तकः वीरमाहेश्वरः।

**निवारणसमुद्योगी शिवकार्यविरोधिनाम्।**
**सहचारी सदाकालं शिवोत्कर्षाभिधायिभिः।।१९।।**

शिवकार्यविरोधिनां शिवस्य कार्यं विरोधयन्ति इति शिवकार्यविरोधिनः, तेषाम् शिवस्य कार्येषु विरोधं कुर्वताम्, निवारणसमुद्योगी निवारणे समुद्योगं कुर्वन् यः सः, शिवोत्कर्षाभिधायिभिः शिवस्य उत्कर्षं अभिधास्यन्ति इति शिवोत्कर्षाभिधायिनः तैः सह सदाकालं सहचारी सहचरति इति सहचारी सहकारकरणशीलः वीरमाहेश्वरः।

शिवापकर्षसम्प्राप्तौ शिवस्य अपकर्षः शिवापकर्षः तस्य सम्प्राप्तौ सत्यां प्राणत्यागेअपि प्राणस्य त्यागकार्ये अपि अशङ्कितः न शङ्कितः अशङ्कितः निर्भीकः, शिवैकनिष्ठः शिवे एव एकनिष्ठः शिवैकनिष्ठः अमितशिवनिष्ठावान् सर्वात्मा सर्वात्मस्वरूपवान् एव वीरमाहेश्वरः भवेत्।

*।।इति माहेश्वरप्रशंसास्थलम्।।*

## (१७) लिङ्गनिष्ठास्थलम्

**अस्य माहेश्वरस्योक्तं लिङ्गनिष्ठामहास्थलम्।**
**प्राणात्ययेऽपि सम्पन्ने यदत्याज्यं विधीयते।।२१।।**

यत् इदं लिङ्गनिष्ठामहास्थलं तु अस्य माहेश्वरस्य प्राणात्यये प्राणस्य अत्ययः प्राणात्ययः तस्मिन् सम्पन्ने सत्यपि प्राप्ते सत्यपि अत्याज्यं यत् विधीयते नैव त्याज्यमिति यत् विधीयते कथ्यते तत् लिङ्गनिष्ठामहास्थलम् उक्तमस्ति।

**अपगच्छतु सर्वस्वं शिरश्छेदनमस्तु वा।**
**माहेश्वरो न मुच्येत लिङ्गपूजामहाव्रतम्।।२२।।**

सर्वस्वम् धनकनकसम्पदादिकम् अपगच्छतु नाशमाप्नोतु वा अथवा शिरश्छेदनम् अस्तु वा तथापि माहेश्वरः लिङ्गपूजामहाव्रतं लिङ्गस्य पूजारूपं महाव्रतं न मुच्येत नैव परित्यजेत्।

**मुच्येत** - मुचॢ-मोक्षणे विधिलिङ्।

**लिङ्गपूजामकृत्वा तु ये न भुञ्जन्ति मानवाः।**
**तेषां महात्मनां हस्ते मोक्षलक्ष्मी पस्थिता।।२३।।**

लिङ्गपूजाम् अकृत्वा तु न कृत्वा तु ये मानवाः न भुञ्जन्ति नैव भोजनं कुर्वन्ति तेषां महात्मनां हस्ते एव मोक्षलक्ष्मीः उपस्थिता भवति।

**भुञ्जन्ति–** भुज-पालनाभ्यवहारयोः, लट्।

भुनक्ति भुङ्क्तः भुञ्जन्ति इत्यादि।

**किमन्यैर्धर्मकलिलैः कीकषार्थप्रदायिभिः।**
**साक्षान्मोक्षप्रदः शम्भोर्धर्मो लिङ्गार्चनात्मकः।।२५।।**

कीकषार्थप्रदायिभिः कीकषश्चासौ अर्थश्च कीकषार्थः तं प्रददति इति कीकषार्थ-प्रदायिनः तैः कुत्सित-फलप्रदायकैः अन्यैः धर्मकलिलैः धर्माश्च कलिलाश्च तैः क्षुद्रधर्मैः किम् किं प्रयोजनम्? यतः लिङ्गार्चनात्मकः लिङ्गार्चनम् एव आत्मा साक्षात् मोक्षप्रदः मोक्षं प्रददाति इति मोक्षप्रदः वर्तते।

धर्मान्तराणां कैमर्थ्यवर्णनात् पञ्चमः प्रतीपालङ्कारः। 'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते' इति लक्षणम्। अपि च उत्तरार्धः पूर्वार्धं समर्थयतीति काव्यलिङ्गालंकारः।

**अर्पितेनान्नपानेन लिङ्गे नियमपूजिते।**
**ये देहवृत्तिं कुर्वन्ति महामाहेश्वरा हि ते।।२५।।**

नियमपूजिते नियमेन पूजिते लिङ्गे अर्पितेन समर्पितेन अन्नपानेन अन्नं च पानं च एतयोः समाहारः तेन अन्नेन पानेन च ये ये माहेश्वराः देहवृत्तिं देहस्य वृत्तिं देहव्यापारं जीवनं कुर्वन्ति निर्वहन्ति ते हि ते एव महामाहेश्वराः वर्तन्ते।

**चिन्मये शाङ्करे लिङ्गे स्थिरं येषां मनः सदा।**
**विमुक्तेतरसवार्थं ते शिवा नात्र संशयः।।२६।।**

चिन्मये सच्चिदानन्दात्मके शाङ्करे लिङ्गे शिवलिङ्गे येषां माहेश्वराणां मनः सदा स्थिरं सत् अत एव विमुक्तेतरसर्वार्थं यथा स्यात् तथा सर्वश्चासौ अर्थश्च सर्वार्थः इतरश्चासौ सर्वार्थश्च इतरसर्वार्थः विमुक्तः इतरसर्वार्थः यस्मिन् कर्मणि तद्यथा स्यात् तथा वर्तते स्थिरतया तिष्ठति ते शिवाः एव इति अत्र विषये न संशयः।

**लिङ्गे यस्य मनोलीनं लिङ्गस्तुतिपरा च वाक्।**
**लिङ्गार्चनपरौ हस्तौ स रुद्रो नात्र संशयः।।२७।।**

यस्य महेश्वरस्य मनः लिङ्गे लीनं वर्तते यस्य च वाक् लिङ्गस्तुतिपरा लिङ्गस्य स्तुतौ परा आसक्ता वर्तते यस्य च हस्तौ लिङ्गार्चनपरौ लिङ्गस्य अर्चने परौ तत्परौ भवतः सः रुद्रः एव अत्र विषये न संशयः।

**लिङ्गनिष्ठस्य किं तस्य कर्मणा स्वर्गहेतुना?।**
**नित्यानन्दशिवप्राप्तिर्यस्य शास्त्रेषु निश्चिता।।२८।।**

यस्य लिङ्गनिष्ठस्य इष्टलिङ्गे निष्ठस्य नित्यानन्दशिवप्राप्तिः नित्यानन्दश्च असौ शिवश्च नित्यानन्दशिवः तस्य प्राप्तिः नित्यानन्दात्मकशिवाद्वैतप्राप्तिः शास्त्रेषु शिवागमादिषु निश्चिता निश्चितरूपेण प्रोक्ता तस्य तादृशलिङ्गनिष्ठस्य स्वर्गहेतुना स्वर्गः हेतुः यस्य तेन स्वर्गप्रदायकेन कर्मणा अग्निहोत्रादिना कर्मणा किं किं प्रयोजनम्? न किमपि प्रयोजनम्।

**लिङ्गनिष्ठापरं शान्तं भूतिरुद्राक्षसंयुतम्।**
**प्रशंसन्ति सदाकालं ब्रह्माद्या देवता मुदा।।२९।।**

लिङ्गनिष्ठापरं लिङ्गस्य निष्ठायाः परं लिङ्गपूजादिषु आसक्तं शान्तं शान्तस्वभाववन्तं भूतिरुद्राक्षसंयुतं भूतिश्च रुद्राक्षश्च भूतिरुद्राक्षौ ताभ्यां संयुतं विभूतिरुद्राक्षधारिणं माहेश्वरं ब्रह्माद्याः देवताः मुदा सन्तोषेणैव सदाकालं प्रशंसन्ति प्रशंसां कुर्वन्ति।

**प्रशंसन्ति**— प्र+शंसु - स्तुतौ, लट्।

*।।इति लिङ्गनिष्ठास्थलम्।।*

## (१८) पूर्वाश्रयनिरसनस्थलम्

**लिङ्गैकनिष्ठहृदयः सदा माहेश्वरो जनः।**
**पूर्वाश्रयगतान् धर्मांस्त्यजेत् स्वाचाररोधकान्।।३०।।**

सदा लिङ्गैकनिष्ठहृदयः लिङ्गे एकनिष्ठं हृदयं यस्य सः लिङ्गैकनिष्ठहृदयः स्वेष्टलिङ्गपूजादिषु निरतचित्तः सन् माहेश्वरः जनः माहेश्वरः स्वाचाररोधकान्

स्वस्य आचाराणां रोधकान् विरोधकान् पूर्वाश्रयगतान् पूर्वस्मिन् आश्रये गतान् पूर्वाश्रयनिष्ठान् धर्मान् प्राकृताचारान् त्यजेत् परित्यजेत्।

**स्वजातिकुलजान् धर्मान् लिङ्गनिष्ठाविरोधिनः।**
**त्यजन् माहेश्वरो ज्ञेयः पूर्वाश्रयनिरासकः।।३१।।**

लिङ्गनिष्ठाविरोधिनः लिङ्गस्य निष्ठायाः विरुद्धान् स्वजाति-कुलजान् स्वस्य जातिश्च कुलं च स्वजातिकुले तत्र जातान् स्वजातिकुलक्रमागतान् धर्मान् जातप्रेताद्याशौचादीन् त्यजन् सन् माहेश्वरः पूर्वाश्रय-निरासकः इति ज्ञेयः।

**शिवसंस्कारयोगेन विशुद्धानां महात्मनाम्।**
**किं पूर्वकालिकैर्धर्मैः प्राकृतानां हि ते मताः।।३२।।**

शिवसंस्कारयोगेन शिवस्य संस्कारः शिवसंस्कारः तस्य योगेन दीक्षादिरूपशिवसंस्कारसम्पर्कात् विशुद्धानां परिशुद्धानां महात्मनां माहेश्वराणां पूर्वकालिकैः धर्मैः पूर्वाश्रयप्राप्तैः धर्मैः किम् किं प्रयोजनम्? प्रयोजनं नास्ति। परं ते धर्माः प्राकृतानाम् एव मायासम्बन्धिनामेव इति मताः प्रोक्ताः।

**शिवसंस्कार - योगेन शिवधर्मानुषङ्गिणाम्।**
**प्राकृतानां न धर्मेषु प्रवृत्तिरुपपद्यते।।३३।।**

शिवसंस्कारयोगेन शिवधर्मानुषङ्गिणां शिवस्य धर्मेषु अनुषङ्गः अस्ति येषां तेषां शिवधर्मानुष्ठाननिष्ठानां माहेश्वराणां प्राकृतानां माया-सम्बन्धिनां धर्मेषु नित्यनैमित्तिकादिषु प्रवृत्तिः आसक्तिः न उपपद्यते नैव जायते नैव युक्ता।

**उपपद्यते** + पद - गतौ, लट्।

**विशुद्धाः प्राकृताश्चेति द्विविधा मानुषाः स्मृताः।**
**शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः।।३४।।**

मानुषाः विशुद्धाः प्राकृताश्च इति द्विविधाः स्मृताः। तेषु शिवसंस्कारिणः शिवस्य संस्कारः अस्ति येषां ते शिवसंस्कारिणः दीक्षादिसंस्कारवन्तः शुद्धाः इति मताः इतरे च प्राकृताः इति मताः।

**वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता।**
**एका शिवेन निर्दिष्टा ब्रह्मणा कथितापरा।।३५।।**

वर्णाश्रमादिधर्माणां वर्णाश्च आश्रमाश्च आदयः येषां ते वर्णाश्रमादयः ते च ते धर्माश्च तेषां वर्णधर्माणाम् आश्रमधर्माणां च व्यवस्था अपि द्विधा निर्दिष्टा हि, तत्र एका शिवेन निर्दिष्टा अपरा च ब्रह्मणा कथिता।

**शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम्।**
**शिवसंस्कारहीनानां धर्मः पैतामहः स्मृतः।।३६।।**

शिवाश्रमनिषेविणां शिवस्य आश्रमं निषेवन्ते इति तेषां भस्मरुद्राक्षलिङ्गधारणादिरूपं शिवाचाररूपमाश्रमं ये निषेवन्ते तेषां वीरशैवानां तु शिवोक्तधर्मनिष्ठा शिवोक्तस्य धर्मस्य निष्ठा प्रोक्ता, शिवसंस्कारहीनानां दीक्षादिरूपेण शिवस्य संस्कारेण हीनानां तु पैतामहः पितामहस्य अयं पैतामहः धर्मः इति स्मृतः।

*।।इति पूर्वाश्रयनिरसनस्थलम्।।*

## (१९) सर्वाद्वैत-निरसनस्थलम्

**पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।**
**पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठा विरोधतः।।३७।।**

**सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः।**
**भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः।।३८।।**

पूज्यपूजकयोः पूज्यं च पूजकश्च पूज्यपूजकौ तयोः लिङ्गजीवयोः लिङ्गं च जीवश्च लिङ्गजीवौ तयोः भेदवर्जने भेदस्य वर्जने भेदाभावे कथिते सत्यपि, लिङ्गनिष्ठा-विरोधतः लिङ्गस्य निष्ठायाः विरोधात् पूजाकर्माद्यसम्पत्तेश्च पूजायाः कर्म पूजाकर्म तदादेः असम्पत्तिः तस्याश्च कारणात् पूजाकर्मादिसम्पत्तेः अभावाच्च सर्वाद्वैतविचारस्य सर्वस्य अद्वैतं सर्वाद्वैतं तस्य सम्बन्धिनः विचारस्य व्यवस्थितेः ज्ञानाभावे च सति ज्ञानस्य अनुपपन्नत्वे सत्यपि कर्मी माहेश्वरः शिवलिङ्गपूजादिकर्मनिष्ठः वीरमाहेश्वरः सर्वाद्वैत-निरासकः भवेत् सर्वं च तत् अद्वैतं च सर्वाद्वैतं तस्य निरासकः निवारकः स्यात्। सर्वत्र अद्वैतं न कुर्यात्।

**प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च।**
**भेदात् तं पूजयेन्नित्यं न चाद्वैतपरो भवेत्।।३९।।**

शङ्करं प्रेरकं जीवानां धर्माधर्मगोचरीभूतबुद्धेः वृत्तेश्च प्रेरकं बुद्ध्वा ज्ञात्वा, आत्मानं च प्रेर्यमेवेति बुद्ध्वा तं शिवं नित्यं पूजयेत् किन्तु अद्वैतपरश्च शिवजीवयोः अभेदभावयुक्तः सन् न भवेत्, तथा चेत् पूजाविरोधापत्तिः।

**पतिः साक्षान्महादेवः पशुरेव तदाश्रयः।**
**अनयोः स्वामिभृत्यत्वमभेदे कथमिष्यते?।।४०।।**

साक्षात् महादेवः एव पतिः, तदाश्रयः सः एव आश्रयः यस्य सः तदाश्रयः शिवमाश्रित्य वर्तमानः जीवः एव पशुः, एवं स्थिते अनयोः शिवजीवरूप-पतिपाल्ययोः अभेदे अभेदज्ञाने स्वामिभृत्यत्वं स्वामी च भृत्यश्च स्वामिभृत्यौ तयोः भावः स्वामिभृत्यत्वं कथम् इष्यते? कथं सम्भवति? नैव सम्भवति।

**साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः।**
**तदाद्वैत-समापत्तिर्ज्ञानहीनस्य न क्वचित्।।४१।।**

बोधतः बोधात् श्रुतिभिः गुरुभिः अनुभवैश्च प्राप्यमानपरिज्ञानात् परं तत्त्वं महालिङ्गतत्त्वं यदा भवति सम्पद्यते स्वात्माभेदरूपेण स्वानुभवविषयीक्रियते तदा एव अद्वैतसमापत्तिः अद्वैतस्य समापत्तिः प्राप्तिः भवति, किन्तु ज्ञानहीनस्य शिवज्ञानरहितस्य क्वचिदपि कुत्रापि न सम्पद्यते।।४१।।

**भेदस्य कर्महेतुत्वाद् व्यवहारः प्रवर्तते।**
**लिङ्गपूजादिकर्मस्थो न चाद्वैतं समाचरेत्।।४२।।**

भेदस्य व्यवहारः जीवेश्वरयोः भेदव्यवहारः तावत् कर्महेतुत्वात् कर्मणः हेतुत्वात् प्रवर्तते सम्भवति। तस्मात् लिङ्गपूजादिकर्मस्थः लिङ्गपूजा-लिङ्गध्यानादिकर्मणि वर्तमानः सन् अद्वैतम् अभेदं न च समाचरेत् नैवाचरेत्। पूर्वश्लोकार्थं श्लोकोऽयं समर्थयतीति काव्यलिङ्गालङ्कारः।

**पूजादिव्यवहारः स्याद्भेदाश्रयतया सदा।**
**लिङ्गपूजापरस्तस्मान्नाद्वैते निरतो भवेत्।।४३।।**

पूजादिव्यवहारः तु सदा भेदाश्रयतया भेदस्य आश्रयः भेदाश्रयः तस्य भावः भेदाश्रयता तया भेदमाश्रित्यैव स्यात्, तस्मात् लिङ्गपूजापरः लिङ्गस्य पूजायां परः लिङ्गपूजासक्तः माहेश्वरः अद्वैते अभेदे निरतः न भवेत् आसक्तः नैव स्यात्।

*॥इति अद्वैतनिरसनस्थलम्॥*

## (२०) आह्वाननिरसनस्थलम्

**लिङ्गार्चनपरः शुद्धः सर्वाद्वैतनिरासकः।**
**स्वेष्टलिङ्गे शिवाकारे न तमावाहयेच्छिवम्॥४४॥**

लिङ्गार्चनपरः लिङ्गस्य अर्चने परः स्वेष्टलिङ्गस्य अर्चने आसक्तः शुद्धः वीरमाहेश्वरः शिवाकारे शिवस्वरूपवति स्वेष्टलिङ्गे सर्वाद्वैत-निरासकः सन् यस्मात् वर्तते तस्मात् तं शिवं पुनः न आवाहयेत्।

**यदा शिवकलायुक्तं लिङ्गं दद्यान्महागुरुः।**
**तदारभ्य शिवस्तत्र तिष्ठत्याह्वानमत्र किम्?॥४५॥**

यदा दीक्षाकाले महागुरुः शिवकलायुक्तं शिवस्य कलया युक्तं लिङ्गम् इष्टलिङ्गं दद्यात् प्रयच्छेत्, तदा आरभ्य दीक्षाकालमारभ्य शिवः तत्र इष्टलिङ्गे तिष्ठति इत्यतः अत्र इष्टलिङ्गे किम् आह्वानम्? किमर्थम् आह्वानम्? आह्वानं नैव कर्तव्यम्।

**ससंस्कारेषु लिङ्गेषु सदा सन्निहितः शिवः।**
**तत्राह्वानं न कर्तव्यं प्रतिपत्तिविरोधकम्॥४६॥**

ससंस्कारेषु संस्कारयुक्तेषु लिङ्गेषु इष्टलिङ्गेषु शिवः सदा सन्निहितः भवति, तस्मात् प्रतिपत्तिविरोधकं प्रतिपत्तेः पूर्वकृतसंस्काररूपज्ञानस्य विरोधकं विरुद्धम् आह्वानं तत्र इष्टलिङ्गे न कर्तव्यम्।

**नाह्वानं न विसर्गं च स्वेष्टलिङ्गे तु कारयेत्।**
**लिङ्गनिष्ठापरो नित्यमिति शास्त्रस्य निश्चयः॥४७॥**

लिङ्गनिष्ठापरः इष्टलिङ्गनिष्ठायां तत्परः माहेश्वरः स्वेष्टलिङ्गे तु स्वस्य इष्टलिङ्गे तावत् नित्यम् आह्वानं न कारयेत् अपि च विसर्गमपि न कारयेत्, इति शास्त्रस्य निश्चयः शिवागमादिषु प्रोक्तः नियमः।

**कारयेत्** - डु-कृञ् - करणे, णिचि, विधिलिङ्।

*॥इति आह्वाननिरसनस्थलम्॥*

## (२१) अष्टमूर्तिनिरसनस्थलम्

**यथात्मशिवयोरैक्यं न मतं कर्मसङ्गिनः।**
**तथा शिवात्पृथिव्यादेरद्वैतमपि नेष्यते।।४८।।**

कर्मसङ्गिनः कर्मणः सङ्गः अस्ति अस्मिन् इति कर्मसङ्गी, तस्य कर्मसङ्गिनः माहेश्वरस्य यथा आत्मशिवयोः आत्मा च शिवश्च आत्मशिवौ तयोः शिवजीवयोः ऐक्यम् अद्वैतं न मतं नाभिप्रेतम्, तथैव, शिवात् शिवस्य सकाशात् पृथिव्यादेः पृथिवी, आपः तेजः, वायुः, आकाशः, सूर्यः, चन्द्रः, आत्मा अथवा यजमानश्चेति शिवस्य अष्टमूर्तिष्वपि अद्वैतं न इष्यते नेष्टम्।

शिवस्य अष्टमूर्तित्वं महाकविना कालिदासेन एवम् उपवर्णितमस्ति—

१. 'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधतः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।'

२. 'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः।
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः।।'

**पृथिव्याद्यष्टमूर्तित्वमीश्वरस्य प्रकीर्तितम्।**
**तदधिष्ठातृभावेन न साक्षादेकभावतः।।४९।।**

ईश्वरस्य पृथिव्याद्यष्टमूर्तित्वम् पृथिव्यादीनाम् अष्टानां मूर्तित्वं प्रकीर्तितम् शास्त्रादिषु प्रोक्तम्, परमिदम् अष्टमूर्तित्वं तदधिष्ठातृभावेन तेषां पृथिव्यादीनाम् अधिष्ठातृत्व-भावेन अर्थात् औपचारिकत्वेन उपपन्नं भवति किन्तु साक्षात् एकभावतः नोपपन्नं भवति शरीरशरीररिणोः भेदघटिंतत्वात्।

**पृथिव्यादिकमिदं सर्वं कार्यं कर्ता महेश्वरः।**
**नैतत्साक्षान्महेशोऽयं कुलालो मृत्तिका यथा।।५०।।**

पृथिव्यादिकम् इदं सर्वमपि कार्यमस्ति कर्ता तु महेश्वरः, एतत् सर्वम् अपि

साक्षात् महेशः अयं नैव अर्थात् पृथिव्यादेः महेशस्य च अभेदो नैव, यथा कुलालः मृत्तिका च। मृत्तिकया उपलक्षितः घटः कार्यम् कुलालः कारणम्, अथापि उभयोः भेद एव यथा तथा पृथिव्यादेः कार्यस्य शिवस्य कारणस्य च भेदः वर्तते। उपमालङ्कारः। परं घटकुलालयोः देहदेहिभावो नास्ति।

**पृथिव्याद्यात्मपर्यन्तप्रपञ्चो ह्यष्टधा स्थितः।**
**तनुरीशस्य चात्मायं सर्वतत्त्वनियामकः।।५१।।**

पृथिव्याद्यात्मपर्यन्तप्रपञ्चः हि अष्टधा स्थितः अष्टधा वर्तते यः सः अयं प्रपञ्चः ईशस्य ईश्वरस्य तनुः वर्तते, सर्वतत्त्व-नियामकः शरीरप्रेरकीभूतः अयं च अयं परमेश्वरश्च आत्मा शरीरी वर्तते। पृथिव्याद्यष्टमूर्तित्वस्य शिवस्य च शरीरशरीरिभावः, शरीरशरीरिणोः भेदघटितत्त्वं च सिद्धम्।

**शरीरभूतादेतस्मात् प्रपञ्चात्परमेष्ठिनः।**
**आत्मभूतस्य देवस्य नाभेदो न पृथक्स्थितिः।।५२।।**

परमेष्ठिनः परब्रह्मस्वरूपिणः परमेश्वरस्य शरीरभूतात् शरीरत्वेन वर्तमानात् एतस्मात् प्रपञ्चात् अभेदः नास्ति भेद एव वर्तते, किन्तु आत्मभूतस्य विश्वशरीरिणः देवस्य परमेश्वरस्य पृथक् स्थितिरपि नास्ति सर्वव्यापकत्वात्।

**अचेतनत्वात्पृथ्व्यादेरज्ञत्वादात्मनस्तथा ।**
**सर्वज्ञस्य महेशस्य नैकरूपत्वमिष्यते।।५३।।**

पृथ्व्यादेः पृथिव्यादीनाम् अचेतनत्वात् चैतन्यराहित्यात् जडत्वात्, तथा आत्मनश्च अज्ञत्वात् यजमानापरपर्यायरूपस्य आत्मनः जीवात्मनः अल्पज्ञत्वात् सर्वज्ञस्य च महेशस्य एकरूपत्वं नैव इष्यते इच्छाविषयतानैव क्रियते।

**इति यश्चिन्तयेन्नित्यं पृथ्व्यादेरष्टमूर्तितः।**
**विलक्षणं महादेवं सोऽष्टमूर्ति - निरासकः।।५४।।**

पृथ्व्यादेः अष्टमूर्तितः पृथिव्याद्यष्टमूर्तिभ्यः विलक्षणं महादेवं यः सम्भावनया नित्यं चिन्तयेत् सः अष्टमूर्तिनिरासकः इति व्यपदिश्यते।

*।।इति अष्टमूर्तिनिरसनस्थलम्।।*

## (२२) सर्वगत्वनिरसनस्थलम्

**सर्वगत्वे महेशस्य सर्वत्राराधनं भवेत्।**
**न लिङ्गमात्रे तन्निष्ठो न शिवं सर्वगं स्मरेत्।।५५।।**

महेशस्य परमेश्वरस्य सर्वगत्वे सर्वत्र गच्छति इति सर्वगः तस्य भावः तस्मिन् सर्वगत्वे सर्वत्र आराधनं भवेत्, केवलं लिङ्गमात्रे न भवेत्, तस्मात् तन्निष्ठः तस्मिन् लिङ्गे निष्ठः माहेश्वरः शिवं सर्वगं सन्तं न स्मरेत्। स्मरेत् — स्मृ-चिन्तायाम्, विधिलिङ्।

**सर्वगोऽपि स्थितः शम्भुः स्वाधारे हि विशेषतः।**
**तस्मादन्यत्र विमुखः स्वेष्टलिङ्गे यजेच्छिवम्।।५६।।**

शम्भुः सर्वगः सन्नपि विशेषतः विशेषाकारेण स्वाधारे स्वस्य आधारे आधारभूते इष्टलिङ्गे हि स्थितः भवति, तस्मात् महेश्वरः अन्यत्र विमुखः सन् इतरत्र पूजादिषु अनिरतः सन् केवलं स्वेष्टलिङ्गे शिवं यजेत् पूजयेत्।

**शिवः सर्वगतश्चापि स्वाधारे व्यज्यते भृशम्।**
**शमीगर्भे यथा वह्निर्विशेषेण विभाव्यते।।५७।।**

यथा वह्निः विशेषेण विशिष्टत्वेन शमीगर्भे विभाव्यते तथैव शिवः सर्वगतश्च सन्नपि स्वाधारे इष्टलिङ्गे भृशम् अधिकं व्यज्यते प्रकाश्यते।

**व्यज्यते** – अञ्ज् - व्यक्तिम्रक्षणकान्तिगतिषु, कर्मणि लट्।

**विभाव्यते** – वि+भू - णिजन्तात् कर्मणि लट्।

अत्र वाक्यार्थोपमालङ्कारः।

**सर्वगत्वं महेशस्य सर्वशास्त्रविनिश्चितम्।**
**तथाप्याश्रयलिङ्गादौ पूजार्थमधिका स्थितिः।।५८।।**

महेशस्य सर्वगत्वं तावत् सर्वशास्त्रविनिश्चितं - सर्वाणि च तानि शास्त्राणि च सर्वशास्त्राणि तेषु विनिश्चितम् सर्वेषु आगमादिषु दृढतया उक्तमस्ति, तथापि आश्रयलिङ्गादौ आश्रयभूतेषु गुरौ लिङ्गे जङ्गमे च पूजार्थमेव तस्य अधिका स्थितिः वर्तते।

**नित्यं भासि तदीयस्त्वं या ते रुद्र शिवा तनूः।**
**अघोरा पापकाशीति श्रुतिराह सनातनी।।५९।।**

हे रुद्र! ते तव या तनूः शरीरं शिवलिङ्गमूर्तिः शिवा मङ्गलकरा, अघोरा शान्ता अभयङ्करा अपापकाशी दोषरहिता सती शुद्धा वर्तते, त्वं तावत् तदीयः तस्य अयं तदीयः इष्टलिङ्गसम्बन्धी सन् नित्यं भासि प्रकाशसे, उपलक्षणया च गुरुजङ्गमयोरपि भासि, इति सनातनी श्रुतिः आह।

**भासि** – भा-दीप्तौ, लट्।

श्लोकोऽयं पूर्वश्लोकाभिप्रायं समर्थयतीति काव्यलिङ्गम् अलङ्कारः।

**तस्मात् सर्वप्रयत्नेन सर्वस्थानपराङ्मुखः।**
**स्वेष्टलिङ्गे महादेवं पूजयेत् पूजकोत्तमः।।६०।।**

तस्मात् एवं श्रुतिप्रसिद्धत्वात् पूजकोत्तमः उत्तमपूजकः माहेश्वरः सर्वप्रयत्नेन सर्वरीत्या सर्वस्थानपराङ्मुखः सर्वस्मात् स्थानात् पराङ्मुखः सन् स्वेष्टलिङ्गे एव महादेवं पूजयेत्।

**शिवस्य सर्वगत्वेऽपि सर्वत्र रतिवर्जितः।**
**स्वेष्टलिङ्गे यजन् देवं सर्वगत्वनिरासकः।।६१।।**

शिवस्य सर्वगत्वे सिद्धे सत्यपि माहेश्वरः सर्वत्र रतिवर्जितः आसक्तिरहितः सन् स्वेष्टलिङ्गे देवं यजन् पूजयन् सर्वगत्व-निरासकः इति कथ्यते।

*।।इति सर्वगत्वनिरसनस्थलम्।।*

## (२३) शिवजगन्मयस्थलम्

**पूजाविधौ नियम्यत्वाल्लिङ्गमात्रे स्थितं शिवम्।**
**पूजयन्नपि देवस्य सर्वगत्वं विभावयेत्।।६२।।**

शिवे सर्वगे सत्यपि, पूजाविधौ पूजाविधिषु नियम्यत्वात् भक्तस्य नियमाधीनत्वात् लिङ्गमात्रे केवलमिष्टलिङ्गे स्थितं वर्तमानं शिवं पूजयन्नपि महेश्वरः देवस्य सर्वगत्वं विभावयेत् चिन्तयेत्।

**विभावयेत्** – वि+भू-णिच्, विधिलिङ्।

**यस्मादेतत्समुत्पन्नं महादेवाच्चराचरम्।**
**तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः।।६३।।**

यस्मात् महादेवात् चराचरम् एतत् जगत् समुत्पन्नं वर्तते तस्मात् महादेवात् एतत् जगत् यथा मृदः सकाशात् कुम्भादिकं न भिद्येत तथा न भिद्येत। उपादानकारणीभूतायाः मृदः कार्यरूपस्य घटादिकस्य यथा भेदः नास्ति तथैव उपादानकारणीभूतस्य शिवस्य कार्यभूतस्य जगतः अपि भेदः नास्ति। उपमालङ्कारः। भिद्येत – भिदिर् - विदारणे, विधिलिङ्।

**शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते।**
**फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते।।६४।।**

सिन्धोः समुद्रस्य फेनोर्मिबुद्बुदाकारः फेनाश्च ऊर्मयश्च बुद्बुदाश्च फेनोर्मिबुद्बुदाः एतेषाम् आकारः सिन्धोः सकाशात् यथा न भिद्यते तथैव शिवतत्त्वात् समुत्पन्नं जगदपि अस्मात् शिवात् न भिद्यते।

वाक्यार्थोपमालङ्कारः।

**भिद्यते** - कर्मणि लट्।

**यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः।**
**तथा शिवात्समुत्पन्नं शिव एव चराचरम्।।६५।।**

तन्तुभिः उत्पन्नः पटः यथा तन्तुमयः स्मृतः तथैव शिवात् समुत्पन्नं चराचरं जगत् शिव एवेति स्मृतम्।

वाक्यार्थोपमालङ्कारः।

**आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।**
**कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।।६६।।**

पटः यथा स्वस्य प्रसारणात् प्रसरणत्वशक्तेः सकाशात् कुटीभावात् विस्तृतवस्त्रमन्दिरद्वारा भाति प्रकाशते, तथैव शिवः आत्मशक्तिविकासेन स्वस्मिन् अविनाभावरूपेण वर्तमानायाः शक्तेः विकासेन विश्वात्मना विश्वात्मस्वरूपेण स्थितः सन् भाति।

वाक्यार्थोपमालङ्कारः।

**तस्माच्छिवमयं सर्वं जगदेतच्चराचरम्।**
**तदभिन्नतया भाति सर्पत्वमिव रज्जुतः।।६७।।**

रज्जुतः रज्जोः सकाशात् सर्पत्वम् इव शिवः अपि तदभिन्नतया तस्य अभिन्नतया विश्वस्य अभिन्नतया भाति, तस्मात् कारणात् सर्वम् एतत् चराचरं जगत् शिवमयं सत् भाति।

वाक्यार्थोपमालङ्कारः।

**भाति** – भा-दीप्तौ, लट्।

**रज्जौ सर्पत्ववद्भाति शुक्तौ च रजतत्ववत्।**
**चीरत्ववदपि स्थाणौ मरीच्यां च जलत्ववत्।।६८।।**

**गन्धर्वपुरवद्व्योम्नि सच्चिदानन्दलक्षणे।**
**निरस्तभेद-सद्भावे शिवे विश्वं विराजते।।६९।।**

निरस्तभेदसद्भावे सत् च असौ भावश्च सद्भावः भेदस्य सद्भावः भेदसद्भावः निरस्तः भेदसद्भावः यस्मिन् तस्मिन् निरस्तभेदसद्भावे निरस्त-समस्त-प्रापञ्चिक-भेदवति, सच्चिदानन्दलक्षणे सत् च चित् च आनन्दश्च एतेषां समाहारः सच्चिदानन्दम् एतदेव लक्षणं यस्य तस्मिन् सच्चिदानन्दस्वरूपे शिवे परशिवब्रह्मणि विश्वं चराचरात्मकं जगत्-यथा रज्जौ सर्पत्ववत् व्योम्नि गन्धर्वपुरवत् भाति, तथैव समवेतविमर्शशक्ति-परिस्फुरणायमानमायाशक्त्या शिवाभिन्नतया विराजते प्रकाशते। अत्र मालोपमालङ्कारः।

**विराजते** – वि+राजृ-दीप्तौ, लट्।

**अत्र विचारः**

स्मृतिः, भ्रान्तिः, सन्देहः इति ज्ञानत्रयं सादृश्यमूलमस्ति। आलङ्कारिकैः एतेषां लक्षणमेवं निरूपितम्—

(१) चमत्काराधायक-सदृशवस्तुदर्शनजन्य-सदृशवस्त्वन्तरानुभवः स्मृतिः। (२) चमत्काराधायक-सादृश्यमूलक-अतत्त्वनिष्ठतत्त्वज्ञानं भ्रान्तिः। (३) चमत्काराधायक-सादृश्यज्ञानफलकपक्षद्वयावलम्बि ज्ञानं सन्देहः।

रज्जौ सर्पत्वज्ञानम्, शुक्तौ रजतत्वज्ञानम्, स्थाणौ पुरुषत्वज्ञानम्, मरीच्यां चलत्वज्ञानम्, व्योम्नि गन्धर्वपुरत्वज्ञानम् इत्येतत् सर्वं सादृश्यमूलमेव।

रज्जौ सर्पत्वभ्रान्तिः, शुक्तौ रजतत्वभ्रान्तिः, स्थाणौ स्थाणुर्वा? पुरुषो वा? इति सन्देहः, मरीच्यां जलत्वभ्रान्तिः, व्योम्नि गन्धर्वनगरत्वभ्रान्तिः- इत्येतदपि सादृश्यमूलमेव। अद्वैतदर्शने एतादृश-ज्ञानस्य प्रातिभासिकत्वम् अथवा अध्यासः इति व्यवहारः दृश्यते, सत्ताज्ञानं तावत् सत्, असत्, सदसत्– इति त्रिविधम्। रज्जुः, सर्पः, शुक्तिः, रजतम्, स्थाणुः, पुरुषः, मरीची, जलम्-इत्येतत् सर्वं सत्, परं गन्धर्वनगरी गगनकुसुमम् इत्यादिकम् असत्। 'अतस्मिन् तद्बुद्धिः अध्यासः'। इत्यादि सर्वत्र ज्ञेयम्। रज्ज्वादिषु प्रातिभासिक-सत्यत्वं तु वर्तते। न तु यथार्थज्ञानम्। एतदेव दर्शनेऽस्मिन् अनिर्वचनीयख्यातिरिति व्यपदिश्यते-सदसद्विलक्षणत्वात्। अर्थात् भ्रान्तिस्थले सदसद्विलक्षणं वस्तु एव उत्पन्नं सत् ज्ञानगोचरं भवति इति भावः। प्रतिभासते इति प्रतिभासः तत्र भवम् प्रातिभासिकम्।

किन्तु शक्तिविशिष्टाद्वैतदर्शनानुसारं सर्वस्यास्य समन्वयः सत्यत्वमाश्रित्यैव क्रियते-इति विशेषः। यथाच—उभयोः वस्तुनोर्मध्ये यः वर्तते साधारणो धर्मः स एव शक्तिपदेन व्यपदिश्यते। एवञ्च–रज्जुसर्पयोः गोधूमवर्णतादिशक्तिः, शुक्तिरजतयोः धावल्यशक्तिः, स्थाणुपुरुषयोः दीर्घताशक्तिः, मरीचिजलयोः स्वच्छतोद्रेकशक्तिः, गन्धर्वनगरव्योम्नोः कालत्वशक्तिः इत्यादि। सर्पज्ञानेन रज्जुज्ञानस्य न कोऽपि बाधः उभयोरपि वास्तविकसत्यत्वात्। एवमेव सर्वत्र ज्ञेयम्। यतः वस्तुनोः भिन्नकाल - भिन्नविषयत्वात्, तस्मात् निरस्त-समस्तप्रापञ्चिकभेदवति निर्विकारे सच्चिदानन्दस्वरूपे परशिवब्रह्मणि तत्समवेतविमर्शशक्तिप्रतिस्फुरणायमानमायाशक्तया विश्वं शिवाभिन्नतया भाति, यथा रज्जुः गोधूमवर्णत्वादिशक्त्या सर्पत्ववत् भाति–इत्यादि सर्वत्र समन्वयः। एवं परशिवब्रह्मणः सकाशात् प्रपञ्चस्य अभिन्नता, शिवस्यैव सत्यत्वात् विश्वस्यापि नित्यसत्यत्वमेव सम्यक् समुपपन्नं भवतीति दिक्।

**पत्रशाखादिरूपेण यथा तिष्ठति पादपः।**
**तथा भूम्यादिरूपेण शिव एको विराजते।।७०।।**

पत्रशाखादिरूपेण पत्राणि च शाखाश्च पत्रशाखाः इत्यादिरूपेण यथा पादपः वृक्षः तिष्ठति वर्तते तथैव भूम्यादिरूपेण भूम्यादिशिवतत्त्वान्तषट्त्रिंशत्-तत्त्वस्वरूपेण शिवः एक एव विराजते प्रकाशते।

वाक्यार्थोपमालङ्कारः।

वृक्षः सावयवः पत्रशाखादिमत्त्वात्, परं शिवः निरवयवः। एवमेव शिवसमवेतशक्तिरपि निरवयवा। स्थिते चैवं शिवस्य सावयवप्रपञ्चरूपेण भासनं कथं सम्भवतीति आक्षेपः। अस्य च समाधानम्– शक्तिः शिवाभिन्ना सती दुर्घटकारिणी अपि वर्तते। तस्मात् शिवांशत्वे सति तत्कार्यरूपमायाशक्तेः सांशत्वात् प्रातीतिकप्रपञ्चरूपेणापि स्वशक्तिन्यूनीभावेन शिव एव भासते। अवयवावयविनोः अभेदः दर्शनेऽस्मिन् अङ्गीकृतः। तस्मात् अवयविनः वृक्षस्य अवयवेभ्यः पत्रशाखादिभ्यः यथा अभेदः उपपद्यते, तथैव अवयविनः शिवस्य अवयवभूतेभ्यः षट्त्रिंशत्तत्त्वेभ्यश्च अभेदः सम्पद्यते इति भावः।

*।।इति शिवजगन्मयस्थलम्।।*

## (२४) भक्तदेहिकलिङ्गस्थलम्

**समस्तजगदात्मापि शङ्करः परमेश्वरः।**
**भक्तानां हृदयाम्भोजे विशेषेण विराजते।।७१।।**

शङ्करः शंकरोति इति शङ्करः, मङ्गलकरः, परमेश्वरः परमश्चासौ ईश्वरश्च परमेश्वरः समस्त-जगदात्मा सन्नपि समस्तं च तत् जगत् च समस्तजगत् तदेव आत्मा यस्य सः समस्तजगताम् आत्मरूपेण वर्तमानः सन्नपि भक्तानां हृदयाम्भोजे हृदयमेव अम्भोजं हृदयाम्भोजं तस्मिन् हृदयकमले विशेषेण आधिक्येन विराजते प्रकाशते। हृदयाम्भोजे इत्यत्र रूपकम्।

**कैलासे मन्दरे चैव हिमाद्रौ कनकाचले।**
**हृदयेषु च भक्तानां विशेषेण व्यवस्थितः।।७२।।**

कैलासे कैलासपर्वते, मन्दरे मन्दरपर्वते, हिमाद्रौ हिमालयपर्वते, कनकाचले मेरुपर्वते, तथैव च भक्तानां हृदयेषु विशेषेण व्यवस्थितः निवसन् वर्तते।

यथा कैलासादिषु विराजते तथैव हृदयेऽपि विराजते इति उपमाध्वनिः।

**सर्वात्मापि परिच्छिन्नो यथा देहेषु वर्तते।**
**तथा स्वकीय-भक्तेषु शङ्करो भासते सदा।।७३।।**

सर्वात्मा सन्नपि शिवः स्वयं परिच्छिन्नः सन् देहेषु देवतिर्यङ्मनुष्यादिरूपेषु देहेषु भिन्नभिन्नान्तःकरणतया विशिष्टेषु प्रतिबिम्बरूपेण यथा वर्तते, तथैव स्वकीयभक्तेषु शङ्करः सदा भासते।

**भासते**— भासृ - दीप्तौ, लट्।

**नित्यं भाति त्वदीयेषु या ते रुद्र शिवा तनूः।**
**अघोरा पापकाशीति श्रुतिराह सनातनी।।७४।।**

हे रुद्र! ते या शिवा तनूः त्वदीयेषु तव एते त्वदीयाः तेषु भक्तेषु नित्यं भाति, सा अघोरा शान्ता अपापकाशी दोषरहिता इति सनातनी श्रुतिः आह।

**विशुद्धेषु विरक्तेषु विवेकिषु महात्मसु।**
**शिवस्तिष्ठति सर्वात्मा शिवलाञ्छन-धारिषु।।७५।।**

विशुद्धेषु परिशुद्धमनस्केषु विरक्तेषु वैराग्यशीलेषु विवेकिषु परशिवज्ञानसम्पन्नेषु महात्मसु शुकमुन्यादिमहायोगसम्पन्नेषु अपि च शिवलाञ्छनधारिषु शिवस्य लाञ्छनं शिवलाञ्छनं तत् धर्तुं शीलमस्ति येषां तेषु भूतिरुद्राक्षादि-शिवलाञ्छन-धारिषु सर्वात्मा शिवः तिष्ठति।

**नित्यं सन्तोषयुक्तानां ज्ञाननिर्धूतकर्मणाम्।**
**माहेश्वराणामन्तःस्थो विभाति परमेश्वरः।।७६।।**

ज्ञाननिर्धूतकर्मणां ज्ञानेन निर्धूतं कर्म येषां तेषां शिवज्ञानेन दूरीकृतकल्मषाणाम्, सन्तोषयुक्तानाम् अत एव शिवानन्देन युक्तानाम् माहेश्वराणाम् अन्तःस्थः सन् हृदये वसन् सन् परमेश्वरः नित्यं विभाति प्रकाशते।

**अन्यत्र शम्भोरतिमात्र-शून्यो**
**निजेष्टलिङ्गे नियतान्तरात्मा।**
**शिवात्मकं विश्वमिदं विबुध्यन्**
**माहेश्वरोऽसौ भवति प्रसादी।।७७।।**

शम्भोः शिवात् अन्यत्र देवतान्तरेषु रतिमात्रशून्यः रतिमात्रेण शून्यः प्रीतिरहितः निजेष्टलिङ्गे निजस्य इष्टलिङ्गे एव नियतान्तरात्मा नियतः अन्तरात्मा येन सः अन्तर्निविष्टचित्तः सन् असौ माहेश्वरः इदं विश्वं शिवात्मकं शिवस्वरूपकं सन्तं विबुध्यन् भावयन् प्रसादी भवति।

प्रथमचतुर्थपादौ इन्द्रवज्रावृत्तान्वितौ, द्वितीयतृतीयपादौ उपेन्द्रवज्रावृत्तान्वितौ इति उपजातिः छन्दः।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ माहेश्वरस्य नवविधस्थलप्रसङ्गो नाम*

*॥दशमः परिच्छेदः॥*

# ।।एकादशः परिच्छेदः।।

## ।।प्रसादिस्थलम्।।

### ।।अगस्त्य उवाच।।

**उक्तो माहेश्वरः साक्षाल्लिङ्गनिष्ठादिधर्मवान्।**
**कथमेष प्रसादीति कथ्यते गणनायक!।।१।।**

हे गणनायक! साक्षात् लिङ्गनिष्ठादिधर्मवान् इष्टलिङ्गनिष्ठादिधर्मयुक्तः माहेश्वरः उक्तः तस्य लक्षणमुक्तम्, एषः माहेश्वरः कथं प्रसादी इति कथ्यते? तत्कथय।

### ।।रेणुक उवाच।।

**लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः।**
**मनः - प्रसादयोगेन प्रसादीत्येष कथ्यते।।२।।**

लिङ्गनिष्ठादिभावेन-लिङ्गनिष्ठादिभेदानां पूर्वोक्तानां भावेन ध्वस्तपापनिबन्धनः ध्वस्तम् पापानां निबन्धनम् येन सः दूरीकृतपापसमूहः सन्माहेश्वरः मनःप्रसाद-योगेन मनसः प्रसादः तस्य योगेन मनसः प्रसन्नतायोगेन एषः माहेश्वरः प्रसादी प्रसादस्थलसम्पन्नः इति कथ्यते।

**प्रसादिस्थलमित्येतदस्य माहात्म्यबोधकम्।**
**अन्तरस्थलभेदेन सप्तधा परिकीर्तितम्।।३।।**

अस्य माहेश्वरस्थलोक्तानां भक्तस्थलोक्तानां च सदाचाराणां समूहस्य माहात्म्यबोधकं माहात्म्यस्य बोधकं सूचकं यत् एतत् प्रसादिस्थलम् अन्तरस्थलभेदेन अवान्तरस्थलानां भेदेन सप्तधा परिकीर्तितम् सप्तविधम्।

**प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः।**
**ततो लिङ्गप्रशंसा च ततो जङ्गमगौरवम्।।४।।**

**ततो भक्तस्य माहात्म्यं ततः शरणकीर्तनम्।**
**शिवप्रसादमाहात्म्यमिति सप्तप्रकारकम्।।५।।**

प्रसादिस्थलमेतत् अवान्तरभेदेन प्रसादिस्थलम्, गुरुमाहात्म्यस्थलम्, लिङ्गमाहात्म्यस्थलम्, जङ्गममाहात्म्यस्थलम्, भक्तस्थलम्, शरणमाहात्म्यस्थलम्, प्रसादमाहात्म्यस्थलञ्चेति सप्तप्रकारकमस्ति।

## (२५) प्रसादिस्थलम्

**क्रमाल्लक्षणमेतेषां कथयामि महामुने।**
**नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते।।**
**शिवस्य लिङ्गरूपस्य प्रसादादेव सिद्ध्यति।।६।।**

हे महामुने! क्रमात् एतेषां लक्षणं कथयामि।

मनसः नैर्मल्यं निर्मलस्य भावः नैर्मल्यं लिङ्गं चिह्नं निर्मलत्वचिह्नमेव प्रसादः इति कथ्यते, एषः मनःप्रसादः लिङ्गरूपस्य शिवस्य प्रसादात् एव अनुग्रहादेव सिद्ध्यति।

**कथयामि** – कथ-वाक्यप्रबन्धे, लट्।

**सिद्ध्यति** – षिधु (सिध्) संसिद्धौ - लट्।

**शिवप्रसादो यद्द्रव्यं शिवाय विनिवेदितम्।**
**निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम्।।७।।**

शिवाय विनिवेदितं भक्त्या समर्पितं यत् द्रव्यं तदेव शिवप्रसादः शिवस्य प्रसादः भवति, तत्तु निर्माल्यं शैवानां शिवभक्तानां मनोनैर्मल्यकारणम् मनसः नैर्मल्यं तस्य कारणं भवति। शिवप्रसादपदार्थः शिवानुग्रहात्मा प्रसादः।

**मनः प्रसादसिद्ध्यर्थं निर्मलज्ञानकारणम्।**
**शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते।।८।।**

मनःप्रसादसिद्ध्यर्थं मनसः प्रसादः मनःप्रसादः तस्य सिद्ध्यर्थं मनः-प्रसन्नतासिद्धिकृते निर्मलज्ञानकारणम् निर्मलं च तत् ज्ञानं च निर्मलज्ञानं तस्य कारणं कारणीभूतम् शिवप्रसादं स्वीकुर्वन् एषः महेश्वरः प्रसादी इति कथ्यते।

**अन्नशुद्ध्या हि सर्वेषां तत्त्वशुद्धिरुदाहृता।**
**विशुद्धमन्नजातं हि यच्छिवाय समर्पितम्।।९।।**

**तदेव सर्वकालं तु भुञ्जानो लिङ्गतत्परः।**
**मनःप्रसादमतुलं लभते ज्ञानकारणम्।।१०।।**

सर्वेषां सर्वेषां प्राणिनामपि अन्नशुद्ध्या अन्नस्य शुद्ध्या तत्त्वशुद्धिः तत्त्वानां शुद्धिः देहेन्द्रियभुवनादीनां शुद्धिः उदाहृता हि कथिता एव। शिवाय समर्पितं यत् अन्नजातं समस्तमपि अन्नं तत् विशुद्धं हि परिशुद्धमेव, तदेव प्रसादान्नं लिङ्गतत्परः लिङ्गपूजानिरतः माहेश्वरः सर्वकालं तु सदैव भुञ्जानः स्वीकुर्वन् सन् ज्ञानकारणं शिवज्ञानस्य कारणीभूतम् अतुलं मनःप्रसादम् अपरिमितां मनसः प्रसन्नतां लभते प्राप्नोति।

**आत्मभोगाय नियतं यद्यद्द्रव्यं समाहितम्।**
**तत्तत् समर्प्य देवाय भुञ्जीतात्मविशुद्धये।।११।।**

आत्मभोगाय आत्मनः भोगः तस्मै स्वानुभूत्यर्थं नियतं निर्दिष्टं यत् यत् द्रव्यं यो यो पदार्थः समाहितं भवति सम्पादितं भवति तत् तत् द्रव्यं देवाय परमेश्वराय समर्प्य आत्मविशुद्धये आत्मनः विशुद्धये आत्मपरिशुद्ध्यर्थं भुञ्जीत स्वीकुर्यात्। **भुञ्जीत** – भुज-पालनाभ्यवहारयोः, विधिलिङ्

भुञ्जीत भुञ्जीयाताम् भुञ्जीरन् इत्यादि।

**नित्यसिद्धेन देवेन भिषजा जन्मरोगिणाम्।**
**यद्यत् प्रसादितं भुक्त्वा तत्तज्जन्मरसायनम्।।१२।**

जन्मरोगिणां जन्म एव रोगः येषां ते तेषां भवरोगयुक्तानां भिषजा वैद्यरूपिणा नित्यसिद्धेन नित्यं सिद्धेन इष्टलिङ्गे नित्यं वासं कुर्वता देवेन परमेश्वरेण भुक्त्वा स्वीकृत्य यत् यत् वस्तु प्रसादितं प्रसादीकृतं भवति तत् तत् सर्वमपि जन्मरसायनं संसारव्याधेः रसायनं भवति।

प्रसादे जन्मरसायनस्य आरोपः देवे भिषजः आरोपः इति रूपकम्।

**आरोग्यकारणं पुंसामन्तःकरणशुद्धिदम्।**
**तापत्रयमहारोग - समुद्धरणभेषजम्।।१३।।**

शिवप्रसादद्रव्यं तु पुंसाम् आरोग्यस्य कारणम्, अन्तःकरणशुद्धिदम् अन्तःकरणस्य शुद्धिं ददाति इति अन्तःकरणशुद्धिदम् अन्तःकरणशुद्धिप्रदायकम्, तापत्रयमहारोगसमुद्धरणभेषजम् तापत्रयम् एव महारोगः तस्य समुद्धरणे भेषजम् आध्यात्मिकादितापत्रयरूपमहारोगनिवारकं सिद्धौषधं भवति।

तापत्रयमहारोग– इत्यत्र रूपकम्, समुद्धरणभेषजम् भेषजमिव इति उपमाध्वनिः।

**विद्यावैशद्यकरणं विनिपातविघातनम्।**
**द्वारं ज्ञानावतारस्य मोहोच्छेदस्य कारणम्।।१४।।**

विद्यावैशद्यकरणं विशदस्य भावः वैशद्यं विद्यायाः वैशद्यस्य करणं साधनम् विद्याविशेषस्य सिद्धेः कारणम्, विनिपातविघातनं विनिपातस्य विघातकं कृत्रिमदोषरूपस्य वामाचारादिकस्य विनाशकम्, ज्ञानावतारस्य ज्ञानस्य अवतारः ज्ञानावतारः तस्य द्वारं मोहोच्छेदस्य मोहस्य उच्छेदः मोहोच्छेदः तस्य कारणम् अज्ञानोच्चाटनस्य कारणम्, प्रसादे विद्यावैशद्यकरणत्वस्य, विनिपातविघातकत्वस्य, ज्ञानावतारद्वारत्वस्य, मोहोच्छेदकारणत्वस्य च समारोपात् रूपकध्वनिः।

**वैराग्यसम्पदो मूलं महानन्दप्रवर्धनम्।**
**दुर्लभं पापचित्तानां सुलभं शुद्धकर्मणाम्।।१५।।**

वैराग्यसम्पदः वैराग्यमेव सम्पत् तस्या मूलं कारणम् वैराग्यरूपसम्पत्कारकम्, महानन्दप्रवर्धनं महानन्दस्य प्रवर्धनम् शिवानन्दानन्दस्य प्रवर्धकम् नित्यानन्दप्रकाशकम्, एतादृशम् इदं प्रसादद्रव्यं तु पापचित्तानां पापं चित्तं येषां तेषां पापात्मनां दुर्लभम् असाध्यम्, किन्तु शुद्धकर्मणां शुद्धं कर्म येषां तेषां पुण्यात्मनां सुलभं सुलभसाध्यम्। अत्रापि पूर्वार्धे रूपकध्वनिः।

**आदृतं ब्रह्मविष्ण्वाद्यैर्वसिष्ठाद्यैश्च तापसैः।**
**शिवस्वीकृतमन्नाद्यं स्वीकार्यं सिद्धिकांक्षिभिः।।१६।।**

ब्रह्मविष्ण्वाद्यैः ब्रह्मा विष्णुः इत्याद्यैः देवैः अपि च वसिष्ठाद्यैः तापसैश्च आदृतम् परमादरेण प्रीतिविषयीकृतम्, तस्मात् शिवस्वीकृतं शिवेन स्वीकृतम् अन्नाद्यम् अन्नादिवस्तुजातं सिद्धिकांक्षिभिः इह च परत्र च सिद्धिं ये कांक्षन्ति

तैः भोगमोक्षरूपसिद्धिमपेक्षमाणैः अवश्यं स्वीकार्यम्। पद्यमिदं पूर्वतनश्लोकानामभिप्रायं समर्थयतीति काव्यलिङ्गम् अलङ्कारः।

**पत्रं पुष्पं फलं तोयं यच्छिवाय निवेदितम्।**
**तत्तत् - स्वीकारयोगेन सर्वपापक्षयो भवेत्।।१७।।**

पत्रम्, पुष्पम्, फलम्, तोयम्, इति यत् यत् वस्तु शिवाय निवेदितं समर्पितं भवति तत्तत् वस्तुनः प्रसादरूपस्य स्वीकारयोगेन स्वीकारस्य योगेन प्रभावेण वा सर्वपापक्षयः सर्वाणि च तानि पापानि सर्वपापानि तेषां क्षयः नाशः भवेत्।

**यथा शिवप्रसादान्नं स्वीकार्यं लिङ्गतत्परैः।**
**तथा गुरोः प्रसादान्नं तथैव शिवयोगिनाम्।।१८।।**

लिङ्गतत्परैः लिङ्गनिष्ठैः यथा शिवप्रसादान्नं शिवस्य प्रसादरूपमन्नं स्वीकार्यं भवति तथैव गुरोः प्रसादान्नं तथैव च शिवयोगिनां जङ्गमानां च प्रसादान्नं स्वीकार्यम्।

*।।इति प्रसादिस्थलम्।।*

## (२६) गुरुमाहात्म्यस्थलम्

**गुरुरेवात्र सर्वेषां कारणं सिद्धिकर्मणाम्।**
**गुरुरूपो महादेवो यतः साक्षादुपस्थितः।।१९।।**

यतः यस्मात्कारणात् महादेवः गुरुरूपः गुरोः रूपं यस्य सः गुरुरूपधारी सन् साक्षात् प्रत्यक्षतः उपस्थितः विजृम्भमाणः वर्तते, अतएव अत्रलोके सर्वेषां सिद्धिकर्मणां सिद्धेः कर्मणां भोगमोक्षादिरूपाणां सकलसिद्धिदायककर्मणां कारणं वर्तते। अत्र उत्तरार्धः पूर्वार्धं समर्थयतीति काव्यलिङ्गालङ्कारः।

**निष्कलो हि महादेवो नित्यज्ञानमहोदधिः।**
**सकलो गुरुरूपेण सर्वानुग्राहको भवेत्।।२०।।**

नित्यज्ञानमहोदधिः नित्यज्ञानस्य महोदधिः इव वर्तमानः महादेवः

निष्कलः हि कलारहितः निरवयवः अस्ति हि, तथा वर्तमानः सन्नपि गुरु-रूपेण गुरुरूपेण सकलः अवयवपूर्णः सन् सर्वानुग्राहकः सर्वान् अनुगृह्णाति इति सर्वानुग्राहकः भवेत्। ज्ञानमहोदधिः इत्यत्र रूपकम्, महोदधिरिव महोदधिः इति उपमा।

**यः शिवः स गुरुर्ज्ञेयो यो गुरुः स शिवः स्मृतः।**
**न तयोरन्तरं कुर्यात् ज्ञानावाप्तौ महामतिः।।२१।।**

यः शिवः सः एव गुरुः इति ज्ञेयः, यः गुरुः स एव शिवः इति स्मृतः, तस्मात् महामतिः शिवज्ञानसम्पन्नः स्वस्य ज्ञानावाप्तौ विषये शिवज्ञानस्य अवाप्तिविषये तयोः गुरुशिवयोः अन्तरं भेदं न कुर्यात्।

**हस्तपादादिसाम्येन नेतरैः सदृशं वदेत्।**
**आचार्यं ज्ञानदं शुद्धं शिवरूपतया स्थितम्।।२२।।**

ज्ञानदं शिवज्ञानप्रदायकं, शुद्धं निर्मलान्तःकरणयुक्तं शिवरूपतया शिवस्य स्वरूपत्वेन स्थितं शोभमानम् आचार्यं हस्तपादादिसाम्येन हस्तौ च पादौ च हस्तपादाः एते आदिभूते यस्य सः हस्तपादादिः तेन साम्येन हस्तपादादियुक्तत्वात् साम्यबुद्ध्या इतरैः सह सामान्यजनैः सह सदृशं सन्तं न वदेत् समानं न वदेत्।

**आचार्यस्यावमानेन श्रेयःप्राप्तिर्विहन्यते।**
**तस्मान्निःश्रेयसप्राप्त्यै पूजयेत् तं समाहितः।।२३।।**

आचार्यस्य अवमानेन अवमानकरणेन श्रेयःप्राप्तिः श्रेयसः प्राप्तिः भोगमोक्षादिरूपश्रेयसः प्राप्तिः विहन्यते विनष्टा भवति, तस्मात् निःश्रेयसप्राप्त्यै निःश्रेयसः प्राप्त्यै समाहितः एकाग्रचित्तः सन् तमाचार्यं पूजयेत्।

**गुरुभक्तिविहीनस्य शिवभक्तिर्न जायते।**
**ततः शिवे यथा भक्तिस्तथा भक्तिर्गुरावपि।।२४।।**

गुरुभक्तिविहीनस्य गुरौ भक्तिः गुरुभक्तिः तया विहीनस्य रहितस्य शिवभक्तिः न जायते, ततः तस्मात् कारणात् शिवे विषये यथा भक्तिः क्रियते तथैव गुरौ अपि विषये भक्तिः क्रियते।

**जायते**— जनी-प्रादुर्भावे, लट्।

*॥इति गुरुमहत्त्वस्थलम्॥*

## (२७) लिङ्गमाहात्म्यस्थलम्

**गुरुमाहात्म्ययोगेन निजज्ञानातिरेकतः।**
**लिङ्गस्यापि च माहात्म्यं सर्वोत्कृष्टं विभाव्यते॥२५॥**

गुरुमाहात्म्य योगेन गुरोः महात्म्यस्य योगेन निजज्ञानातिरेकतः निजस्य ज्ञानं निजज्ञानं तस्य अतिरेकात् परिपूर्णत्वकारणात् लिङ्गस्यापि च माहात्म्यं सर्वोत्कृष्टम् इति विभाव्यते।

**विभाव्यते**— वि+भू - णिचि, कर्मणि लट्।

**शिवस्य बोधलिङ्गं यद् गुरुबोधितचेतसा।**
**तदेव लिङ्गं विज्ञेयं शाङ्करं सर्वकारणम्॥२६॥**

शिवस्य बोधलिङ्गं यत् चिन्मयात्मकं यल्लिङ्गं वर्तते सर्वकारणं सर्वस्य कारणं कारणीभूतं शाङ्करं शङ्करस्य इदं शाङ्करं लिङ्गं तदेव लिङ्गमिति गुरुबोधितचेतसा गुरुणा बोधितं चेतः तेन गुरुणा बोधितेन चेतसा उपदिष्टेन मनसा एव विज्ञेयं विशेषेण ज्ञातुं योग्यं भवति। गुरोः यथा माहात्म्यं तथैव लिङ्गस्यापि माहात्म्यं ज्ञेयम्।

**परं पवित्रममलं लिङ्गं ब्रह्म सनातनम्।**
**शिवाभिधानं चिन्मात्रं सदानन्दं निरङ्कुशम्॥२७॥**

परं परमोत्कृष्टम्, पवित्रं परमपवित्रम्, अमलं परिशुद्धम् सनातनं नित्यम्, ब्रह्म ब्रह्मात्मकम्, शिवाभिधानं शिवः इति अभिधानयुक्तम् चिन्मात्रम् ज्योतिःस्वरूपम्, सदानन्दं सदा शिवानन्दात्मकम् निरङ्कुशम् अङ्कुशरहितं सर्वतन्त्रस्वतन्त्रं लिङ्गं वर्तते।

**कारणं सर्वलोकानां वेदानामपि कारणम्।**
**पूरणं सर्वतत्त्वस्य तारणं जन्मवारिधेः॥२८॥**

सर्वलोकानां सर्वे च ते लोकाश्च सर्वलोकाः तेषां सर्वस्य जगतः कारणं

कारणीभूतम्, वेदानामपि ऋग्वेदादि-चतुर्वेदानामपि कारणम्, सर्वतत्त्वस्य सर्वं च तत् तत्त्वं च सर्वतत्त्वं तस्य शिवादिभूम्यन्तस्य षट्त्रिंशतः अपि तत्त्वस्य पूरणं पूरकम्, जन्मवारिधेः जननमरणरूपात् समुद्रात् तारणम् उडुपवत् उत्तारकम् लिङ्गम्।

कारणत्वादिधर्माणां लिङ्गे समारोपात् रूपकध्वनिः।

**ज्योतिर्मयमनिर्देश्यं योगिनामात्मनि स्थितम्।**
**कथं विज्ञायते लोके महागुरुदयां विना?।।२९।।**

ज्योतिर्मयं ज्योतिः - स्वरूपकम्, अनिर्देश्यं निर्देशयितुं न शक्यम्, योगिनां योगिजनानाम् आत्मनि हृदयाकाशे स्थितं स्थिरतया वर्तमानम् एतादृशं महालिङ्गं लोके महागुरुदयां विना महागुरोः दयां विना कथं वा विज्ञायते? कथं वा विज्ञातुं शक्यते? गुरुणा एव केवलं ज्ञातव्यम्।

**ब्रह्मणा विष्णुना पूर्वं यल्लिङ्गं ज्योतिरात्मकम्।**
**अपरिच्छेद्यमभवत् केन वा परिचोद्यते?।।३०।।**

पूर्वं पुराकाले ज्योतिरात्मकं ज्योतिःस्वरूपकं यल्लिङ्गं ब्रह्मणा हंसरूपिणा ब्रह्मणा, विष्णुना वराहरूपिणा विष्णुना च अपरिच्छेद्यम् परिच्छेत्तुं ज्ञातुं न योग्यं सत् अभवत् तादृशं लिङ्गं केन वा परिचोद्यते केन वा विज्ञायते? न केनापि परिज्ञातुं शक्यते।

**परिचोद्यते** — परि+चुद् - संचोदने, कर्मणि लट्।

**बहुनात्र किमुक्तेन? लिङ्गं ब्रह्म सनातनम्।**
**योगिनो यत्र लीयन्ते मुक्तपाशनिबन्धनाः।।३१।।**

अत्र विषये बहुना उक्तेन किम्? यत्र लिङ्गे मुक्तपाशनिबन्धनाः पाशस्य निबन्धनं पाशनिबन्धनं मुक्तं पाशनिबन्धनं यैः ते अविद्यादिपञ्चक्लेशानाम् आणवादिमलत्रयाणाम् आध्यात्मिकादिमलत्रयस्य च पाशस्य निबन्धनेन मुक्ताः योगिनः शिवयोगसम्पन्नाः लीयन्ते तादात्म्यं प्राप्नुवन्ति तदेव लिङ्गं सनातनं ब्रह्म वर्तते।

**पीठिका परमा शक्तिर्लिङ्गं साक्षात् परः शिवः।**
**शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते।।३२।।**

परमा शक्तिः सर्वोत्कृष्टा क्रियाशक्तिरेव पीठिका पीठम्, लिङ्गं तु साक्षात् परः शिवः परमेश्वरः, इत्येवं शिवशक्तिसमायोगं शिवश्च शक्तिश्च शिवशक्ती तयोः समायोगः तादात्म्यम् यस्मिन् तद् एव लिङ्गं तच्च-लिङ्गं विश्वम् इत्युच्यते।

'क्रियाशक्त्यात्मकं पीठं ज्ञानशक्त्यात्मनः प्रभोः।'

'ज्ञानकर्मेन्द्रियैर्विश्वं चित्क्रियालिङ्गरूपकम्।' इत्यादि प्रमाणम्।

**ब्रह्मादयः सुराः सर्वे मुनयः शौनकादयः।**
**शिवलिङ्गार्चनादेव स्वं स्वं पदमवाप्नुयुः।।३३।।**

ब्रह्मादयः सर्वे सुराः ब्रह्मा विष्णुः इत्यादयः सर्वे देवाः पूजनादेव फलरूपेण स्वं स्वं पदं स्थानम् अवाप्नुयुः प्राप्तवन्तः।

**अवाप्नुयुः**— अव+आप्लृ - व्याप्तौ, विधिलिङ्।

**विश्वाधिपत्वमीशस्य लिङ्गमूर्तेः स्वभावजम्।**
**अनन्यदेवसादृश्यं श्रुतिराह सनातनी।।३४।।**

लिङ्गमूर्तेः ईशस्य विश्वाधिपत्वं विश्वस्य अधिपत्वं स्वभावजं स्वाभाविकम्, तथैव अनन्यदेव-सादृश्यम् अन्यैः देवैः सह सादृश्यं नास्ति इति अनन्यदेवसादृश्यमपि स्वतः सिद्धमिति सनातनी श्रुतिः आह।

*।।इति लिङ्गमाहात्म्यस्थलम्।।*

## (२८) जङ्गममाहात्म्यस्थलम्

**गुरुशिष्यसमारूढलिङ्गमाहात्म्य - सम्पदः।**
**सर्वं चिद्रूपविज्ञानाज्जङ्गमाधिक्यमुच्यते।।३५।।**

गुरुशिष्यसमारूढलिङ्गमाहात्म्य - सम्पदः - गुरुश्च शिष्यश्च गुरुशिष्यौ तयोः समारूढं च तत् लिङ्गं च गुरुशिष्यसमारूढलिङ्गम् तस्य माहात्म्यमेव सम्पत् तस्याः अपेक्षया-गुरुशिष्ययोः मध्यगतस्य लिङ्गस्य माहात्म्यवैभवापेक्षया अर्थात् पूर्वोक्तलिङ्गमाहात्म्यापेक्षया सर्वं विश्वजातं चिद्रूपविज्ञानात् चित्क्रियारूपत्वात् जङ्गमाधिक्यं जङ्गममाहात्म्यस्थलम् उच्यते। अर्थात्

गुरुलिङ्गयोः माहात्म्यवत् जङ्गमस्यापि माहात्म्यं सर्वोत्कृष्टम्।

**जानन्त्यतिशयाद्ये तु शिवं विश्वप्रकाशकम्।**
**स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः।।३६।।**

विश्वप्रकाशकं स्वकीयज्ञानक्रियाशक्तिभ्यां विश्वस्य प्रकाशकं शिवं ये तु जङ्गमाः अतिशयात् आधिक्येन स्वस्वरूपतया स्वस्य स्वरूपं स्वस्वरूपं तस्य भावः स्वस्वरूपता तया स्वाभिन्नत्वेन जानन्ति दृढतरनिश्चयेन अवगच्छन्ति ते एव जङ्गमाः इति कीर्तिताः।

**ये पश्यन्ति जगज्जालं चिद्रूपं शिवयोगतः।**
**निर्धूतमलसंस्पर्शास्ते स्मृताः शिवयोगिनः।।३७।।**

ये जङ्गमाः जगज्जालं जगतः जालं सर्वं जगत् शिवयोगतः स्वकीय-शिवयोगात् चिद्रूपं चित्क्रियास्वरूपमिति पश्यन्ति जानन्ति निर्धूतमलसंस्पर्शाः निर्धूतः मलानां संस्पर्शः यैः तादृशाः सन्तः समग्रतया मलत्रय-रहिताः सन्तः ते शिवयोगिनः इति स्मृताः कीर्तिताः।

**घोरसंसारतिमिरपरिध्वंसन - कारणम्।**
**येषामस्ति शिवज्ञानं ते मताः शिवयोगिनः।।३८।।**

घोरसंसारतिमिरपरिध्वंसनकारणं - घोरश्चासौ संसारश्च घोरसंसारः स एव तिमिरं घोर-संसारतिमिरं तस्य परिध्वंसने कारणं घोरसंसाररूपगाढान्धकारस्य निर्मूलने मुख्यं कारणम् यत् शिवज्ञानमेतत् येषाम् अस्ति ते एव शिवयोगिनः इति मताः। संसारतिमिर-इत्यत्र रूपकम्।

**जितकामा जितक्रोधा मोहग्रन्थिविभेदिनः।**
**समलोष्टाश्मकनकाः साधवः शिवयोगिनः।।३९।।**

जितकामाः जितः कामः यैः ते जितमन्मथाः, जितक्रोधाः जितः क्रोधः यैः ते क्रोधरहिताः, मोहग्रन्थिविभेदिनः मोहः एव ग्रन्थिः तस्य विभेदने छेदने समर्थाः, समलोष्ठाश्मकनकाः लोष्ठं च अश्म च कनकं च लोष्ठाश्मकनकानि समानि लोष्ठाश्मकनकानि येषां ते मृत्पिण्डशिलाखण्डकनकेषु समानबुद्धियुक्ताः, साधवः सत्त्वगुणभूयिष्ठाः एतादृशाः सन्ति शिवयोगिनः।

**समाः शत्रौ च मित्रे च साक्षात्कृतशिवात्मकाः।**
**निःस्पृहा निरहङ्कारा वर्तन्ते शिवयोगिनः।।४०।।**

शत्रो च मित्रे च विषये समाः, साक्षात्कृतशिवात्मकाः साक्षात्कृतः शिवस्य आत्मा स्वरूपं यैः ते प्रत्यक्षीकृतशिवस्वरूपाः, निःस्पृहाः निर्गता स्पृहा येभ्यः ते आशारहिताः, निरहङ्काराः निर्गतः अहङ्कारः यैः ते अहङ्काररहिताः इत्येवंभूताः वर्तन्ते शिवयोगिनः।

**दुर्लभं हि शिवज्ञानं दुर्लभं शिवचिन्तनम्।**
**येषामेतद्द्वयं चास्ति ते हि साक्षाच्छिवात्मकाः।।४१।।**

लोके शिवज्ञानं दुर्लभं हि, शिवचिन्तनमपि दुर्लभं हि! एतत् द्वयं च शिवस्य ज्ञानं शिवस्य चिन्तनं च येषां अस्ति ते साक्षात् शिवात्मकाः शिवस्वरूपाः हि।

**पादाग्ररेणवो यत्र पतन्ति शिवयोगिनाम्।**
**तदेव सदनं पुण्यं पावनं गृहमेधिनाम्।।४२।।**

यत्र गृहमेधिनां गृहैः मेधन्ते इति गृहमेधिनः तेषां गृहमेधिनां संसारिणां सदने शिवयोगिनां पादाग्ररेणवः पादधूलयः पतन्ति तत् एव सदनं गृहमेधिनां तदेव गृहं तावत् पुण्यं पुण्यभाक् पावनं पवित्रं च भवति।

**पतन्ति**— पत्लृ-गतौ, लट्।

**सर्वसिद्धिकरं पुंसां दर्शनं शिवयोगिनाम्।**
**स्पर्शनं पापशमनं पूजनं मुक्ति - साधनम्।।४३।।**

शिवयोगिनां दर्शनं तु पुंसां सर्वसिद्धिकरं सर्वां सिद्धिं करोति इति सर्व-सिद्धिकरः, तं सर्व-सिद्धिकरं वर्तते, तेषां स्पर्शनं तावत् पापस्य शमनं करोति, पूजनं तु मुक्तिसाधनं मुक्तेः साधनं वर्तते।

**महतां शिवतात्पर्य - वेदिनामनुमोदिनाम्।**
**किं वा फलं न सिद्ध्येत सम्पर्काच्छिवयोगिनाम्?।।४४।।**

शिवतात्पर्यवेदिनां शिवस्य तात्पर्यं वेत्तुं शीलं येषां तेषां शिवस्य रहस्याभिप्रायवेदिनाम् अनुमोदिनाम् अनुमोदन्ते इति अनुमोदिनः तेषाम्

शिवसुखस्य अनुमोदिनाम् महतां महात्मनां शिवयोगिनां सम्पर्कात् किं वा फलं न सिद्ध्येत? सर्वमपि फलं सिद्ध्यत्येव।

*।।इति जङ्गममाहात्म्यस्थलम्।।*

## (२९) भक्तमाहात्म्यस्थलम्

**गुरोर्लिङ्गस्य माहात्म्यकथनाच्छिवयोगिनाम्।**
**सिद्धं भक्तस्य माहात्म्यं तथाप्येष प्रशस्यते।।४५।।**

गुरोः लिङ्गस्य शिवयोगिनां च माहात्म्यकथनात् माहात्म्यस्य कथनात् भक्तस्य माहात्म्यं सिद्धमेव, तथापि एषः भक्तः शास्त्रेऽस्मिन् प्रशस्यते।

**प्रशस्यते**— प्र+शशु-इच्छायाम्, कर्मणि लट्।

प्र+शस् — प्रशंसार्थकः।

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।' इति नियमः।

**ये भजन्ति महादेवं परमात्मानमव्ययम्।**
**कर्मणा मनसा वाचा ते भक्ता इति कीर्तिताः।।४६।।**

परमात्मानम् अव्ययं नाशरहितं महादेवं ये भक्ताः कर्मणा बाह्यपूजादिना मनसा ध्यानादिमानसपूजादिना वाचा स्तुतिरूपादिना ये भजन्ति सेवां कुर्वन्ति ते भक्ताः इति कीर्तिताः।

**दुर्लभा हि शिवे भक्तिः संसारभयतारिणी।**
**सा यत्र वर्तते साक्षात् स भक्तः परिगीयते।।४७।।**

शिवे शिवविषये संसारभयतारिणी संसारस्य भयं तर्तुम् अस्याः शीलमस्तीति संसारभयतारिणी संसारभयनाशकी भक्तिः दुर्लभा हि, सा भक्तिः यत्र यस्मिन् भक्ते साक्षात् मूर्तिमद्रूपेण वर्तते सः भक्तः इति परिगीयते= कथ्यते।

**परिगीयते** – परि+गै - शब्दे, कर्मणि लट्।

**किं वेदैः किं ततः शास्त्रैः किं यज्ञैः किं तपोव्रतैः।**
**नास्ति चेच्छाङ्करी भक्तिर्देहिनां जन्मरोगिणाम्।।४८।।**

जन्मरोगिणां जन्म एवं रोगः अस्ति येषां तेषां भवरोगेण सन्तप्तानां देहिनां मनुष्याणां यदि शाङ्करी भक्तिः नास्ति चेत् तदा वेदैः किम् चतुर्वेदानामध्ययनैः किं प्रयोजनम्? ततः शास्त्रैः किम् वेदाद्यर्थप्रतिपादकशास्त्राध्ययनैः किं प्रयोजनम्? यज्ञैः किम् अग्निष्टोमादियज्ञाचरणैः किं प्रयोजनम्? तपोव्रतैश्च किम् कृच्छ्रचान्द्रायणादिभिः तपोभिः उपवासादिव्रतैश्च किं प्रयोजनम्? न किमपि प्रयोजनम्, एतत्सर्वं व्यर्थं भक्तिहीनत्वात्। शिवभक्तिं विना वेदादीनां कैमर्थ्यस्य वर्णनात् अत्र पञ्चमः प्रतीपालङ्कारः।

'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते।' इति लक्षणम्।

**शिवभक्तिविहीनस्य सुकृतं चापि निष्फलम्।**
**विपरीतफलं च स्याद् दक्षस्यापि महाध्वरे।।४९।।**

शिवभक्तिविहीनस्य शिवभक्त्या रहितस्य मनुष्यस्य सुकृतं च अपि इतः पूर्वं सम्पादितं सुकृतमपि निष्फलं न केवलं फलशून्यं भवति, परं विपरीतफलं च विरुद्धफलमेव च स्यात्, यथा महाध्वरे दक्षस्य न केवलं तस्य सुकृतस्य नाशः परं शिरश्छेदरूपं विपरीतफलमपि स्यात् तथा शिवभक्तिहीनस्य सम्भवति।

अत्र तृतीयः विषमालङ्कारः, लक्षणं च—

'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्'— इति। यथा दक्षस्य न केवलं सुकृतनाशः विरीतफलं च स्यात् तथैव शिवभक्तिहीनस्य न केवलं सुकृतनाशः विपरीतफलमपि स्यात् - इति उपमाध्वनिः।

**अत्यन्तपापकर्मापि शिवभक्त्या विशुद्ध्यति।**
**चण्डो यथा पुरा भक्त्या पितृहापि शिवोऽभवत्।।५०।।**

अत्यन्तपापकर्मा अपि अत्यन्तं पापं कर्म यस्य सः अत्यन्तपापकर्मा अत्यन्तपापकर्मकर्ता अपि शिवभक्त्या विशुद्ध्यति परिशुद्धो भवति, यथा पुरा भक्त्या शिवस्य भक्त्या चण्डः पितृहा पितरं हन्ति इति पितृहा पितृघातकः सन्नपि शिवः शिवगणाधीशः अभवत्, तथैव पापकर्मा अपि भक्त्या विशुद्ध्यति।

अत्र वाक्यार्थोपमालङ्कारः।

**सुकृतं दुष्कृतं चापि शिवभक्तस्य नास्ति हि।**
**शिवभक्तिविहीनानां कर्मपाशनिबन्धनम्।।५१।।**

शिवभक्तस्य सुकृतं वा पुण्यकर्म वा दुष्कृतं चापि वा दुष्टकर्म वा अपि नास्ति हि, किन्तु, शिवभक्तिविहीनानां शिवस्य भक्तिः शिवभक्तिः तया विहीनानां शिवभक्ति-रहितानां तु कर्मपाशनिबन्धनं कर्मणः पाशः अथवा कर्म एव पाशः कर्मपाशः तस्य निबन्धनं नितरां बन्धनं तु वर्तते।

**शिवाश्रितानां जन्तूनां कर्मणा नास्ति सङ्गमः।**
**वाजिनां दिननाथस्य कथं तिमिरजं भयम्?।।५२।।**

शिवाश्रितानां शिवम् आश्रिताः ये तेषां शिवं शरणं प्रपन्नानां जन्तूनां मनुष्याणां कर्मणा सङ्गमः कर्मसम्पर्कः नास्ति। यतः, दिननाथस्य सूर्यस्य वाजिनाम् अश्वानां तिमिरजं तिमिरेण जातम् भयम् अन्धकारभयं कथं स्यात्? नैव स्यात्।

पूर्वार्धः सामान्यवाक्यम् उत्तरार्धः विशेषवाक्यम्, विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासालङ्कारः। लक्षणम्— 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति। यथा दिननाथस्य वाजिनाम् अन्धकारभयं नास्ति तथैव शिवाश्रितानां कर्मणः भयं नास्तीति उपमाध्वनिः।

**निरोद्धुं न क्षमं कर्म शिवभक्तान् विशृङ्खलान्।**
**कथं मत्तगजान् रुन्धेच्छृङ्खला बिसतन्तुजा?।।५३।।**

विशृङ्खलान् विगता शृङ्खला येषां तान् त्रिविधदीक्षया मलत्रयरहितत्वात् संसारबन्धनरहितान् शिवभक्तान् कर्म पापपुण्यादिकं कर्म निरोद्धुं न क्षमं न समर्थम्, बिसतन्तुजा बिसतन्तुभिः जाता कमलानालैः उत्पन्ना शृङ्खला रज्जुः मत्तगजान् कथं रुन्धेत्? निरोद्धुं नैव शक्ता।

पूर्वार्धः सामान्यवाक्यम् उत्तरार्धः विशेषवाक्यम् विशेषेण सामान्यस्य समर्थनात् अर्थान्तरन्यासालङ्कारः? यथा बिसतन्तुजा शृङ्खला गजान् निरोद्धुं न क्षमा तथैव शिवभक्तान् कर्म निरोद्धुं न क्षमम् - इति उपमाध्वनिः।

**रुन्धेत्** — रुधिर्-आवरणे, विधिलिङ्।

**ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव वा।**
**अन्त्यजो वा शिवे भक्तः शिववन्मान्य एव सः।।५४।।**

ब्राह्मणः यदि वा क्षत्रियः वैश्यः वा शूद्रः वा अन्त्यजः वा यः कोऽपि वा सः सदि शिवेभक्तः स्यात् चेत् सः शिववत् मान्यः एव।

**शिवभक्तिसमावेशे क्व जातिपरिकल्पना?।**
**इन्धनेष्वग्निदग्धेषु को वा भेदः प्रकीर्त्यते?।।५५।।**

शिवभक्तिसमावेशे शिवभक्तेः समावेशे सति शिवभक्तौ सम्प्राप्तायां सत्याम् जातिपरिकल्पना जातेः परिकल्पना क्व? नैव जाति-परिकल्पना। यथा च - इन्धनेषु काष्ठेषु अग्निदग्धेषु अग्निना दग्धेषु सत्सु इन्धनभस्मनोः को वा भेदः प्रकीर्त्यते? नैव भेदः। अत्रापि अर्थान्तरन्यासालङ्कारः।

यथा इन्धनेषु अग्निदग्धेषु सत्सु भेदः न दृश्यते तथैव शिवभक्तिसमावेशे जातिभेदः न दृश्यते इति उपमाध्वनिः। **प्रकीर्त्यते** — प्र+कृत-सुंशब्दने, कर्मणि लट्।

**शुद्धा नियमसंयुक्ताः शिवार्पित-फलागमाः।**
**अर्चयन्ति शिवं लोके विज्ञेयास्ते गणेश्वराः।।५६।।**

लोके अस्मिन् ये च जनाः शुद्धाः दीक्षया परिशुद्धाः, नियम-संयुक्ताः शिवव्रतादिनियमैः सुसम्पन्नाः, शिवार्पितफलागमाः शिवे अर्पितः पापपुण्यादिरूपफलस्य आगमः यैः ते शिवार्पितपापपुण्यादिफलप्राप्तिकाः सन्तः शिवार्पितार्चनफलवन्तः सन्तः शिवम् अर्चयन्ति ते एव गणेश्वराः इति विज्ञेयाः।

**अर्चयन्ति** — अर्च्-पूजायाम्, लट्।

*।।इति भक्तमाहात्म्यस्थलम्।।*

## (३०) शरणमाहात्म्यस्थलम्

**गुरुलिङ्गादिमाहात्म्यबोधान्वेषण - सङ्गतः।**
**सर्वात्मना शिवापत्तिः शरणस्थानमुच्यते।।५७।।**

गुरुलिङ्गादिमाहात्म्य-बोधान्वेषणसङ्गतः गुरुश्च लिङ्गं च आदि येषां तेषां गुरुलिङ्गादीनाम् अर्थात् गुरुलिङ्गजङ्गमानां भक्तानां च पूर्वोक्तानां माहात्म्यस्य बोधः परिज्ञानं तस्य अन्वेषणं तस्य सङ्गतः सम्बन्धात् तेषां चतुर्णामपि माहात्म्यस्य सम्बन्धात् सर्वात्मना नानाप्रकारेणापि या शिवापत्तिः शिवस्य आपत्तिः शिवः एक एव संरक्षकः इति बुद्धेः प्रपन्नता प्राप्तिः एव शरणस्थानम् शरणस्थलम् इत्युच्यते।

**ब्रह्मादिविबुधान् सर्वान् मुक्त्वा प्राकृतवैभवान्।**
**प्रपद्यते शिवं यत्तु शरणं तदुदाहृतम्।।५८।।**

प्राकृतवैभवान् प्रकृतिजन्यः सम्पत्तिमतः ब्रह्मादिविबुधान् सर्वान् ब्रह्मविष्ण्वादिदेवान् सर्वानपि मुक्त्वा परित्यज्य यत् यस्मात् कारणात् शिवमेव केवलं प्रपद्यते प्रपन्नत्वेन आश्रयते तत्तु शरणं शरणस्थलम् इति उदाहृतम्।

**शरण्यः सर्वभूतानां शङ्करः शशिशेखरः।**
**सर्वात्मना प्रपन्नस्तं शरणागत उच्यते।।५९।।**

शङ्करः शं करोति इति मङ्गलकरः शशिशेखरः शशी शेखरे यस्य सः चन्द्रशेखरः शिवः सर्वभूतानां सर्वेषां प्राणिनां शरण्यः शरणे साधुः संरक्षकः संरक्षणे समर्थः इति बुद्ध्या यः सर्वात्मना तं शिवं प्रपन्नः शरणं गतः सः शरणागतः इति उच्यते।

**विमुक्तभोगलालस्यो देवतान्तरनिःस्पृहः।**
**शिवमभ्यर्थयन् मोक्षं शरणार्थीति गीयते।।६०।।**

विमुक्तभोगलालस्यः लालसायाः भावः लालस्यं भोगानां लालस्यं भोगलालस्यं विमुक्तं भोगलालस्यं येन सः विमुक्तभोगलालस्यः विमुक्तसर्वभोगलम्पटत्ववान्, देवतान्तरनिःस्पृहः अन्या देवता देवतान्तरं तत्र निःस्पृहः ब्रह्मविष्ण्वादिदेवतानां पदव्यामनासक्तः सन् यः मोक्षं लिङ्गाङ्गसामरस्यरूपं मोक्षं मोक्षार्थं शिवम् अभ्यर्थयन् प्रार्थयन् सन् शरणार्थी इति गीयते कथ्यते।

**ये प्रपन्ना महादेवं मनोवाक्कायकर्मभिः।**
**तेषां तु कर्मजातेन किं वा देवादितर्पणैः?।।६१।।**

ये जनाः मनोवाक्कायकर्मभिः मनश्च वाक्च कायश्च कर्म च मनोवाक्कायकर्माणि तैः मनसा ध्यानरूपेण वाचा स्तोत्ररूपेण कायेन पूजादिसेवारूपेण कर्मणा देवसान्निध्यगमन-पूजाद्रव्याद्याहरणादिना महादेवं प्रपन्नाः शरणागताः भवन्ति तेषां तु कर्मजातेन यज्ञादिकर्मसमुदायेन किं वा प्रयोजनम्? अथवा देवादितर्पणैर्वा किं प्रयोजनम्? न किमपि।

**सर्वेषामपि यज्ञानां क्षयः स्वर्गः फलायते।**
**अक्षयं फलमाप्नोति प्रपन्नः परमेश्वरम्।।६२।।**

सर्वेषामपि यज्ञानां ज्योतिष्टोमादीनां यज्ञानां क्षयः आचरणं तावत् अथवा क्षणिकः नाशकः स्वर्गः फलायते फलवदाचरति, किन्तु, परमेश्वरं प्रपन्नः शरणं प्राप्तः अक्षयं नाशरहितं फलम् आप्नोति।

**आप्नोति** — आप्लृ - व्याप्तौ, लट्।

**प्रयत्नपारिजातस्य भवस्य परमात्मनः।**
**प्रपत्त्या किं न जायेत पापिनामपि देहिनाम्?।।६३।।**

प्रपन्नपारिजातस्य प्रपन्नानां पारिजातः यः तस्य शरणं प्राप्तानां कल्पवृक्षवत् सकलेष्टार्थप्रदातुः परमात्मनः भवस्य शिवस्य प्रपत्त्या शरणागत्या पापिनां पापिष्ठानां देहिनामपि किं न जायेत? सर्वमपि अवश्यं जायेत एव।

**जायेत**— जनी-प्रादुर्भावे, विधिलिङ्। प्रपन्नपारिजातस्य इत्यत्र रूपकम् शिवे पारिजातस्य समारोपणात्।

**प्रपन्नानां महादेवं परिपक्वान्तरात्मनाम्।**
**जन्मैव जन्मनान्येषां वृथा जननसङ्गिनाम्।।६४।।**

महादेवं प्रपन्नानां शरणं प्राप्तानाम् परिपक्वान्तरात्मनाम् परिपक्वः अन्तरात्मा येषां तेषां परिशुद्धान्तःकरणानां पुंसां जन्म एव जन्म अन्येषां जननसङ्गिनाम् जननमरणभाजाम् इतरेषां जन्म न जन्म वृथा तज्जन्म। अत्र जन्मशब्दः शब्दशक्तिमूलध्वन्यात्मकः।

**दुर्लभं मानुषं प्राप्य जननं ज्ञानसाधनम्।**
**ये न जानन्ति देवेशं तेषामात्मा निरर्थकः।।६५।।**

दुर्लभं मानुषं मनुष्यस्य इदं मानुषं जननं प्राप्य ज्ञानसाधनं शिवज्ञानस्य साधनं मूलकारणं देवेशं देवानामीश्वरम् ये न जानन्ति, तेषाम् आत्मा निरर्थकः व्यर्थः एव।

**तत्कुलं हि सदा शुद्धं सफलं तस्य जीवितम्।**
**यस्य चित्तं शिवे साक्षाद् विलीनमबहिर्मुखम्।।६६।।**

यस्य चित्तं शिवं शरणं प्राप्तस्य चित्तं तावत् साक्षात् प्रत्यक्षतः अबहिर्मुखं बहिर्मुखं यथा स्यात् तथा न भवति इति अबहिर्मुखं सत् विलीनं स्याच्चेत् तत्कुलं तस्य कुलं सदा हि शुद्धम्, तस्य जीवितं सफलमेवास्ति।

*।।इति शरणमाहात्म्यस्थलम्।।*

## (३१) प्रसादमाहात्म्यस्थलम्

**गुरुलिङ्गादिमाहात्म्यविशेषानुभवस्थितिः ।**
**यस्माच्छिवप्रसादात्स्यात्तदस्य महिमोच्यते।।६७।।**

गुरुलिङ्गादिमाहात्म्य-विशेषानुभवस्थितिः गुरुश्च लिङ्गं च आदिः येषां ते गुरुलिङ्गादयः तेषां माहात्म्यस्य यः विशेषानुभवः तस्य स्थितिः - गुरोः लिङ्गस्य जङ्गमस्य शिवभक्तस्य शिवशरणस्य च महत्त्वविशेषस्य या अनुभवस्थितिः यस्मात् शिवप्रसादात् स्यात् तत् तस्मात्कारणात् अस्य शिवप्रसादस्य महिमा माहात्म्यम् उच्यते।

**सदा लिङ्गैकनिष्ठानां गुरुपूजानुषङ्गिणाम्।**
**प्रपन्नानां विशुद्धानां प्रसीदति महेश्वरः।।६८।।**

सदा लिङ्गैकनिष्ठानां लिङ्गे एका निष्ठा येषां तेषां लिङ्गे एव केवलं चित्तैकाग्र्यं प्रपन्नानाम्, गुरुपुजानुषङ्गिणां गुरोः पूजा गुरुपूजा तस्याम् अनुषङ्गः अस्ति येषां तेषां सदा गुरुपूजायां निरतानां प्रपन्नानां शिवं शरणं प्राप्तानाम् विशुद्धानां च विशेषेण परिशुद्धानां च शिवभक्तानां विषये महेश्वरः प्रसीदति प्रसन्नो भवति।

**प्रसीदति–** प्र+शद्लृ - विशरणगत्यवसादनेषु, लट्।

**प्रसादोऽपि महेशस्य दुर्लभः परिकीर्त्यते।**
**घोरसंसारसन्तापनिवृत्तिर्येन जायते।।६९।।**

येन प्रसादेन घोरसंसारसन्तापनिवृत्तिः घोरश्चासौ संसारश्च घोरसंसारः तस्य सन्तापस्य निवृत्तिः नाशः जायते सम्भवति, सः महेशस्य प्रसादः अपि प्रसादस्तावत् दुर्लभः न सुलभः इति परिकीर्त्यते कथ्यते।

**परिकीर्त्यते** — परि+ कृत-संशब्दने, कर्मणि लट्।

**जायते**— जनी-प्रादुर्भावे, लट्।

**यज्ञास्तपांसि मन्त्राणां जपश्चिन्ता प्रबोधनम्।**
**प्रसादार्थं महेशस्य कीर्तितानि न संशयः।।७६।।**

यज्ञाः अग्निष्टोमादयो यागाः तपांसि क्लेशसाध्यानि तपांसि मन्त्राणां जपः, चिन्ता शिवस्य अनुसन्धानम्, प्रबोधनम् शिवाधिक्यज्ञानम् इत्यादीनि एतानि महेशस्य प्रसादार्थम् एव अनुग्रहार्थमेव कीर्तितानि कथितानि इत्यत्र न संशयः।

**प्रसादमूला सर्वेषां भक्तिरव्यभिचारिणी।**
**शिवप्रसादहीनस्य भक्तिश्चापि न सिद्ध्यति।।७७।।**

सर्वेषामपि जनानाम् अव्यभिचारिणी न व्यभिचरति इति अव्यभिचारिणी अनन्यगामिनी सती केवलं शिवे एव गामिनी सती प्रसादमूला प्रसादस्य मूला शिवप्रसादस्य मूलकारणम्। किन्तु शिवप्रसादहीनस्य शिवस्य प्रसादः तेन हीनस्य शिवानुग्रहापात्रस्य भक्तिश्चापि न सिद्ध्यति।

**सिद्ध्यति**— षिधु - संराद्धौ, निष्पत्तौ, लट्।

**गर्भस्थो जायमानो वा जातो वा ब्राह्मणोऽथवा।**
**अन्त्यजो वापि मुच्येत प्रसादे सति शाङ्करे।।७२।।**

शाङ्करे प्रसादे सति शङ्करस्य अनुग्रहे जाते सति, तदा गर्भस्थः मातृगर्भस्थः वा, जायमानः वा जननमुखो वा, जातो वा ब्राह्मणः वा अथवा अन्त्यजो वा अपि मुच्येत जननमरणबन्धनात् मुक्तः स्यात्।

**मुच्येत** — मुच्लृ - मोक्षणे, विधिलिङ्।

**ब्रह्माद्या विबुधाः सर्वे स्वस्वस्थाननिवासिनः।**
**नित्यसिद्धा भवन्त्येव प्रसादात् पारमेश्वरात्।।७३।।**

पारमेश्वरात् परमेश्वरस्य अयं पारमेश्वरः तस्मात् शैवात् प्रसादादेव ब्रह्माद्याः ब्रह्मविष्ण्वादयः सर्वे विबुधाः देवाः स्वस्वस्थान-निवासिनः स्वेषु स्वेषु स्थानेषु निवसन्तः सन्तः भवन्ति। स्वस्वसिद्धिं च प्राप्तवन्तः।

पारमेश्वरात् परमेश्वरात् आगतः पारमेश्वरः तस्मात्

पारमेश्वरात् इत्यपि विग्रहः, अयमेव साधुः।

**प्रसादे शाम्भवे सिद्धे परमानन्दकारणे।**
**सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः।।७४।।**

परमानन्दकारणे परमश्चासौ आनन्दश्च परमानन्दः तस्य कारणीभूते शाम्भवे प्रसादे शिवप्रसादे सिद्धे सति, तदा सर्वमपि विश्वं शिवमयमेव दृश्यते अत्र न संशयः।

**दृश्यते** - दृशिर् - प्रेक्षणे, कर्मणि लट्।

**संसारचक्रनिर्वाहनिमित्तं कर्म केवलम्।**
**प्रसादेन विना शम्भोर्न कस्यापि निवर्तते।।७५।।**

कस्य अपि सर्वस्यापि सामान्यजनस्य कर्म तावत् केवलं संसारचक्रनिर्वाहनिमित्तं संसारः एव चक्रं संसारचक्रं तस्य निर्वहणं तस्य निमित्तमेव वर्तते, इत्थं भूतं च कर्म शम्भोः प्रसादेन विना न निवर्तते नैव नश्यति।

**बहुनात्र किमुक्तेन नास्ति नास्ति जगत्त्रये।**
**समानमधिकं चापि प्रसादस्य महेशितुः।।७६।।**

अत्र प्रसादस्य महत्त्वविषये बहुना उक्तेन किम्? जगत्त्रयेऽपि महेशितुः प्रसादस्य शिवप्रसादस्य समानं वा वस्तु अपि च अधिकं वा वस्तु नास्ति।

**शिवप्रसादे सति योगभाजि**
**सर्वं शिवैकात्मतया विभाति।**
**स्वकर्ममुक्तः शिवभावितात्मा**
**स प्राणलिङ्गीति निगद्यतेऽसौ।।७७।।**

योगभाजि योगं भजते इति योगभाक् तस्मिन् स्वरूपहानिवृद्ध्यादिव्यतिरेकेण सजातीयसमरसरूपशिवयोगवति, शिवप्रसादे सति, सर्वं विश्वं शिवैकात्मतया शिवस्य एकात्मता शिवैकात्मता तया शिवाभेदेन विभाति प्रकाशते। तस्मात् शिवभावितात्मा शिवेन सह भावितः आत्मा यस्य सः शिवाभेदेन भावितस्वस्वरूपवान् सः असौ पूर्वोक्तः प्रसादी स्वकर्ममुक्तः स्वस्य कर्म स्वकर्म तेन मुक्तः स्वकर्मपाशादिबन्धनैः मुक्तः सन् प्राणलिङ्गी इति निगद्यते।

शिवप्रसादयोगे सिद्धे सति सर्वमपि विश्वं शिवाभिन्नमेव प्रतिभाति। अतः सोऽहम्भावशिवभावनया युक्तः अयं प्रसादी एव प्राणलिङ्गी इति व्यपदिश्यते इति भावः।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण प्रणीते सिद्धान्तशिखामणौ प्रसादिनः सप्तविधस्थलप्रसङ्गो नाम*

*॥एकादशः परिच्छेदः॥*

# ।।द्वादशः परिच्छेदः।।

## ।।प्राणलिङ्गिस्थलम्।।

### ।।अगस्त्य उवाच।।

**भक्तो माहेश्वरश्चेति प्रसादीति विबोधितः।**
**एक एव कथं चैष प्राणलिङ्गीति कथ्यते?।।१।।**

एकः एव व्यक्तिविशेषः भक्तः माहेश्वरः प्रसादीति च विबोधितः उपदिष्टः भवता। एषः एक एव कथं प्राणलिङ्गी इति कथ्यते व्यपदिश्यते? इति उपदिशतु।

### ।।श्रीरेणुक उवाच।।

**भक्तो माहेश्वरश्चैष प्रसादीति च कीर्तितः।**
**कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते।।२।।**

एषः गुरुणा दीयमान - शिवलिङ्गदीक्षासम्पन्नः अयं शिवभक्तः कर्मप्राधान्ययोगेन कर्मणः प्राधान्यं कर्मप्राधान्यम् तेन ज्ञानापेक्षया कर्मणः प्राधान्यस्य सम्बन्धात् शिवभक्तः — भक्तः भक्तस्थलापन्नः, माहेश्वरः माहेश्वरस्थलापन्नः, प्रसादी च इति प्रसादिस्थलापन्नः चेति कीर्तितः विश्रुतः। इदानीमस्य शिवभक्तस्य ज्ञानयोगः ज्ञानस्य योगः कथ्यते।

भक्तमहेशप्रसादिस्थलेषु कर्मणः प्राधान्यम् प्राणलिङ्गशरणैक्यस्थलेषु ज्ञानस्य प्राधान्यमिति भावः।

**लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।**
**तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते।।३।।**

चिदात्मकं चित् एव लिङ्गम्, तच्छक्तिः तस्य शिवलिङ्गस्य शक्तिः पीठिकारूपा शक्तिः प्राणरूपिणी प्रणवात्मकप्राणस्वरूपिणी वर्तते। तद्रूपलिङ्गविज्ञानी तस्य रूपं तद्रूपं तद्रूपं च तत् लिङ्गं च तद्रूपलिङ्गं तस्य

विज्ञानी तद्रूपलिङ्गविज्ञानी एव प्राणलिङ्गी इति कथ्यते। ब्रह्मात्मकं लिङ्गं तु शिवशक्तिमयात्मकम् शक्तेः प्राणरूपात्मकम्, अकारोकारमकारनादबिन्द्वात्मक-प्रणवात्मकं च सत् वर्तते।

**प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम्।**
**प्राणलिङ्गिस्थलं चादौ प्राणलिङ्गार्चनं ततः।।४।।**

**शिवयोगसमाधिश्च ततो लिङ्गनिजस्थलम्।**
**अङ्गलिङ्गिस्थलं चाथ क्रमादेषां भिदोच्यते।।५।।**

एतत् प्राणलिङ्गिस्थलं तावत् - प्राणलिङ्गिस्थलम्, प्राणलिङ्गार्चनस्थलम्, शिवयोगसमाधिस्थलम्, लिङ्गनिजस्थलम्, अङ्गलिङ्गिस्थलं चेति पञ्चविधम्। एषां पञ्चानामपि भेदानां लक्षणमेवम् उच्यते।

## (३२) प्राणलिङ्गिस्थलम्

**प्राणापानसमाघातात् कन्दमध्याद्यदुत्थितम्।**
**प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः।।६।।**

प्राणापानसमाघातात् प्राणश्च अपानश्च प्राणापानौ तयोः समाघातात् संघट्टनात्, तदा कन्दमध्यात् नाभिकमलकन्दमध्यात् यत् ज्योतिः उत्थितं तदेव प्राणलिङ्गमिति प्राणापान-निरोधिभिः प्राणापानयोः निरोधं ये जानन्ति तैः प्राणायामकुशलैः शिवयोगिभिः आख्यातम् उक्तम्।

**प्राणो यत्र लयं याति भास्करे तुहिनं यथा।**
**तत्प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः।।७।।**

प्राणः प्राणवायुः यत्र यस्मिन् शिवलिङ्गे भास्करे रवौ भासमाने सति तुहिनं हिमं यथा लयं याति तथैव लयं याति, तदेव प्राणलिङ्गम् इति उद्दिष्टम्, तद्धारी तस्य धारणशीलः तदाकृतिः तस्य आकृतिरिव आकृतिः यस्य सः तादृशप्राणलिङ्ग-स्वरूपवानेव स्यात्।

अत्र उपमालङ्कारः।

**ज्ञानिनां योगयुक्तानामन्तः स्फुरति दीपवत्।**
**चिदाकारं परब्रह्मलिङ्गमज्ञैर्न भाव्यते।।८।।**

चिदाकारं चिदेव आकारः यस्य तत् ज्योतीरूपम्, परब्रह्मलिङ्गं परब्रह्मात्मकं प्राणलिङ्गम् योगयुक्तानाम् योगेन युक्तानां शिवयोगसम्पन्नानां ज्ञानिनां शिवज्ञानिनाम् अन्तः हृदयकमले दीपवत् स्फुरति प्रकाशते, इदं तु अज्ञैः शिवदीक्षागुरूपदेशादिरहितैः न भाव्यते न अनुभूयते।

**भाव्यते** - भू - णिच्, कर्मणि लट्।

अत्र उपमालङ्कारः।

**अन्तः स्थितं परं लिङ्गं ज्योतीरूपं शिवात्मकम्।**
**विहाय बाह्यलिङ्गस्था विमूढा इति कीर्तिताः।।९।।**

ज्योतीरूपं ज्योतिःस्वरूपकं शिवात्मकं शिवस्वरूपकं च अन्तः स्थितं हृदयकमलमध्यस्थं परं लिङ्गं विहाय परित्यज्य बाह्यलिङ्गस्थाः बाह्यलिङ्गे तिष्ठन्ति इति बाह्यलिङ्गस्थाः इष्टलिङ्गातिरिक्तप्राकृतलिङ्गनिष्ठाः विमूढाः मूर्खाः इति कथिताः।

**संविल्लिङ्गपरामर्शी वाह्यवस्तु-पराङ्मुखः।**
**यः सदा वर्तते योगी प्राणलिङ्गी स उच्यते।।१०।।**

बाह्यवस्तुपराङ्मुखः बाह्यानि च तानि वस्तूनि च बाह्यवस्तूनि तेभ्यः पराङ्मुखः सन् तानि परित्यज्य संविल्लिङ्गपरामर्शी संविच्च तत् लिङ्गं च संविल्लिङ्गं तस्य परामर्शने तत्परः अभ्यन्तरे चिद्रूपप्राणलिङ्गविचारवान् सन् यः योगी शिवयोगसम्पन्नः सदा वर्तते अनुसन्दधाति सः प्राणलिङ्गी इति उच्यते।

**मायाविकल्पजं विश्वं हेयं सञ्चिन्त्य नित्यशः।**
**चिदानन्दमये लिङ्गे विलीनः प्राणलिङ्गवान्।।११।।**

विश्वं जगत् मायाविकल्पजं मायायाः विकल्पेन जातं मायासम्बन्धिगुणभेदैः सञ्जातम् अतएव हेयं निन्द्यम् इति सञ्चिन्त्य नित्यशः प्रतिनित्यं चिदानन्दमये सच्चिदानन्दात्मके लिङ्गे प्राणलिङ्गे विलीनः तल्लीनः सन् प्राणलिङ्गवान् इति कथ्यते।

**सत्ता प्राणमयी शक्तिः सद्रूपं प्राणलिङ्गकम्।**
**तत्सामरस्य-विज्ञानात् प्राणलिङ्गीति कथ्यते।।१२।।**

सत्ता सतः भावः सत्ता एषा सत्ता एव प्राणमयी शक्तिः - अस्मि इति उत्तमपुरुषान्तर्गतस्फूर्तिरेव चिल्लिङ्गस्य जीवनभूता शक्तिः वर्तते, सद्रूपं सतः रूपं सद्रूपं तादृशस्फुरणमयम् अस्मीति उत्तमपुरुषमयमेव प्राणलिङ्गकम् प्राणलिङ्गं वर्तते। तत्सामरस्यविज्ञानात् तयोः सामरस्यं तस्य विज्ञानात् तादृशशिवशक्त्योः अन्योन्यसमरसभावपरिज्ञानात् शिवयोगी प्राणलिङ्गी इति कथ्यते।

*।।इति प्राणलिङ्गिस्थलम्।।*

## (३३) प्राणलिङ्गार्चनस्थलम्

**अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम्।**
**पूज्यते भावपुष्पैर्यत् प्राणलिङ्गार्चनं हि तत्।।१३।।**

अन्तर्गतं हृदयकमलमध्यवर्ति चिदाकारं चित्स्वरूपात्मकं शिवमयं शिवस्वरूपात्मकं परं सर्वोत्कृष्टं च यल्लिङ्गम् तत् भावपुष्पैः अन्तःकरणवृत्तिविशेषरूपैः भावनामयैः पुष्पैः यत् पूज्यते तत् प्राणलिङ्गार्चनं हि।

**पूज्यते**—पूज-पूजायाम्, कर्मणि लट्।

**अन्तः - पवनसंस्पृष्टे सुसूक्ष्माम्बरशोभिते।**
**मूर्धन्यचन्द्र विगलत्सुधासेकातिशीतले ।।१४।।**

अन्तः पवनसंस्पृष्टे अन्तःपवनेन संस्पृष्टे अन्तःपवनेन प्राणवायुना संस्पृष्टे संव्याप्ते, सुसूक्ष्माम्बरशोभिते सूक्ष्मं च तत् अम्बरं सुसूक्ष्माम्बरं तेन शोभिते - अत्यन्तं सूक्ष्मदहराकाशेन परिशोभिते, मूर्धन्यचन्द्रविगलत्सुधा-सेकातिशीतले मूर्धन्यो यः चन्द्रः तस्मात् मूर्धन्यचन्द्रात् विगलन्ती या सुधा तस्याः सेकेन अतिशीतले मूर्धन्यस्थब्रह्मरन्ध्रे वर्तमानात् चन्द्रमण्डलात् स्रवन्त्याः सुधायाः सेकेन सेचनेन अतिशीतले अत्यन्तशीतलत्वयुक्ते, हृदालये, सूक्ष्माम्बर-मूर्धन्यचन्द्र-इत्यत्र रूपकम्।

**बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये।**
**पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम्।।**
**भावयित्वा सदाकालं पूजयेद् भाववस्तुभिः।।१५।।**

बद्धेन्द्रियनवद्वारे नव च तानि द्वाराणि नवद्वाराणि इन्द्रियाणि एव नवद्वाराणि इन्द्रियनवद्वाराणि बद्धानि च तानि इन्द्रियनवद्वाराणि बद्धेन्द्रियनवद्वाराणि यस्मिन् तस्मिन् बद्धेन्द्रियनवद्वारे श्रोत्रेन्द्रियादीनां नवद्वाराणां प्रतिबन्धनसामर्थ्यवति, बोधदीपे शिवज्ञानात्मक-प्रदीपे हृदालये हृदयकमलालये वर्तमाने पद्मपीठे द्वादशदलात्मिकायां कमलकर्णिकायां समासीनं प्रकाशमानं शिवविग्रहं शिवशारीरकं चिल्लिङ्गं चिद्रूपं प्राणलिङ्गं भावयित्वा गुरूपदिष्टप्रकारेण मनसि ध्यानपूर्वकं सम्भाव्य भाववस्तुभिः भावनाप्रधानैः मनसि एव कल्पितैः भावस्तुभिः सदाकालं पूजयेत्।

बोधदीपे, हृदालये, पद्मपीठे, चिल्लिङ्गम् - इत्यत्र रूपकम्, शिवविग्रहम् - शिवस्य विग्रहः इव विग्रहः तम् - इत्यत्र उपमा।

**क्षमाभिषेकसलिलं विवेकी वस्त्रमुच्यते।**
**सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका।।१६।।**

क्षमाभिषेकसलिलम् क्षमा एव अभिषेकार्थं सलिलम्, विवेकः नित्यानित्यवस्तुविवेकः एव वस्त्रम् उच्यते, सत्यमेव आभरणम् प्रोक्तम्, वैराग्यमेव इह च परत्र च क्रियमाणकर्मफलपरित्यागः एव पुष्पमालिका। सर्वत्र रूपकम्।

**गन्धः समाधिसम्पत्तिरक्षता निरहङ्कृतिः।**
**श्रद्धा धूपो महाज्ञानं जगद्भासि प्रदीपिका।।१७।।**

समाधिसम्पत्तिः समाधेः सम्पत्तिः चित्तैकाग्र्यमेव गन्धः, निरहङ्कृतिः एव अक्षता, जगद्भासि जगतः भासि प्रकाशकारणं यत् महाज्ञानं तद् एव प्रदीपिका प्रकाशमानः प्रदीपः। अत्रापि रूपकम्।

**भ्रान्तिमूलप्रपञ्चस्य नैवेद्यं तन्निवेदनम्।**
**मौनं घण्टापरिस्पन्दस् ताम्बूलं विषयार्पणम्।।१८।।**

भ्रान्तिमूलप्रपञ्चस्य भ्रान्तेः मूलं यः प्रपञ्चः तस्य-नाहमीश्वरः इत्यात्मकज्ञानस्य मूलकारणरूपस्य जगतः अथवा मदीयं शरीरम् इत्यादिकस्य अहङ्कारादिवर्गस्य यत् निवेदनं समर्पणं त्यागः तदेव नैवेद्यम्, मौनमेव घण्टापरिस्पन्दः घण्टानादसमर्पणम्, विषयार्पणं विषयाणाम् अर्पणम्

कामक्रोधलोभमोहादीनां समर्पणमेव ताम्बूलम्।

अत्रापि रूपकम्।

**विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना।**
**बुद्धेस्तदात्मिका शक्तिर्नमस्कारक्रिया मता।।१९।।**

विषयभ्रान्तिराहित्यं रहितस्य भावः राहित्यं विषयाणां भ्रान्तिः विषयभ्रान्तिः तस्याः राहित्यम् - शब्दस्पर्शादिरूपविषयाणां भोगादिरूपभ्रान्तिरहितत्वमेव तत्प्रदक्षिणकल्पना तस्य प्रदक्षिणकल्पना प्रदक्षिणक्रिया, बुद्धेः शिवज्ञानवृत्तेः तदात्मिका तस्य आत्मिका प्राणलिङ्गात्मिका शक्तिरेव नमस्कारक्रिया नमस्कारः इति मता अभिमता।

**एवं - विधैर्भावशुद्धैरुपचारैरदूषितैः।**
**प्रत्युन्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम्।।२०।।**

एवंविधैः भावशुद्धैः भावेन शुद्धैः अदूषितैः पवित्रैः उपचारैः मानसिकोपचारैः प्रत्युन्मुखमनाः प्रतिविरुद्धतया उत् उद्गते प्रवृत्ते मुखं च मनश्च मुखमनसी यस्य तादृशः सन् बाह्यप्रपञ्चात् उन्मुखीभूतमनस्कः सन् आन्तरं लिङ्गं प्राणलिङ्गं पूजयेत्।

श्रीशङ्कराचार्यैः विरचितं शिवमानसपूजास्तोत्रमत्र स्मर्तव्यम् - रत्नैः कल्पितमासनम् - इत्यादि।

*।।इतिप्राणलिङ्गार्चनस्थलम्।।*

## (३४) शिवयोगसमाधिस्थलम्

**अन्तःक्रियारतस्यास्य प्राणलिङ्गार्चनक्रमैः।**
**शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते।।२१।।**

प्राणलिङ्गार्चनक्रमैः प्राणलिङ्गस्य अर्चनं प्राणलिङ्गार्चनं तस्य क्रमैः क्षमाभिषेकादिरूपपूर्वोक्त-पूजाविशेषक्रमैः अन्तःक्रियारतस्य अन्तःक्रियायां रतस्य अन्तरङ्गपूजासु आसक्तस्य अस्य प्राणलिङ्गिनः शिवात्मध्यानसम्पत्तिः शिवश्च आत्मा च शिवात्मानौ तयोः ध्यानमेव सम्पत्तिः शिवात्मध्यानसम्पत्तिः - लिङ्गाङ्ग-रूपशिवजीवयोः समानरूपसामरस्यस्य अनुसन्धानरूपसम्पत्तिरेव

समाधिः इति कथ्यते।

**सर्वतत्त्वोपरिगतं सच्चिदानन्दभासुरम्।**
**स्वप्रकाशमनिर्देश्यमवाङ्मनसगोचरम् ।।२२।।**

सर्वतत्त्वोपरिगतं सर्वाणि च तानि तत्त्वानि च सर्वतत्त्वानि तेषामुपरिगतं शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वानि अतीत्य वर्तमानम्, सच्चिदानन्दभासुरम् - सच्चिदानन्दरूपेण मनोहरतया भासमानं स्वप्रकाशं स्वस्य प्रकाशेन शोभमानम्, अनिर्देश्यम् इदमेतत् इत्यादिरूपेण लक्षितुमशक्यम्, अवाङ्मनसगोचरम् वाक् च मानसं च वाङ्मानसे तयोः गोचरं न भवतीति अवाङ्मनसगोचरम् वाङ्मानसातीतम्।

**उमाख्यया महाशक्त्या दीपितं चित्स्वरूपया।**
**हंसरूपं परात्मानं सोऽहम्भावेन भावयेत्।।**
**तदेकतानतासिद्धिः समाधिः परमो मतः।।२३।।**

चित्स्वरूपया चिदेव स्वरूपं यस्याः सा तया चित्स्वरूपात्मिकया उमाख्यया उमाइत्याख्या यस्याः सा तया उमाख्यया महाशक्त्या स्वसमवेत-स्फुरणरूपया उमाख्यया महाशक्त्या दीपितं प्रकाशितम्, हंसरूपं परात्मानं परश्च असौ आत्मा च परात्मा तं परात्मानम् सोऽहम् भावेन सः अहम् इति भावनया भावयेत् चिन्तयेत्। तदेकतानतासिद्धिः तयोः एकतानतायाः सिद्धिः तयोः जीवेश्वरयोः समरसरूपैकत्वसिद्धिः एव परमः उत्कृष्टः समाधिः इति मतः अभिमतः।

**भावयेत्** – भू- णिच्, विधिलिङ्।

चित्स्वरूपया – इत्यत्र रूपकम्, **हंसरूपम्** - अत्र उपमा।

'हंसहंसः परमहंसः सोऽहं हंसः सोऽहं हंसः।'

देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः।

त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत्।।' इत्यादिश्रुतिः।

**परब्रह्म महालिङ्गं प्राणो जीवः प्रकीर्तितः।**
**तदेकभावमननात् समाधिस्थः प्रकीर्तितः।।२४।।**

महालिङ्गमेव परब्रह्म, तस्य परब्रह्ममहालिङ्गस्य प्राणः तु जीवः इति प्रकीर्तितः, तदेकभावमननात् तयोः एकभावस्य मननात् लिङ्गप्राणयोः शिवजीवयोः सामरस्यरूपैकभावस्य चिन्तनात् शिवयोगी समाधिस्थः समाधिस्थलापन्नः इति प्रकीर्तितः कथितः।

पूर्वार्धे रूपकालङ्कारः।

**अन्तः षट्चक्ररूढानि पङ्कजानि विभावयेत्।**
**ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः।।२५।।**

अन्तः जीवेश्वरयोः आश्रयीभूतस्य शरीरस्य मध्ये षट्चक्ररूढानि षट्चक्रोत्पन्नानि पङ्कजानि षट्कमलानि, मूलतः मूलात् आधारादारभ्य भ्रूमध्यान्तानि भ्रूमध्यमेव अन्तं येषां तानि भ्रूमध्यान्तानि ब्रह्मादिस्थानभूतानि ब्रह्मादीनां स्थानभूतानि इति विभावयेत् चिन्तयेत्।

**भ्रूमध्यादूर्ध्वभागे तु सहस्त्रदलमम्बुजम्।**
**भावयेत्तत्र विमलं चन्द्रबिम्बं तदन्तरे।।२६।।**

भ्रूमध्यात् ऊर्ध्वभागे ब्रह्मरन्ध्रे तु सहस्त्रदलम् अम्बुजं भावयेत् सहस्त्रशक्तिदलालङ्कृतं कमलं भावयेत्, तत्र तस्य सहस्त्रदलालङ्कृतकमलमध्ये विमलं परिशुद्धं चन्द्रबिम्बं चन्द्रमण्डलं भावयेत्। तदन्तरे तस्य अन्तरे तस्य चन्द्रमण्डलस्य मध्ये—

**सूक्ष्मरन्ध्रं विजानीयात् तत् कैलासपदं विदुः।**
**तत्रस्थं भावयेच्छम्भुं सर्वकारणकारणम्।।२७।।**

सूक्ष्मरन्ध्रं सूक्ष्मं च तत् रन्ध्रं च सूक्ष्मरन्ध्रं बालाग्रसमानं अत्यन्तसूक्ष्मरन्ध्रं विजानीयात् श्रीगुरूपदेशद्वारा जानीयात्, तदेव ब्रह्मरन्ध्रं कैलासपदं कैलासस्थानमिति विदुः, तत्रस्थं तत्र कैलासस्थाने तिष्ठन्तं सर्वकारणकारणं सर्वेषां कारणानामपि कारणं शम्भुं शिवं भावयेत् स्वात्माभेदेन ध्यायेत्।

**अत्र विचारः-**

अस्माकं शरीरे आधारचक्रम्, स्वाधिष्ठानचक्रम्, मणिपूरकचक्रम्, अनाहतचक्रम्, विशुद्धचक्रम्, आज्ञाचक्रमिति षट्चक्राणि वर्तन्ते। आधारचक्रे

आचारलिङ्गम्, स्वाधिष्ठानचक्रे गुरुलिङ्गम्, मणिपूरकचक्रे शिवलिङ्गम्, अनाहतचक्रे जङ्गमलिङ्गम्, विशुद्धचक्रे प्रसादलिङ्गम्, आज्ञाचक्रे महालिङ्गम् - इत्येवं तत्र षट्लिङ्गानां स्थितिः। एवं ज्ञानेन्द्रियेष्वपि - नासिकेन्द्रिये आचारलिङ्गम्, जिह्वेन्द्रिये गुरुलिङ्गम्, नेत्रेन्द्रिये शिवलिङ्गम्, हृदये महालिङ्गम्।

आधारादि षट्चक्राणां संक्षिप्तं विवरणम् —

(१) आधारचक्रं गुदस्थाने वर्तते, तत्तु चतुर्दलात्मकम्, नं-इति बीजाक्षरम्, चतुर्षु दलेषु यथाक्रमं वशषस इति अक्षराणि, चक्रमिदं आचारलिङ्गस्य आश्रयस्थानम्।

(२) स्वाधिष्ठनचक्रं गुह्यस्थाने वर्तते, अस्य दलानि षट्, मं-इति बीजाक्षरम्, दलेषु यथाक्रमं— ब भ म य र ल इति षडक्षराणि, अत्र गुरुलिङ्गं वर्तते।

(३) मणिपूरकचक्रं नाभिस्थाने वर्तते, अस्य दशदलानि, शिं इतिबीजाक्षरम्, अत्र दलेषु क्रमशः ड ढ ण त थ द ध न प फ इत्यक्षराणि, अत्र शिवलिङ्गं वर्तते।

(४) अनाहतचक्रं हृदयस्थाने वर्तते, अस्य दलानि द्वादश, वां इति बीजाक्षरम्, अत्र दलेषु क ख ग घ ङ च छ ज झ ञ ट ठ इति द्वादश अक्षराणि, अत्र जङ्गमलिङ्गमस्ति।

(५) विशुद्धिचक्रं कण्ठस्थाने वर्तते, अस्य षोडश दलानि, यं इति बीजाक्षरम्, दलेषु क्रमशः अ आ इ ई उ ऊ ऋ ऌ ॡ ए ऐ ओ औ अं अः इति वर्णाः सन्ति, अत्र प्रसादलिङ्गमस्ति।

(६) आज्ञाचक्रं भ्रूमध्ये वर्तते, अस्य दलद्वयम्, ओं इतिबीजाक्षरम्, हं क्षं इति वर्णद्वयं तत्र दलद्वये, महालिङ्गस्य आश्रयस्थानमिदम्।

न केवलं षट्चक्राण्येतानि, किन्तु शिरोभागे ब्रह्मरन्ध्रस्थलम्, तत्र ब्रह्मचक्रम्, तस्य सहस्रं दलानि, मस्तकाग्रे दलत्रयात्मकं शिखाचक्रम्, शिरसः पश्चाद्भागे एकदलात्मकं पश्चिमाचक्रम्, इत्येवम् इतराण्यपि चक्राणि वर्तन्ते।

इत्येतादृशात्मकः सूक्ष्मविचारः अत्र पूर्वोक्तश्लोकद्वये सूचितो वर्तते।

**बहिर्वासनया विश्वं विकल्पार्थं प्रकाशते।**
**अन्तर्वासितचित्तानामात्मानन्दः प्रकाशते।।२८।।**

बहिर्वासनया इदमिति बहिर्मुखगतेन संस्कारेण विश्वं सर्वमपि जगत् विकल्पार्थं सत् संकल्पविकल्पात्मकं सत् प्रकाशते, किन्तु, अन्तर्वासित-चित्तानाम् 'अहम्' इति अन्तः अन्तर्मुखे वासितं चित्तं येषां तेषां परिमिलितचित्तानाम् प्राप्तैकत्वचित्तानां योगिनां तावत् केवलम् आत्मानन्दः शिवानन्दः एव प्रकाशते।

**आत्मारणिसमुत्थेन प्रमोदमथनात् सुधीः।**
**ज्ञानाग्निना दहेत्सर्वं पाशजालं जगन्मयम्।।२९।।**

प्रमोदमथनात् प्रमोदस्य मथनमेव मथनं प्रमोदमथनम् तस्मात् शिवानन्दात्मक-शिवसुखस्य मथनात् सम्यक् विचारणात् आत्मारणि-समुत्थेन आत्मा एव अरणिः आत्मारणिः तेन समुत्थः यः तेन आत्मरूपात् अरणेः सकाशात् उत्पन्नेन, ज्ञानाग्निना ज्ञानमेवाग्निः तेन सुधीः शिवज्ञानसम्पन्नः प्राणलिङ्गी जगन्मयं समस्तं जगत्स्वरूपकम् पाशजालं मलमायादिपाशसमूहं सर्वमपि दहेत् भस्मीकुर्यात्।

आत्मारणि - प्रमोदमथन-ज्ञानाग्नि इत्यत्र रूपकम्।

अयं च प्रकृतः वृत्तान्तः, समुद्रमथनरूपः वृत्तान्तः अप्रकृतः। अतः प्रकृतेन वृत्तान्तेन अप्रकृतवृत्तान्तस्य समुद्रमथनरूपस्य प्रतीतेः समासोक्त्यलङ्कारः। 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति लक्षणम्।

**संसारविषवृक्षस्य पञ्चक्लेशपलाशिनः।**
**छेदने कर्ममूलस्य परशुः शिवभावना।।३०।।**

कर्ममूलस्य कर्म एवं मूलं यस्य तस्य धर्माधर्मरूपकर्मणः मूलमिव मूलं यस्य वृक्षस्य, पञ्चक्लेशपलाशिनः पञ्चक्लेशाः एव पलाशानि यस्य तस्य-अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेशः, इत्यभिधानकाः पञ्चक्लेशाः एव पत्राणि तैः युक्तस्य, संसारविषवृक्षस्य संसारः एव विषवृक्षः तस्य छेदने कर्तने शिवभावना शिवस्य भावना शिवध्यानादिकमेव परशुः आयुधविशेषः वर्तते। अत्र मालारूपकालङ्कारः।

**अज्ञानराक्षसोन्मेषकारिणः संहृतात्मनः।**
**शिवध्यानं तु संसारतमसश्चण्डभास्करः।।३१।।**

अज्ञानराक्षसोन्मेषकारिणः अज्ञानमेव राक्षसः तस्य उन्मेषं करोति इति अज्ञानराक्षसोन्मेषकारी तस्य अज्ञानरूपराक्षसस्य नेत्रोन्मीलनकारिणः, रात्रावेव राक्षसानां दृष्टेः प्रसिद्धिः, संसारतमसः संसारः एव तमः तस्य संसाररूप—गाढान्धकारस्य संहृतात्मनः संहृतः आत्मा यस्य सः तस्य जितेन्द्रियस्य शिवयोगिनः शिवध्यानं तु शिवध्यानमेव चण्डभास्करः चण्डश्चासौ भास्करः चण्डभास्करः प्रचण्डसूर्यः एव वर्तते।

यथा भास्करः स्वस्य किरणैः गाढान्धकारं नाशयति तथैव शिवयोगिनः शिवध्यानमेव संसारनाशकः इति उपमाध्वनिः। अज्ञानराक्षस-संसारतमस्-शिवध्यानभास्कर-इत्यत्र रूपकम्।

भास्करे तमसः नाशकत्वेऽपि राक्षसानामपकारत्वं ध्वन्यते।

*।।इति शिवयोगसमाधिस्थलम्।।*

## (३५) लिङ्गनिजस्थलम्

**स्वान्तस्थ-शिवलिङ्गस्य प्रत्यक्षानुभवस्थितिः।**
**या सैव परलिङ्गस्य निजमित्युच्यते बुधैः।।३२।।**

स्वान्तस्थशिवलिङ्गस्य स्वस्यअन्तः स्वान्तः तत्र तिष्ठति इति स्वान्तस्थं स्वान्तं च तत् शिवलिङ्गं च स्वान्तस्थ शिवलिङ्गम् तस्य स्वहृदये तादात्म्येन वर्तमानस्य शिवलिङ्गस्य परलिङ्गस्य शिवलिङ्गापरनामक- परलिङ्गस्य या प्रत्यक्षानुभवस्थितिः देशकालादि-आकारादिकृतसङ्कोचाभावेन सामान्यतः अहम् इति या अन्तरात्मनः प्रत्यक्षरूपा अनुभवस्थितिः वर्तते, सा एव परलिङ्गस्य निजं स्वस्वरूपमिति बुधैः शिवात्मतत्त्वविवेकिभिः उच्यते कथ्यते।

'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्' इति प्रत्यक्षज्ञानस्य लक्षणम्। अन्तरङ्गस्यापि इन्द्रियान्तरत्वसत्त्वात् तत्रस्थः अनुभवोऽपि प्रत्यक्षज्ञानमेव।

**ब्रह्मविष्ण्वादयो देवाः सर्वे वेदादयस्तथा।**
**लीयन्ते यत्र गम्यन्ते तल्लिङ्गं ब्रह्म केवलम्।।३३।।**

ब्रह्मविष्ण्वादयः सर्वे देवाः तथा सर्वे वेदादयः वेदाः उपनिषदः इत्यादयः आगमाः पुराणानि शास्त्रादयश्च यत्र यस्मिन् परब्रह्मनागके लिङ्गे लीयन्ते लयं गच्छन्ति गम्यन्ते च तथैव पुनः प्रकटीभवन्ति तत् लिङ्गं केवलं ब्रह्म एव नान्यथा। **लीयन्ते** - ली-श्लेषणे, कर्मणि लट्।

**गम्यन्ते** - गम्लृ-गतौ, कर्मणि, लट्।

**चिदानन्दमयः साक्षाच्छिव एव निरञ्जनः।**
**लिङ्गमित्युच्यते नान्यद्यतः स्याद्विश्वसम्भवः।।३४।।**

यतः यस्मात् ब्रह्मस्वरूपात् लिङ्गात् विश्वसम्भवः स्यात् विश्वस्य सम्भवः उत्पत्तिः स्यात्, तदेव लिङ्गम् इति उच्यते न अन्यत्, यतः यस्मात् कारणात् शिवः एव चिदानन्दमयः सच्चिदानन्दात्मकः, साक्षात् निरञ्जनः दोषरहितः सन् लिङ्गम् इत्युच्यते नान्यः।

**बहुनात्र किमुक्तेन लिङ्गमित्युच्यते बुधैः।**
**शिवाभिधं परं ब्रह्म चिद्रूपं जगदास्पदम्।।३५।।**

अत्र विषये शिवएव लिङ्गमित्यस्य विषये बहुना उक्तेन किम्? किन्तु चिद्रूपं चिदात्मकम् जगदास्पदं जगताम् आस्पदम् आधारस्थानम् शिवाभिधं शिवः इत्यभिधानकं परं ब्रह्म एव लिङ्गमिति बुधैः शास्त्रज्ञैः उच्यते।

**वेदान्तवाक्यजां विद्यां लिङ्गमाहुस्तथापरे।**
**तदसज्ज्ञेयरूपत्वाल्लिङ्गस्य ब्रह्मरूपिणः।।३६।।**

तथा अपरे केचन वेदान्तिनः वेदान्तवाक्यजां विद्यां वेदान्तानां वाक्यानि उपनिषद्वाक्यानि तेभ्यः उत्पन्नां वेदान्तविद्यामेव लिङ्गम् इत्याहुः। किन्तु परब्रह्मरूपिणः लिङ्गस्य ज्ञेयरूपत्वात् निजलिङ्गरूपचिदहंप्रकाशवेद्यत्वात् तत् वेदान्तविद्यालिङ्गत्वं तु असत् न प्रशस्तम्।

**अव्यक्तं लिङ्गमित्याहुर्जगतां मूलकारणम्।**
**लिङ्गी महेश्वरश्चेति मतमेतदसङ्गतम्।।३७।।**

केचन-जगतां मूलकारणं यत् अव्यक्तं मायातत्त्वं तदेव लिङ्गम्, लिङ्गी लिङ्गमस्ति अस्मिन् इति लिङ्गी च महेश्वरः, अथवा महेश्वरः एव लिङ्गी

इत्याहुः एतदपि मतम् असङ्गतं न युक्तम्।

**न सूर्यो भाति तत्रेन्दुर्न विद्युन्न च पावकः।**
**न तारका महालिङ्गे द्योतमाने परात्मनि।।३८।।**

परात्मनि महालिङ्गे द्योतमाने प्रकाशमाने सति तत्र परात्मनि महालिङ्गे महाप्रकाशरूपे सूर्यः न भाति, इन्दुः न भाति विद्युत् न भाति पावकश्च न भाति तारकाः अपि न भान्ति।

'न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः?।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति।।

**ज्योतिर्मयं परं लिङ्गं श्रुतिराह शिवात्मकम्।**
**तस्य भासा सर्वमिदं प्रतिभाति न संशयः।।३९।।**

शिवात्मकं शिवस्वरूपकं यत् परं लिङ्गं महालिङ्गं तदेव ज्योतिर्मयं अन्यानपेक्षत्वेन स्वतन्त्रत्वेन स्वयं प्रकाशस्वरूपकम् वर्तते इति, तस्य ज्योतीरूपस्यैव लिङ्गस्य भासा प्रकाशेनैव इदं सर्वं प्रतिभाति अत्र संशयः न इति च श्रुतिः आह।

**लिङ्गान्नास्ति परं तत्त्वं यदस्माज्जायते जगत्।**
**यदेतद्रूपतां धत्ते यदत्र लयमश्नुते।।४०।।**

यत् यस्मात् कारणात् अस्मात् महालिङ्गात् जगत् जायते समुत्पद्यते, यच्च यस्मात् कारणाच्च जगत् तद्रूपतां धत्ते तन्महालिङ्गरूपत्वमेव धत्ते धरति, यच्च यस्माच्च कारणात् अत्रैव महालिङ्गात् परं तत्त्वं तत्त्वान्तरमेव अन्यानपेक्षभासमानस्वप्रकाशमयनिजलिङ्गत्वात् नास्त्येव। **धत्ते** - डु - धाञ्- धारणपोषणयोः, लट्।

**तस्माल्लिङ्गं परं ब्रह्म सच्चिदानन्दलक्षणम्।**
**निजरूपमिति ध्यानात् तदवस्था प्रजायते।।४१।।**

तस्मात् पूर्वोक्तकारणात् सच्चिदानन्दलक्षणं सच्चिदानन्दस्वरूपात्मकं

परं ब्रह्म एव लिङ्गम् निजरूपं निजरूपयुक्तं लिङ्गम् इति अस्य लिङ्गस्य ध्यानात् तदवस्था तस्य अवस्था एव प्रजायते सम्पन्ना भवति प्रकाशते।

*॥इति लिङ्गनिजस्थलम्॥*

## (३६) अङ्गलिङ्गस्थलम्

**ज्ञानमङ्गमिति प्राहुर्ज्ञेयं लिङ्गं सनातनम्।**
**विद्यते तद्द्वयं यस्य सोऽङ्गलिङ्गीति कीर्तितः॥४२॥**

ज्ञानं शिवज्ञानमेव अङ्गं जीवः, ज्ञेयं च सनातनं लिङ्गम् इति प्राहुः शिवयोगज्ञानसम्पन्नाः कथयन्ति। यस्य यस्य प्राणलिङ्गिनः तद्द्वयं ज्ञानज्ञेयरूपं अङ्गलिङ्गद्वयमपि विद्यते सः अङ्गलिङ्गी अङ्गलिङ्गस्थलभाक् भवति इति कीर्तितः।

**अङ्गे लिङ्गं समारूढं लिङ्गे चाङ्गमुपस्थितम्।**
**एतदस्ति द्वयं यस्य स भवेदङ्गलिङ्गवान्॥४३॥**

अङ्गे जीवात्मनि लिङ्गं समारूढमस्ति, लिङ्गे च अङ्गम् अपस्थितं वर्तते, इति एतत् द्वयं ज्ञानमस्ति यस्य प्राणलिङ्गिनः वर्तते सः प्राणलिङ्गी एव अङ्गलिङ्गवान् भवेत्।

**ज्ञात्वा यः सततं लिङ्गं स्वान्तःस्थं ज्योतिरात्मकम्।**
**पूजयेद्भावयेन्नित्यं तं विन्द्यादङ्गलिङ्गिनम्॥४४॥**

यः प्राणलिङ्गी स्वान्तःस्थं स्वस्य अन्तः तिष्ठति इति स्वान्तःस्थं स्वहृदयकमले प्रकाशरूपेण विद्यमानम् ज्योतिरात्मकं ज्योतिःस्वरूपकं लिङ्गं ज्ञात्वा श्रुतिद्वारा गुरुद्वारा स्वानुभवद्वारा च विदित्वा नित्यं पूजयेत् भावयेच्चतम् प्राणलिङ्गिनम् अङ्गलिङ्गिनं विन्द्यात् जानीयात्।

**ज्ञायते लिङ्गमेवैकं सर्वैः शास्त्रैः सनातनैः।**
**ब्रह्मेति विश्वधामेति विमुक्तेः पदमित्यपि॥४५॥**

लिङ्गमेव एकं ब्रह्म इति विश्वधाम विश्वस्य धाम आश्रयस्थानमिति, विमुक्तेः सामरस्यरूपमोक्षस्य पदं स्थानम् इत्यपि सनातनै सर्वैः शास्त्रैः

निगमागमोपनिषदादिभिः शास्त्रैः ज्ञायते अवगम्यते ज्ञातुं शक्यते।

**मुक्तिरूपमिदं लिङ्गमिति यस्य मनःस्थितिः।**
**स मुक्तो देहयोगेऽपि स ज्ञानी स महागुरुः।।४६।।**

इदं लिङ्गं मुक्तिरूपं मुक्तिस्वरूपकम् इति यस्य प्राणलिङ्गिनः मनः-स्थितिः मनसः स्थितिः मानसी भावना वर्तते सः देहयोगे सत्यपि देहस्य योगे सत्यपि बाह्यशरीरधारिणि सत्यपि मुक्तः जीवन्मुक्तः स ज्ञानी शिवज्ञानसम्पन्नः सः महागुरुः गुरुश्रेष्ठः भवति।

**अनादिनिधनं लिङ्गं कारणं जगतामिति।**
**ये न जानन्ति ते मूढा मोक्षमार्गबहिष्कृताः।।४७।।**

अनादिनिधनम् आदिश्च निधनं च आदिनिधने न विद्येते आदिनिधने यस्य तत् अनादिनिधनम् जननमरणादिशून्यम् उत्पत्तिविनाशरहितम् अतएव शाश्वतिकं लिङ्गं तावत् जगतां कारणं वर्तते इति ये जनाः न जानन्ति ते मूढाः मूर्खाः अपि च मोक्षमार्गबहिष्कृताः मोक्षस्य मार्गः तेन बहिष्कृताः तिरस्कृताः वर्तन्ते।

**जानन्ति** - ज्ञा - अवबोधने कर्तरि लट्।

**यः प्राणलिङ्गार्चनभावपूर्वैः**
**धर्मैरुपेतः शिवभावितात्मा।**
**स एव तुर्यः परिकीर्तितोऽसौ**
**संविद्विपाकाच्छरणाभिधानः ।।४८।।**

यः प्राणलिङ्गी प्राणलिङ्गार्चनभावपूर्वैः प्राणलिङ्गस्य अर्चनं प्राणलिङ्गार्चनं तस्मिन् भावाः पूर्वाः येषां तैः प्राणलिङ्गार्चनयोग्यैः अन्तर्भावनापूर्वकैः धर्मैः शिवार्चनयोग्यैः शिवाचारैः उपेतः युक्तः सन् शिवभावितात्मा शिवे भावितः आत्मा यस्य सः लिङ्गाङ्गसंयोगरूपेण अन्तर्भावितस्वरूपः सन् तुर्यः चतुर्थः प्राणलिङ्गी इति चतुर्थस्थलापन्नः इति यः असौ परिकीर्तितः कथितः सः एव प्राणलिङ्गी संविद्विपाकात् संविदः विपाकात् परतत्त्वरूपपरशिवज्ञानस्य परिपाकवशात् शरणाभिधानः शरणः इति अभिधानं यस्य सः शरणाभिधानः शरणस्थलसम्पन्नः इति व्यपदिश्यते।

प्रथमद्वितीयचतुर्थपादेषु इन्द्रवज्रावृत्तस्य लक्षणम् तृतीये च पादे उपेन्द्रवज्रावृत्तस्य लक्षणम् अतः अत्र उपजातिः छन्दः।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिंखामणौ प्राणलिङ्गिनः पञ्चस्थलप्रसङ्गो नाम*
*।।द्वादशः परिच्छेदः।।*



# ।।त्रयोदशः परिच्छेदः।।

## ।।शरणस्थलम्।।

### ।।अगस्त्य उवाच।।

**माहेश्वरः प्रसादीति प्राणलिङ्गीति बोधितः।**
**कथमेष समादिष्टः पुनः शरणसंज्ञकः?।।१।।**

माहेश्वरः माहेश्वरस्थलापन्नः प्रसादी इति प्राणलिङ्गी इति च बोधितः उपदिष्टः। पुनः एषः एव शरणसंज्ञकः शरणस्थली इति कथं समादिष्टः कथितः?

### ।।श्रीरेणुक उवाच।।

**अङ्गलिङ्गी ज्ञानरूपः सतीज्ञेयः शिवः पतिः।**
**यत्सौख्यं तत्समावेशे तद्वान् शरणनामवान्।।२।।**

ज्ञानरूपः शिवज्ञानस्वरूपवान् यः अङ्गलिङ्गी सः सती इति ज्ञेयः शिवश्च पतिः इति ज्ञेयः, तत्समावेशे तयोः समावेशे अङ्गलिङ्गरूपयोः स्त्रीपुरुषयोः समावेशे सति तेन यत्सौख्यं यादृशमानन्दरूपं सौख्यं भवति तद्वान् तत् अस्य अस्तीति तद्वान् तादृशशिवानन्दवानेव शरणनामवान् शरणः इतिनामभाक् भवति।

अत्र अङ्गलिङ्गयोः स्त्रीपुरुषयोः समारोपात् रूपकम्। स्त्रीपुरुषयोर्मध्ये वर्तमानं सौख्यं तावत् लौकिकम्, परम् अङ्गलिङ्गयोर्मध्ये विद्यमानं सौख्यं तु आध्यत्मिकं सौख्यम् समरसानन्दात्मकमिति विशेषः।

**स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः।**
**आदौ शरणमाख्यातं ततस्तामसवर्जनम्।।३।।**

**ततो निर्देशमुद्दिष्टं शीलसम्पादनं ततः।**
**क्रमाल्लक्षणमेतेषां कथयामि निशाम्यताम्।।४।।**

एतत् स्थलं धर्मभेदतः धर्मभेदात् चतुर्धा समाख्यातम् - शरणस्थलम्, तामसनिरसनस्थलम्, निर्देशस्थलम्, शीलसम्पादनस्थलम् - इति चतुर्विधम्। एतेषां भेदानां लक्षणं क्रमात् कथयामि निशाम्यतां श्रूयताम्।

**निशाम्यताम्** - नि+शमु -उपशमे, कर्मणि लोट्।

निशाम्यताम् निशाम्येताम् निशाम्यन्ताम् इत्यादि।

## (३७) शरणस्थलम्

**सतीव रमणे यस्तु शिव-शक्तिं विभावयन्।**
**तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान्।।५।।**

रमणे विषये सती इव पत्नी इव शिवे विषये शक्तिं विभावयन् सन् यस्तु प्राणलिङ्गी तदन्यविमुखः तस्मात् शिवात् अन्यत्र देवतान्तरे विमुखः अनासक्तः वर्तते सः अयं प्राणलिङ्गी शरणनामवान् शरणः इति अभिधानकः भवति।

रमणे विषये यथा पत्नी वर्तते तथैव जीवेन सतीत्वेन भाव्यम् शिवेन पतित्वेन भाव्यमिति उपमाध्वनिः। अङ्गलिङ्गयोः सतीपतिन्यायस्य समारोपात् रूपकध्वनिः।

**परिज्ञाते शिवे साक्षात् को वान्यमभिकाङ्क्षति?।**
**निधाने महति प्राप्ते कः काचं याचतेऽन्यतः?।।६।।**

साक्षात् शिवे परिज्ञाते सति ब्रह्मादिभ्यो महानिति श्रुत्यादिप्रत्यक्षादिप्रमाणैः सम्यक्ज्ञाते सति, कः वा अन्यम् अभिकाङ्क्षति? नैवान्यमपेक्षते। यथा च– महति निधाने निधौ प्राप्ते सति कः वा अन्यतः अन्यस्मात् जनात् काचम् याचते? नैव याचते।

पूर्वार्धः प्रस्तुतवाक्यम् विशेषवाक्यं च, उत्तरार्धः सामान्यवाक्यम् अप्रस्तुतवाक्यं च। अप्रस्तुतेन सामान्येन प्रस्तुतस्य विशेषस्य समर्थनात् सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः। लक्षणं तु–

'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति। यथा निधाने प्राप्ते काचं न याचते तथा शिवे ज्ञाते अन्यं न याचते - इति उपमाध्वनिः।

**याचते** - टु - याचृ - याच्ञायाम्, लट्।

**शिवानन्दं समासाद्य को वान्यमुपतिष्ठते?।**
**गङ्गामृतं परित्यज्य कः काङ्क्षेन्मृगतृष्णिकाम्?।।७।।**

शिवानन्दं शिवस्य आनन्दं समासाद्य प्राप्य कः वा अन्यं देवतान्तरम् उपतिष्ठते आश्रयति? न कोऽपि आश्रयति। यतोहि - गङ्गामृतं अमृतसदृशं गङ्गाजलं परित्यज्य कः वा मृगतृष्णिकां मृगमरीचिकां काङ्क्षेत् इच्छेत्? न कोऽपि इच्छेत्। पूर्वार्धः प्रस्तुतं विशेषवाक्यं च, उत्तरार्धः अप्रस्तुतं सामान्यवाक्यं च, सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासालंकारः। यथा गङ्गामृतं परित्यज्य मृगतृष्णिकां न काङ्क्षते तथैव शिवानन्दं परित्यज्य देवतान्तरं न उपतिष्ठते इति वैधर्म्यमूलः उपमाध्वनिः। यथा गङ्गामृतं समासाद्य मृगतृष्णिकां नैव इच्छति तथैव शिवानन्दं समासाद्य देवतान्तरं नैव उपतिष्ठते इति साधर्म्यमूलः उपमाध्वनिः।

**उपतिष्ठते** – उप+ष्ठा - गतिनिवृत्त्योः, लट्।

**काङ्क्षेत्** – काक्षि काङ्क्षायाम् विधिलिङ्।

**संसारतिमिरच्छेदे विना शङ्करभास्करम्।**
**प्रभवन्ति कथं देवाः खद्योता इव देहिनाम्?।।८।।**

खद्योताः इव अत्यल्पप्रकाशिनः ज्योतिरिंगणाः इव देहिनां संसारतिमिरच्छेदे संसारः एव तिमिरं संसारतिमिरम् तस्य छेदे विनाशे शङ्करभास्करं विना शङ्करः एव भास्करः तम् शङ्कररूपसूर्यं विना देवाः ब्रह्मादयः कथं प्रभवन्ति कथं वा ब्रह्मादयः देवाः समर्थाः भवन्ति, नैव समर्थाः भवन्ति। संसारतिमिर-शङ्करभास्कर-इत्यत्र रूपकम्।

खद्योताः इव इत्यत्र उपमा।

यथा खद्योताः तमसः दूरीकरणे असमर्थाः तथैव संसारतिमिरदूरीकरणे शंकरं विना अन्ये देवाः न समर्थाः इति वैधर्म्यमूलः उपमाध्वनिः। यथा भास्करः तिमिरदूरीकरणे समर्थः तथैव शङ्करः संसारदूरीकरणे समर्थः इति साधर्म्य-मूलः उपमाध्वनिः।

**संसारार्तः शिवं यायाद् ब्रह्माद्यैः किं फलं सुरैः?।**
**चकोरस्तृषितः पश्येच्चन्द्रं किं तारका अपि?।।९।।**

संसारार्तः संसारेण आर्तः पीडितः शिवं यायात् शिवं शरणं गच्छेत्, ब्रह्माद्यैः सुरैः किं फलम्? न किमपि फलम्। यथा च तृषितः पिपासापीडितः चकोरः चन्द्रमेव पश्येत्, किं तारकाः पश्येदपि? नैव नक्षत्राणि पश्येत्।

**यायात्** – या-प्रापणे, विधिलिङ्।

**पश्येत्** – दृशिर् - प्रेक्षणे, विधिलिङ्।

पूर्वार्धः प्रस्तुतं विशेषवाक्यं च, उत्तरार्धः अप्रस्तुतं सामान्यवाक्यं च। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः। तृषितः चकोरः यथा नक्षत्राणि परित्यज्य चन्द्रमेव पश्यति तथैव संसारार्तः अन्यान् देवान् परित्यज्य शिवमेव याति इति उपमाध्वनिः।

**शिव एव समस्तानां शरण्यः शरणार्थिनाम्।**
**संसारोरगदष्टानां सर्वज्ञः सर्वदोषहा।।१०।।**

शरणार्थिनां शरणम् अर्थयन्ते इति शरणार्थिनः, तेषां शरणं प्रपन्नानां समस्तानामपि जनानां शिवः एव शरण्यः शरणे साधुः शरण्यः रक्षकः, संसारोरगदष्टानां संसारः एव उरगः संसारोरगः तेन दष्टानां सर्वज्ञः शिव एव सर्वदोषहा सर्वे च ते दोषाश्च सर्वदोषाः तान् हन्ति इति सर्वदोषहा सर्वदोषविनाशकः विषविनाशकश्च। संसारोरगः – अत्र रूपकम्। शिवे विषवैद्यत्वं व्यज्यते इति रूपकध्वनिः शिवे वैद्यत्वसमारोपात्।

**शिवज्ञाने समुत्पन्ने परानन्दः प्रकाशते।**
**तदासक्तमना योगी नान्यत्र रमते सुधीः।।११।।**

शिवज्ञाने शिवस्य ज्ञानं तस्मिन् समुत्पन्ने सति परानन्दः प्रकाशते, तदासक्तमनाः तस्मिन् आसक्तं मनः यस्य सः तस्मिन् शिवज्ञाने संसक्तमनस्कः सुधीः ज्ञानी च योगी शिवयोगी तु अन्यत्र न रमते नैव क्रीडति।

**रमते**– रमु क्रीडायाम् लट्।

**प्रकाशते** – प्र+काशृ-दीप्तौ लट्।

**तस्मात् सर्वप्रयत्नेन शङ्करं शरणं गतः।**
**तदनन्तसुखं प्राप्य मोदते नान्यचिन्तया।।१२।।**

तस्मात् कारणात् सर्वप्रयत्नेन मनोवाक्कायकर्मभिः शङ्करं शरणं गतः शरणं प्रपन्नः शरणः तदनन्तसुखं प्राप्य तादृशमनुपमम् अनन्तसुखं प्राप्य मोदते आनन्दीभवति किन्तु अन्यचिन्तया अन्यस्य शिवात् भिन्नस्य देवतान्तरस्य चिन्तया न मोदते।

**मोदते–** मुद-हर्षे, लट्।

*।।इति शरणस्थलम्।।*

## (३८) तामसनिरसनस्थलम्

**शिवासक्तपरानन्दमोदिना - गुरुणा यतः।**
**निरस्यन्ते तमोभावाः स तामसनिरासकः।।१३।।**

शिवासक्तपरानन्दमोदिना शिवे आसक्तः यः सः शिवासक्तः तस्य परश्चासौ आनन्दश्च शिवासक्तपरानन्दः तस्मिन् मोदिना स्वयं शिवासक्तः सन् तेन प्राप्यमानपरानन्दे रसलोलुपेन गुरुणा आचार्येण यतः यस्मात् कारणात् तमोभावाः तमसः भावाः तामसगुणविशिष्टाः सर्वेऽपि भावाः निरस्यन्ते दूरीक्रियन्ते, तस्मात् सः तादृशः शिवयोगी तामसनिरासकः इत्युक्तः।

**निरस्यन्ते–** निर्+असु-क्षेपणे, कर्मणि लट्।

**यस्य ज्ञानं तमोमिश्रं न तस्य गतिरिष्यते।**
**सत्त्वं हि ज्ञानयोगस्य नैर्मल्यं विदुरुत्तमाः।।१४।।**

यस्य शिवयोगिनः ज्ञानं शिवज्ञानं तमोमिश्रं तमसा मिश्रं तमोगुणेन सम्मिश्रितं चेत् तस्य शिवयोगिनः गतिः न इष्यते लिङ्गाङ्गसामरस्य-रूपगतिः नैव सिद्ध्यति। यतः ज्ञानयोगस्य ज्ञानस्य योगः तस्य शिवज्ञानसम्पत्तिप्राप्तेः नैर्मल्यं परिशुद्धं सत्त्वं सत्त्वगुणभूयिष्ठत्वं हि कारणमिति उत्तमाः श्रेष्ठशिवज्ञानिनः विदुः जानन्ति।

रजस्तमसी अभिभूय सत्त्वगुणोद्रेकत्वमेव शिवयोगः इत्यतः

तामसनिरसनत्वमिति अन्वर्थता।

अत्र उत्तरार्धः पूर्वार्धं समर्थयतीति काव्यलिङ्गत्वम्।

**शमो दमो विवेकश्च वैराग्यं पूर्णभावना।**
**क्षान्तिः कारुण्यसम्पत्तिः श्रद्धा सत्यसमुद्भवा।।१५।।**

शमः अन्तरिन्द्रिय-निग्रहः, दमः बहिरिन्द्रियनिग्रहः, वैराग्यं विषयेष्वनासक्तिः, पूर्णभावना सर्वात्मना अखण्डध्यानम्, क्षान्तिः क्षमागुणः, कारुण्यसम्पत्तिः आधिक्येन भूतदया, सत्यसमुद्भवा सत्येन समुद्भवा समुत्पन्ना श्रद्धा शिवादिषु अखण्डः विश्वासः - एते सात्त्विकगुणाः। अपि च–

**शिवभक्तिः परो धर्मः शिवज्ञानस्य बान्धवाः।**
**एतैर्युक्तो महायोगी सात्त्विकः परिकीर्तितः।।१६।।**

शिवभक्तिः, परः धर्मः श्रेष्ठतमः शिवाचारः – इत्येते दश गुणाः सात्त्विकाः शिवज्ञानस्य बान्धवाः परिपोषकाः, एतैः दशगुणैः युक्तः महायोगी सात्त्विकः इति परिकीर्तितः।

**कामक्रोधमहामोहमदमात्सर्य – वारणाः।**
**शिवज्ञानमृगेन्द्रस्य कथं तिष्ठन्ति सन्निधौ?।।१७।।**

कामक्रोधमहामोहमदमात्सर्यवारणाः कामश्च क्रोधश्च महामोहश्च मदश्च मात्सर्यं च कामक्रोधमहामोहमद-मात्सर्याणि एव वारणाः गजाः, शिवज्ञान मृगेन्द्रस्य शिवज्ञानमेव मृगेन्द्रः तस्य सिंहस्य सन्निधौ पुरोभागे कथं तिष्ठन्ति? नैव स्थातुं शक्नुवन्ति।

अत्र कामादिषु वारणसमारोपः ज्ञाने मृगेन्द्रसमारोपः अतः रूपकम्। यथा मृगेन्द्रस्य पुरोभागे वारणाः नैव तिष्ठन्ति, तथैव कामादिषड्वर्गः शिवज्ञानस्य पुरोभागे नैव तिष्ठन्ति इति उपमाध्वनिः।

**यत्र कुत्रापि वा द्वेष्टि प्रपञ्चे शिवरूपिणि।**
**शिवद्वेषी स विज्ञेयो रजसाविष्टमानसः।।१८।।**

यः पुरुषः रजसाविष्टमानसः रजसा रजोगुणेन आविष्टमानसः आविष्टं मानसं यस्य सः परिपूर्णचित्तः सन् शिवरूपिणि प्रपञ्चे शिवस्वरूपवति

प्रपञ्चविषये यत्र कुत्रापि वा स्थले द्वेष्टि द्वेषं करोति सः शिवद्वेषी शिवस्य द्वेषी शत्रुः इति विज्ञेयः ज्ञातव्यः।

**द्वेष्टि**– द्विष-अप्रीतौ, लट्।

द्वेष्टि द्विष्टः द्विषन्ति।

द्वेक्षि द्विष्टः द्विष्ट।

द्वेष्मि द्विष्वः द्विष्मः।।

**यो द्वेष्टि सकलान् लोकान् यो वाहङ्कुरुते सदा।**
**योऽसत्यभावनायुक्तः स तामस इति स्मृतः।।१९।।**

यः पुरुषः सकलान् लोकान् जनानपि द्वेष्टि द्वेषं करोति यश्च वा सदा अहङ्कुरुते अहंकारं कुरुते अहंकारं करोति यश्च असत्यभावनायुक्तः असत्यस्य भावनया युक्तः मिथ्याभावनायुक्तः भवति सः तामसः तामसगुणवान् इति स्मृतः।

**तमोमूला हि सञ्जाता रागद्वेषादिपादपाः।**
**शिवज्ञानकुठारेण छेद्यन्ते हि निरन्तरम्।।२०।।**

रागद्वेषादिपादपाः रागश्च द्वेषश्च एवम् आदयः एव पादपाः वृक्षाः रागद्वेषादिरूपाः वृक्षाः तावत् तमोमूलाः तमः एव मूलं मूलभागः येषां ते तमोमूलाः सन्तः सञ्जाताः हि उत्पन्नाः सन्ति हि, किन्तु ते निरन्तरं सदाकाले शिवज्ञानकुठारेण शिवज्ञानमेव कुठारः परशुः तेन छेद्यन्ते हि समूलं कर्त्यन्ते हि।

रागद्वेषादिपादपाः शिवज्ञानकुठारः इत्यत्र रूपकम्। यथा विषपूर्णाः वृक्षाः कुठारेण छेद्यन्ते तथैव रागद्वेषादयः शिवज्ञानेन छेद्यन्ते इति उपमाध्वनिः। **छेद्यन्ते**-छिद-द्वैधीकरणे, णिजन्तात् कर्मणि लट्, छेद्यते इत्यादि।

**शिवज्ञाने समुत्पन्ने सहस्रादित्यसन्निभे।**
**कुतस्तमोविकाराः स्युर्महतां शिवयोगिनाम्।।२१।।**

सहस्रादित्यसन्निभे सहस्रम् आदित्याः सहस्रादित्याः तैः सन्निभे

सहस्रसंख्याकसूर्यवत् अत्यन्तमौज्ज्वल्यपूर्णे शिवज्ञाने समुत्पन्ने सति सम्प्राप्ते सति तदा महतां महात्मनां शिवयोगिनां प्राणलिङ्गिनां तमोविकाराः तमसः विकाराः रागद्वेषादयः मनोविकाराः कुतः स्युः कथं वा स्युः? नैव भवेयुः। उपमालङ्कारः।

*॥इति तामसनिरसनस्थलम्॥*

## (३९) निर्देशस्थलम्

**निराकृत्य तमोभागं संसारस्य प्रवर्तकम्।**
**निर्दिश्यते तु यज्ज्ञानं स निर्देश इति स्मृतः॥२२॥**

संसारस्य प्रवर्तकं जननमरणादिरूपसंसारस्य मूलकारणीभूतम्, तमोभागं तमोगुणजातं निराकृत्य गुरुणा दूरीकृत्य यत्ज्ञानं यादृक् शिवज्ञानं निर्दिश्यते सः तु शिवज्ञाननिर्देशः एव निर्देशः इति स्मृतः।

**गुरुरेव परं तत्त्वं प्रकाशयति देहिनाम्।**
**को वा सूर्यं विना लोके तमसो विनिवर्तकः?॥२३॥**

देहिनां मनुष्याणां गुरुः एव परं तत्त्वं प्रकाशयति प्रकटीकरोति। युक्तमेतत् यतः लोके सूर्यं विना तमसः विनिवर्तकः गाढान्धकारस्य निवारकः कः वा वर्तते? न कोऽपि वर्तते।

गुरौ सूर्यस्य परतत्त्वे प्रकाशस्य च समारोपात् रूपकम्। उत्तरार्धः पूर्वार्धं समर्थयति इति अर्थान्तरन्यासालङ्कारः। यथा सूर्यः तमः विनाशयित्वा प्रकाशदायकः वर्तते, तथैव गुरुरेव अज्ञानं निवारयित्वा शिवज्ञानं प्रकाशयति इति साधर्म्यमूलः उपमाध्वनिः। अथवा, यथा सूर्यं विना तमोनिवारकः प्रकाशदायकश्च अन्यः नास्ति तथैव गुरुं विना अज्ञाननाशकः शिवज्ञानबोधकश्च अन्यः नास्ति इति वैधर्म्यमूलः उपमाध्वनिः।

**अन्तरेण गुरुं सिद्धं कथं संसारनिष्कृतिः?।**
**निदानज्ञं विना वैद्यं किं वा रोगो निवर्तते?॥२४॥**

सिद्धं महाज्ञानेन सिद्धपुरुषमिव वर्तमानं गुरुम् अन्तरेण गुरुं विना संसारनिष्कृतिः संसारस्य नाशः कथं स्यात्? नैव स्यात्। यथा च निदानज्ञं

निदानं जानाति इति तम् रोगस्य मूलकारणज्ञं वैद्यं विना रोगः किं वा निवर्तते? नैव निवर्तते।

गुरुवैद्ययोः संसारनिष्कृतिरोगनिवारणयोश्च औपम्यात् उपमालङ्कारः। यथा रोगनिदानज्ञं वैद्यं विना रोगः न निवर्तते तथैव संसारनिष्कासकं गुरुं विना संसारनिवृत्तिः नैव भवति इति वैधर्म्यमूलः उपमाध्वनिः। अथवा निदानज्ञेनैव वैद्येन यथा रोगः निवर्तते तथैव संसारनिष्कासकेनैव गुरुणा संसारनिष्कृतिः भवतीति साधर्म्यमूलः उपमाध्वनिः।

**अज्ञानमलिनं चित्तदर्पणं यो विशोधयेत्।**
**प्रज्ञाविभूतियोगेन तमाहुर्गुरुसत्तमम्।।२५।।**

अज्ञानमलिनम् अज्ञानेन मलिनं चित्तदर्पणं चित्तमेव दर्पणः तम् शिवज्ञानाभावात् मलिनीकृतं चित्तं यः प्रज्ञाविभूतियोगेन प्रज्ञा एव विभूतिः तस्याः सम्पर्केण विशोधयेत् शुद्धीकुर्यात् तम् गुरुसत्तमम् गुरुश्रेष्ठम् आहुः कथयन्ति।

अज्ञानमलिनम् चित्तदर्पणम् प्रज्ञाविभूतिः इत्यत्र रूपकम्। दर्पणे वर्तमानं मालिन्यं विभूतिद्वारा शुद्धीकृत्य बिम्बप्रदायकं यः कोऽपि करोति तद्वदेव गुरुः शिष्यस्य चित्ते वर्तमानं मालिन्यं शिवज्ञानबोधेन शुद्धीकृत्य शिवज्ञानयुक्तं करोति इति उपमाध्वनिः।

**विशोधयेत्** – वि+शुध-शौचे, णिच्, विधिलिङ्।

**अपरोक्षिततत्त्वस्य जीवन्मुक्तस्वभाविनः।**
**गुरोः कटाक्षे संसिद्धे को वा लोकेषु दुर्लभः?।।२६।।**

अपरोक्षित-तत्त्वस्य परोक्षितं च तत् तत्त्वं च परोक्षिततत्त्वं न परोक्षिततत्त्वम् यस्य तस्य साक्षात्कृतशिवतत्त्वस्य प्रत्यक्षानुभवविषयीकृत-शिवतत्त्वस्य, जीवन्मुक्तस्वभाविनः जीवन् च असौ मुक्तश्च जीवन्मुक्तः जीवन्मुक्तः इव स्वभावः यस्य सः तस्य जीवन्मुक्तस्वभाविनः गुरोः श्रीगुरोः कटाक्षे अपाङ्गदृष्टौ संसिद्धे सति सम्यक् प्राप्ते सति लोकेषु कः वा दुर्लभः? न कोपि दुर्लभः, सर्वः अपि सुलभः। भोगमोक्षादिरूपं सकलसिद्धिजातमपि अवश्यमेव सम्भवति।

**कैवल्यकल्पतरवो गुरवः करुणालयाः।**
**दुर्लभा हि जगत्यस्मिन् शिवाद्वैतपरायणाः।।२७।।**

कैवल्यकल्पतरवः कैवल्यस्य कल्पतरुः इव सन्ति ये ते कैवल्यकल्पतरवः इष्टार्थप्रदायककल्पतरुवत् कैवल्यप्रदायकाः, करुणालयाः करुणायाः आलयः ये ते परमकरुणाशालिनः, शिवाद्वैत-परायणाः शिवाद्वैते परायणाः शिवाद्वैतसिद्धान्त-परिपूर्णज्ञानवन्तः गुरवः गुरुश्रेष्ठाः अस्मिन् जगति दुर्लभाः हि।

कैवल्यकल्पतरवः - अत्र उपमा। यथा कल्पतरवः अक्षयात्मकं फलजातं प्रयच्छन्ति तथैव गुरवः अपि जननमरणरहितशाश्वतिक-मोक्षरूपं फलं प्रयच्छन्ति इति उपमाध्वनिः।

**क्षीराब्धिरिव सिन्धूनां सुमेरुरिव भूभृताम्।**
**ग्रहाणामिव तिग्मांशुर्मणीनामिव कौस्तुभः।।२८।।**

**द्रुमाणामिव भद्रश्रीर्देवानामिव शङ्करः।**
**गुरुः शिवः परःश्लाघ्यो गुरूणां प्राकृतात्मनाम्।।२९।।**

सिन्धूनां समुद्राणां मध्ये क्षीराब्धिः इव क्षीरसागरः इव, भूभृतां पर्वतानां मध्ये सुमेरुः इव मेरुपर्वतः इव, ग्रहाणां मध्ये तिग्मांशुः इव सूर्यः इव, मणीनां मध्ये कौस्तुभः इव, द्रुमाणां मध्ये भद्रश्रीः इव श्रीगन्धवृक्षः इव, देवानां मध्ये शङ्करः इव, प्राकृतात्मनां गुरूणां मध्ये सामान्यगुरूणां मध्ये शिवः शिवस्वरूपवान् गुरुः एव परः श्लाघ्यः श्रेष्ठतरेण श्लाघनीयः। सिन्धुभूभृतादयः उपमानानि, प्राकृतगुरवः उपमेयम्, क्षीराब्धिसुमेर्वादयः उपमानानि, शिवरूपी गुरुः उपमेयम्, एवमत्र मालोपमालङ्कारः। श्रेष्ठत्वं श्लाघ्यत्वं च साधारणो धर्मः।

*।।इति निर्देशस्थलम्।।*

## (४०) शीलसम्पादनस्थलम्

**जिज्ञासा शिवतत्त्वस्य शीलमित्युच्यते बुधैः।**
**निर्देश्ययोगादार्याणां तद्वान् शीलीति कथ्यते।।३०।।**

आर्याणां पूज्यानामाचार्याणाम् निर्देश्ययोगात् निर्देशयितुं योग्यः निर्देश्यः तस्य योगात् सम्बन्धात् उपदेश्यं यत् ज्ञानं तस्य सम्बन्धात् कारणात् शिवतत्त्वस्य या जिज्ञासा ज्ञातुमिच्छा सा एव बुधैः शिवज्ञानसम्पन्नैः शीलम् इत्युच्यते। तद्वान् तत् शीलम् अस्य अस्तीति तद्वान् तादृशशीलवानेव शीली इति कथ्यते।

**प्रपन्नार्तिहरे देवे परमात्मनि शङ्करे।**
**भावस्य स्थिरतायोगः शीलमित्युच्यते बुधैः।।३१।।**

प्रपन्नार्तिहरे प्रपन्नानाम् आर्तिं हरति इति तस्मिन् शरणागतानां संसारदुःखदुःखितानां पीडादिदूरीकरणसमर्थे परमात्मनि देवे शङ्करे विषये भावस्य मनोभावादिकस्य स्थिरतायोगः स्थिरतायाः योगः चित्तादिकस्य स्थिरीकरणमेव शीलम् इति बुधैः उच्यते।

**शीलं शिवैकविज्ञानं शिवध्यानैकतानता।**
**शिवप्राप्तिसमुत्कण्ठा तद्योगी शीलवान् स्मृतः।।३२।।**

शिवैकविज्ञानं शिवे एकं च तत् विज्ञानं च शिवैकविज्ञानं शिवविषयकं प्रधानं च विशिष्टं ज्ञानम्, शिवध्यानैकतानता शिवस्य ध्याने एव एकतानता केन्द्रीकृतवृत्तित्वं, शिवप्राप्तिसमुत्कण्ठा शिवस्य प्राप्तेः समुत्कण्ठा शिवाद्वैतप्राप्तौ अतीव लालस्यम् इति एतत् शीलमुच्यते, तद्योगी तस्य शीलस्य योगवान् एव शीलवान् इति स्मृतः।

**शिवादन्यत्र विज्ञाने वैमुख्यं यस्य सुस्थिरम्।**
**तदासक्तमनोवृत्तिस्तमाहुः शीलभाजनम्।।३३।**

शिवात् अन्यत्र देवतान्तरे विज्ञाने विषये यस्य शिवयोगिनः वैमुख्यं विमुखस्य भावः विमुखत्वं तु सुस्थिरं वर्तते दृढतरं वर्तते, तदासक्तमनोवृत्तिः तस्मिन् आसक्ता मनसः वृत्तिः यस्य सः केवलं शिवे एव संसक्तमनोव्यापारवान् च वर्तते तम् शीलभाजनं शीलस्य भाजनम् अर्हम् योग्यमिति आहुः कथयन्ति, एतदेव शीलभाजनस्थलम्।

**पतिव्रताया यच्छीलं पतिरागात् प्रशस्यते।**
**तथा शिवानुरागेण सुशीलोऽभक्त उच्यते।।३४।।**

पतिव्रतायाः स्त्रियः यत् शीलम् आचारजातं पतिरागात् पत्युः रागात् पतिविषयकानुरागात् प्रशस्यते श्रेष्ठत्वमाप्नोति तथैव शिवानुरागेण शिवस्य अनुरागेण शिवविषयकभक्त्यतिशयेन अभक्तः न विद्यते भक्तः यस्मात् सः असदृशभक्तः शिवयोगी सुशीलः इति उच्यते।

शिवजीवयोः पतित्वसतीत्व-समारोपस्य प्रतीतेः रूपकध्वनिः। यथा पतिव्रता स्त्री स्वपतिप्रीत्या प्रशस्ता वर्तते तथैव अमित-शिवभक्तः स्वशिवभक्त्या सुशीलः भवतीति उपमाध्वनिः।

**पतिं विना यथा स्त्रीणां सेवान्यस्य तु गर्हणा।**
**शिवं विना तथान्येषां सेवा निन्द्या कृतात्मनाम्।।३५।।**

स्त्रीणां यथा पतिं विना अन्यस्य सेवा तु गर्हणा निन्द्या वर्तते तथैव कृतात्मनां कृतार्थानां शिवभक्तानां शिवं विना अन्येषां देवानां सेवा अपि निन्द्या भवति।

यथा पतिव्रता स्त्री स्वपतिसेवया प्रशंसार्हा भवति तथैव शिवयोगी शिवसेवया प्रशंसार्हः भवति - इति साधर्म्यमूलः उपमा-ध्वनिः। यथा स्त्री स्वपतिं विना अन्यस्य सेवया निन्द्या भवति तथैव शिवभक्तः शिवं विना अन्यस्य देवतान्तरस्य सेवया निन्द्यः भवतीति वैधर्म्यमूलः उपमाध्वनिः।

**बहुनात्र किमुक्तेन शिवज्ञानैकनिष्ठता।**
**शीलमित्युच्यते सद्भिः शीलवांस्तत्परो मतः।।३६।।**

अत्र शीलस्य विषये बहुना उक्तेन किम्? शिवज्ञानैकनिष्ठता शिवज्ञाने एव केवलम् एकनिष्ठता एव शीलमिति सद्भिः उच्यते। तत्परः तस्य शीलस्य परः आसक्तः शीलवान् इति मतः।

**शिवात्मबोधैकरतः स्थिराशयः**
**शिवं प्रपन्नो जगतामधीशम्।**
**शिवैकनिष्ठाहितशीलभूषणः**
**शिवैक्यवानेव हि कथ्यते बुधैः।।३७।।**

शिवात्मबोधैकरतः शिवात्मबोधे एकरतः लिङ्गाङ्गज्ञाने एव सदा आसक्तचित्तः सन् स्थिराशयः स्थिरः आशयः यस्य सः लिङ्गाङ्गज्ञानविषये

सतीपतिभावापन्नः सन् जगताम् अधीशं शिवं प्रपन्नः शरणं गतश्च सन्, अपि च शिवैकनिष्ठाहितशीलभूषणः शिवे एकनिष्ठायाम् आहितं शीलम् एव भूषणं यस्य सः शिवे एव केवलं निष्ठत्वात् सुशीलत्वालङ्कारयुक्तवान् च सन् यः शिवयोगी सः एव शिवैक्यवान् ऐक्यस्थलवान् इति बुधैः शिवशास्त्रप्रवीणैः कथ्यते हि।

अत्र द्वितीयपादे उपेन्द्रवज्रावृत्तत्वम्, प्रथम-तृतीयचतुर्थपादेषु वंशस्थवृत्तत्वम्। एवम् उपजातिः छन्दः। 'जतौ तु वंशस्थमुदीरितं जरौ, इति वंशस्थलक्षणम्। 'उपेन्द्रवज्रा जतजास्ततो गौ' उपेन्द्रवज्रावृत्तस्य लक्षणम्।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ शरणस्य चतुःस्थलप्रसङ्गो नाम*

*॥त्रयोदशः परिच्छेदः॥*



# ।।चतुर्दशः परिच्छेदः।।

## ।।ऐक्यस्थलम्।।

### ।।अगस्त्य उवाच।।

**तामसत्यागसम्बन्धान्निर्देशाच्छीलतस्तथा ।**
**शरणाख्यस्य भूयोऽस्य कथमैक्यनिरूपणम्।।१।।**

तामसत्यागसम्बन्धात् तामसस्य त्यागः तस्य सम्बन्धात् समग्रतमोगुण-परित्यागयोगात् निर्देशात् शिवज्ञानस्य निर्देशात् बोधात्शीलतः तथा तथैव शीलात् शीलसम्पादनाच्च शरणाख्यस्य अस्य शरणस्थलसम्पन्नस्य शरणस्य अस्य शिवयोगिनः भूयः आधिक्येन ऐक्यनिरूपणं लिङ्गाङ्गयोः भेदघटितत्वात् कथम् ऐक्यनिरूपणं ऐक्यस्य निरूपणं सम्प्राप्तिः केन वा प्रकारेण सम्भवति?

### ।।रेणुक उवाच।।

**प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।**
**शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्।।२।।**

प्राणलिङ्गादियोगेन प्राणलिङ्गादेः योगेन प्राणलिङ्गस्य भावलिङ्गस्य च पूजाध्यानादि-सम्बन्धेन सुखातिशयम् सुखस्य अतिशयम् आधिक्यम् अधिकं शिवसुखम् एयिवान् प्राप्तवान् सन् शरणाख्यः शरणस्थलसम्पन्नः शिवयोगी शिवेन शिवलिङ्गेन साकम् ऐक्य-भावनात् ऐक्यस्य परिपूर्णाभिदस्य समरसस्य भावनात् चिन्तनात् ऐक्यवान् ऐक्यस्थली भवेत्।

एयिवान् = प्राप्तवान्, लब्धवान् इत्यर्थः।

**ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव।**
**ऐक्यमाचारसम्पत्तिरेक - भाजनमेव च।।**
**सहभोजनमित्येषां क्रमाल्लक्षणमुच्यते।।३।।**

हे मुनिपुङ्गव! हे मुनिश्रेष्ठ! इदम् ऐक्यस्थलं तु चतुर्धा चतुर्विधत्वेन प्रोक्तम् - ऐक्यस्थलम्, आचारसम्पत्तिस्थलम्, एकभाजनस्थलम्, सहभोजनस्थलञ्चेति, एतेषां लक्षणं क्रमादुच्यते।

## (४१) ऐक्यस्थलम्

**विषयानन्दकणिकानिःस्पृहो निर्मलाशयः।**
**शिवानन्दमहासिन्धुमज्जनादैक्यमुच्यते ।।४।।**

विषयानन्दकणिकानिःस्पृहः विषयेभ्यः आनन्दः तस्य कणिका तस्यां निःस्पृहः - शब्दस्पर्शरूपरसगन्धरूपेभ्यः विषयेभ्यः यः आनन्दः तस्य कणिकायां लवलेशमात्रायामपि नितरामाशारहितः सन् निर्मलाशयः निर्मलः आशयः यस्य सः परिशुद्धचित्तवृत्तिः सन् शिवानन्दमहासिन्धुमज्जनात् शिवानन्दः एव महासिन्धुः तत्र मज्जनात् परशिवानन्दरूपे महासमुद्रे तादात्म्यभावेन अनुप्रविश्य स्नानकरणात् ऐक्यम् ऐक्यस्थलम् इत्युच्यते।

शिवानन्दमहासिन्धु — इत्यत्र रूपकम्।

**निर्धूतमलसम्बन्धो निष्कलङ्कमनोगतः।**
**शिवोऽहमिति भावेन निरूढो हि शैवैक्यताम्।।५।।**

निर्धूतमलसम्बन्धः निर्धूतः मलस्य सम्बन्धः येन सः पूर्णतया दूरीकृतमलत्रयसम्बन्धवान् सन् निष्कलङ्कमनोगतः निष्कलङ्कं मनसः गतं यस्य सः निष्कलङ्कमनोगतः कलङ्करहितचित्ताभिप्रायवान् सन् शिवः अहम् इति भावेन शिवैक्यतां शिवेन सह सामरस्यं निरूढः प्राप्तवान् भवति।

**शिवेनैक्यं समापन्नश्चिदानन्दस्वरूपिणा।**
**न पश्यति जगज्जालं मायाकल्पितवैभवम्।।६।।**

चिदानन्दस्वरूपिणा सच्चिदानन्दात्मकेन शिवेन सह ऐक्यं समापन्नः शिवयोगी जगज्जालं जगतः जालं समस्तं जगत् मायाकल्पितवैभवं मायया कल्पितं वैभवं यस्य तत् मायाशक्त्या परिकल्पितवैभवात्मकं सत् वर्तते इति भावयन् न पश्यति।

**ब्रह्माण्डबुद्बुदोद्भेदविजृम्भी तत्त्ववीचिमान्।**
**मायासिन्धुर्लयं याति शिवैक्यवडवानले।।७।।**

ब्रह्माण्डबुद्बुदोद्भेद-विजृम्भो ब्रह्माण्डानि एव बुदबुदाः तेषाम् उद्भेदः तेन विजृम्भो ब्रह्माण्डरूपबुद्बुदानाम् उद्गतत्वात् विजृम्भमाणः तत्त्ववीचिमान् तत्त्वानि एव वीचयः यस्य सः षट्त्रिंशत्तत्त्ववीचिमान् मायासिन्धुः माया एव सिन्धुः मायारूपः समुद्रः शिवैक्यवडवानले शिवैक्यमेव वडवानलः तस्मिन् लयं याति लयत्वं प्राप्नोति।

ब्रह्माण्डबुद्बुद – तत्त्ववीचि - मायासिन्धु-शिवैक्यवडवानलइत्यत्र रूपकम्। बुद्बुदाः, वीचयः, वडवानलः इत्येते समुद्रमाश्रित्य वर्तन्ते। समुद्रस्य वडवानलस्य च आधाराधेयभावः। वडवानलः अल्पः, समुद्रः महान्। आधेयरूपे वडवानले आधाररूपस्य समुद्रस्य लयत्ववर्णनात् महतः आधारापेक्षया आधेयस्य आधिक्यवर्णनात् अधिकालङ्कारः। 'अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम्' इति लक्षणम्।

**मायाशक्तितिरोधानाच्छिवे भेदविकल्पना।**
**आत्मनस्तद्विनाशे तु नाद्वैतात्किञ्चिदिष्यते।।८।।**

शिवे मायाशक्तितिरोधानात् मायाशक्तेः तिरोधानात् परमेश्वरे मायाशक्तेः अन्तर्भावात् आत्मनः जीवात्मनः भेदकल्पना भेदस्य कल्पना स्यात्। तद्विनाशे मायाप्रसरणस्य विनाशे सति तु अद्वैतात् जीवेश्वरयोः अद्वैतभावं विना किञ्चिदपि न इष्यते ईषदपि भेदः नैव प्रतीयते।

**इष्यते** – इष -गतौ, कर्मणि लट्।

**पशुत्वं च पतित्वं च मायामोहविकल्पितम्।**
**तस्मिन् प्रलयमापन्ने कः पशुः? को नु वा पतिः?।।९।।**

पशुत्वं च पतित्वं च इति भावत्वं तु मायामोहविकल्पितम् मायायाः मोहः तेन विकल्पितम् वर्तते, तस्मिन् मायामोह-विकल्पितत्वे प्रलयम् आपन्ने नाशंगते सति पशुः कः पतिः वा कः नु? पशोः पत्युश्च न कश्चिदपि भेदः।

**घोरसंसारसर्पस्य भेदवल्मीकशायिनः।**
**बाधकं परमाद्वैतभावना परमौषधम्।।१०।।**

भेदवल्मीकशायिनः भेदः एव वल्मीकः तत्र शेते इति तस्य भेदरूपवल्मीकमाश्रित्य वर्तमानस्य, घोरसंसारसर्पस्य घोरश्चासौ संसारश्च स एव सर्पः तस्य जननमरणादिना भयङ्करस्य संसाररूपसर्पस्य बाधकं विनाशकं परमौषधं तु परमाद्वैत-भावना जीवेश्वरयोः श्रेष्ठतमशिवाद्वैतभावना एव भवति।

घोरसंसारे सर्पत्वस्य, भेदे वल्मीकस्य, अद्वैतभावनायां औषधस्य च समारोपात् रूपकम्।

यथा विषापहारकमौषधं वल्मीकशायिनं सर्पं हन्ति तथैव भेदात्मकं घोर संसारबन्धनं नाशयतीति उपमाध्वनिः। भेदस्तु– (१) जडाजडभेदः (२) जीवाजीवभेदः (३) जीवजडभेदः (४) जीवेश्वरभेदः (५) जडेश्वरभेदश्चेति पञ्चविधः।

**भेदबुद्धिसमुत्पन्नमहासंसारसागरम् ।**
**अद्वैतबुद्धिपोतेन समुत्तरति देशिकः।।११।।**

भेदबुद्धिसमुत्पन्नमहासंसारसागरम् भेदानां बुद्धिः तया भेदबुद्ध्या समुत्पन्नः महासंसारः एव सागरः तम्, पूर्वोक्तैः पञ्चविधैः भेदबुद्धिभिः समुत्पन्नं महासंसाररूपसागरं देशिकः आचार्यः गुरुः अद्वैतबुद्धिपोतेन अद्वैतबुद्धिरेव पोतः तेन अद्वैतबुद्धिरूपपोतसाधनेन समुत्तरति सम्यक् तरणं करोति।

महासंसारसागर-अद्वैतबुद्धिपोत-इत्यत्र रूपकम्। यथा नाविकः पोतस्य सहायेन समुद्रतरणं करोति तथैव देशिकः अद्वैतबुद्धिसाधनेन भेदबुद्धिं तरति इति उपमाध्वनिः। भेदबुद्धिसमुत्पन्न - इत्यत्र पञ्चविधभेदाः एव नानानद्यः प्रतीताः भवन्ति, अतः रूपकध्वनिः। प्रकृतेन देशिकस्य वृत्तान्तेन अप्रकृतस्य नाविकस्य वृत्तान्तः प्रतीयते इति समासोक्त्यलङ्कारः। अस्थ लक्षणं– 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति।

**अज्ञानतिमिरोद्रिक्ता कामरक्षःक्रियाकरी।**
**संसारकालरात्रिस्तु नश्येदद्वैतभानुना।।१२।।**

अज्ञानतिमिरोद्रिक्ता अज्ञानमेव तिमिरं तेन उद्रिक्ता अज्ञानरूपगाढान्धकारेण समुत्पन्ना सञ्जाता कामरक्षःक्रियाकरी कामः एव रक्षः तस्य क्रियां करोति इति मन्मथरूपराक्षसस्य रात्रि-संचरणरूपक्रिया सम्पादयित्री संसारकालरात्रिस्तु

संसारः एव कालरात्रिः संसाररूपकालरात्रिस्तु अद्वैतभानुना अद्वैतमेव भानुः तेन नश्येत् दूरीकृता स्यात्।

अज्ञानतिमिर-कामरक्षः-संसारकालरात्रि-अद्वैतभानु-इत्यत्र रूपकम्। यथा सूर्यः गाढान्धकारयुक्तकरालरात्रिं नाशयति, तथैव अद्वैतसिद्धिरेव अज्ञान-समुत्पन्नकामोद्रेककारिणं संसारं नाशयति इति उपमाध्वनिः।

**तस्मादद्वैतभावस्य सदृशो नास्ति योगिनाम्।**
**उपायो घोरसंसारमहाताप - निवृत्तये।।१३।।**

तस्मात्, योगिनां शिवाद्वैतसिद्धिसम्पन्नानां शिवयोगिनां घोरसंसार महातापनिवृत्तये घोरश्चासौ संसारश्च घोर - संसारः तस्य महातापस्य निवृत्तये घोरसंसाररूपमहातापस्य निवारणे अद्वैतभावस्य सदृशः समानः उपायः नास्ति। महातापनिवृत्तिः - इत्यनेन तापनिवारणं चन्द्रेणैवेति प्रतीयते इत्यतः अद्वैतभावस्य चन्द्रत्वसमारोपरूपरूपकध्वनिः। यथा चन्द्रः तापनिवारणे समर्थः तथैव संसारतापनिवारणे अद्वैतभावः समर्थः इति उपमाध्वनिः।

**अद्वैतभावनाजातं क्षणमात्रेऽपि यत्सुखम्।**
**तत्सुखं कोटिवर्षेण प्राप्यते नैव भोगिभिः।।१४।।**

अद्वैतभावनाजातं अद्वैतस्य भावनया जातम् उत्पन्नम् यत् सुखं शिवानन्दात्मकं सुखं तु क्षणमात्रे अपि क्षणकालं वा अनुभूते सत्यपि तत्सुखं तच्च सुखं भोगिभिः राजभोगसदृश-भोगमनुभवद्भिः भोगिजनैः कोटिवर्षेण अपि नैव प्राप्यते।

**प्राप्यते** – प्र+आप् - कर्मणि लट्।

**चित्तवृत्ति - समालीनजगतः शिवयोगिनः।**
**शिवानन्दपरिस्फूर्तिर्मुक्तिरित्यभिधीयते ।।१५।।**

चित्तवृत्तिसमालीनजगतः चित्तस्य वृत्तिः तस्यां समालीनं जगत् यस्य सः तस्य चित्तवृत्तावेव समालीन-प्रपञ्चस्य शिवयोगिनः शिवानन्दपरिस्फूर्तिः शिवानन्दस्य परिस्फूर्तिः सम्भवति सा एव मुक्तिः इति अभिधीयते।

**अभिधीयते** — अभि+डुधाञ् - धारणे, कर्मणि लट्।

*।।इति ऐक्यस्थलम्।।*

## (४२) आचारसम्पत्तिस्थलम्

**शिवैकभावनापन्नशिवत्वो देहवानपि।**
**देशिको हि न लिप्येत स्वाचारैः सूतकादिभिः।।१६।।**

शिवैकभावनापन्नशिवत्व: शिवे एकभावना शिवैकभावना तया आपन्नं शिवत्वं येन सः स्वेन प्राप्तशिवैक्यभावस्य प्रभावात् प्राप्तशिवभावयुक्तः देशिकः आचार्यः देहवान् अपि सूतकादिभिः स्वाचारैः स्वमतादिसम्बन्धिभिः सूतकादिभिः आचारैः न लिप्येत-नैव लिप्तो भवति।

**लिप्येत** – लिप - उपदेशे, विधिलिङ्।

**शिवाद्वैत-परिज्ञाने स्थिते यति मनस्विनाम्।**
**कर्मणा किंतु भाव्यं स्यादकृतेन कृतेन वा?।।१७।।**

मनस्विना जितेन्द्रियाणाम् अत एव लिङ्गैक्य-निष्ठचित्तवृत्तीनां शिवाद्वैत परिज्ञाने स्थिते सति स्थिरतया वर्तमाने सति अकृतेन कर्मणा निषिद्धकर्मणा वा अथवा कृतेन कर्मणा प्रयुक्त-सत्कर्मणा वा किंनु भाव्यं स्यात्? न किञ्चिदपि भाव्यम्।

**शम्भोरेकत्वभावेन सर्वत्र समदर्शनः।**
**कुर्वन्नपि महाकर्म न तत्फलमवाप्नुयात्।।१८।।**

सर्वत्र लोष्टाश्म-काञ्चनादिषु समदर्शनः समानभाववान् सन् शिवलिङ्गैक्यः शम्भोः विषये एकत्वभावेन शिवैक्यबुद्ध्या महाकर्म पुण्यपापादिरूपं महत्कर्म कुर्वन्नपि आचरन्नपि तत्फलं तस्य महाकर्मणः फलं तु नैव आप्नुयात्।

**आप्नुयात्** – आप्लृव्याप्तौ, विधिलिङ्।

**सुकृती दुष्कृती वापि ब्राह्मणो वान्त्यजोऽपि वा।**
**शिवैकभावयुक्तानां सदृशो भवति ध्रुवम्।।१९।।**

शिवैकभावयुक्तानां शिवे एकेनैव भावेन युक्तानां शिवयोगिनाम् सुकृती वा पुण्यवान् वा दुष्कृती दुष्टकर्मवान् वा ब्राह्मणः वा अन्त्यजः अपि वा सः सर्वः अपि जनः सदृशः समानभाववान् एव भवति, इति ध्रुवम् निश्चयः। सर्वत्र

यस्मात् सर्वत्र शिवस्वरूपमेव पश्यति तस्मात् सर्वं शिवमयं जगत् इति शिवमयत्वबुद्ध्या सर्वत्र प्रवर्तते।

**वर्णाश्रमसदाचारैर्ज्ञानिनां किं प्रयोजनम्?।**
**लौकिकस्तु सदाचारः फलाभावेऽपि भाव्यते।।२०।।**

वर्णाश्रमसदाचारैः वर्णाश्च आश्रमाश्च वर्णाश्रमाः तेषां सदाचारैः ब्राह्मणादिचतुर्वर्णानां ब्रह्मचर्याद्याश्रमाणां च निर्दिष्टैराचारैः ज्ञानिनां शिवज्ञानसम्पन्नानां शिवयोगिनां किं प्रयोजनम्? न किमपि प्रयोजनम्। अथापि लौकिकस्तु सदाचारः वर्णाश्रमिणां विहितः सदाचारस्तु फलाभावेऽपि फलस्य अभावेऽपि अवश्यं भाव्यते विधीयते, आचरणीय एव।

ब्राह्मणः क्षत्रियः वैश्यः शूद्रः इति चत्वारः वर्णाः, तथैव ब्रह्मचारी, गृहस्थः, वानप्रस्थः, संन्यासः इति चत्वारः आश्रमाः।

**निर्दग्धकर्मबीजस्य निर्मलज्ञानवह्निना।**
**देहिवद् भासमानस्य देहयात्रा तु लौकिकी।।२१।।**

निर्मलज्ञानवह्निना निर्मलं च तत् ज्ञानं च निर्मलज्ञानम् निर्मलज्ञानमेव वह्निः तेन निर्मलशिवाद्वैतज्ञानाग्निना निर्दग्धकर्मबीजस्य निर्दग्धं च तत् कर्म च निर्दग्धकर्म तदेव बीजं यस्य तस्य नितरां दग्धकर्मरूपबीजस्य शिवयोगिनः परं देहिवत् देहः अस्य अस्तीति देही स इव देहिवत् भासमानस्य तस्य देहयात्रा तु देहस्य यात्रा उपस्थितिस्तु केवलं लौकिकी लोकव्यवहारवती एव वर्तते।

दग्धेन बीजेन यथा अङ्कुरादिकं नैव सम्भवति, अपि च तद्यथा केवलं बीजमिव प्रतिभाति तथैव निर्मलज्ञानेन विनाशित - कर्मणः शिवयोगिनः शरीरधारणं केवलं लोकव्यवहारार्थम् एव-इति उपमाध्वनिः। कर्मणि बीजस्य ज्ञाने वह्नेश्च समारोपात् रूपकम्।

**शिवज्ञानसमापन्नस्थिरवैराग्यलक्षणः ।**
**स्वकर्मणा न लिप्येत पद्मपत्रमिवाम्भसा।।२२।।**

शिवज्ञानेन समापन्नं स्थिरं च तत् वैराग्यं च शिवज्ञानसमापन्नस्थिर-वैराग्यम् तदेव लक्षणं यस्य सः शिवाद्वैतज्ञानसम्पदा प्राप्तस्थिरवैराग्यवान्

शिवयोगी तु स्वकर्मणा नित्यनैमित्तिकेन स्वकर्मणा स्वेन कर्मणा अम्भसा जलेन पद्मपत्रम् इव न लिप्येत सम्पर्करहितः स्यात्। शिवज्ञानस्य वैराग्यस्य च कारणकार्यभावः। पद्मपत्रस्य जललेपः यथा न सम्भवति तथैव शिवयोगिनः कर्मलेपः न सम्भवतीति उपमाध्वनिः।

**गच्छंस्तिष्ठन् स्वपन् वापि जाग्रद् वापि महामतिः।**
**शिवज्ञान-समायोगाच्छिवपूजापरः सदा।।२३।।**

महामतिः शिवज्ञानसम्मतिमान् शिवलिङ्गैक्यबुद्धिमान् शिवयोगी शिवज्ञानसमायोगात् शिवज्ञानस्य नैरन्तर्यसम्पर्कात् गच्छन् सन् तिष्ठन् सन् स्वपन् वापि सन् जाग्रद् वापि सन् सदा शिवपूजापरः एव सन् वर्तते।

**यद्यत् पश्यति सामोदं वस्तु लोकेषु देशिकः।**
**शिवदर्शनसम्पत्तिस्तत्र तत्र महात्मनः।।२४।।**

देशिकः शिवलिङ्गैक्यवान् शिवयोगी लोकेषु बाह्यजगति सामोदं मोदेन सह वर्तते यस्मिन् कर्मणि तद्यथा स्यात् तथा प्रीतिपूर्वकं यद्यत् वस्तु पश्यति घटपटादि-प्राणिपक्ष्यादितरुगुल्मादि-स्त्रीपुरुषादि-इत्येवं विधादि यत् यत् वस्तु पश्यति तत्र तत्र सर्वत्र वस्तुनि विषये महात्मनः शिवयोगिनः शिवदर्शन-सम्पत्तिः शिवस्य दर्शनसम्पत्तिः एव जायते। 'सर्वं शिवमयं जगत्' इतिवत्।

**यद्यच्चिन्तयते योगी मनसा शुद्धभावनः।**
**तत्तच्छिवमयत्वेन शिवध्यानमुदाहृतम्।।२५।।**

शुद्धभावनः निर्मलभाववान् योगी शिवयोगी मनसा यत् यत् चिन्तयते चिन्तां करोति तत् तत् शिवमयत्वेन शिवस्वरूपकत्वेन कारणेन शिवध्यानमेवेति उदाहृतम् कथितम्।

'आत्मा त्वं गिरिजा मतिः परिजनाः प्राणाः शरीरं, गृहं। पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः। सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो, यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्।' इति श्रीशङ्कराचार्याणाम् मानसपूजास्तुतिः स्मर्तव्या।

**यत्किञ्चित् भावितं लोके स्वेच्छया शिवयोगिना।**
**शिवस्तोत्रमिदं सर्वं यस्मात् सर्वात्मकः शिवः।।२६।।**

शिवयोगिना स्वेच्छया लोके यत् किञ्चिदपि वा वस्तु मनसि भावितं स्यात् चेत् तदिदं सर्वमपि शिवस्तोत्रमेव, यस्मात् कारणात् शिवः सर्वात्मकः वर्तते।

शिवस्तोत्रत्वं शिवस्य सर्वात्मकत्वं समर्थयतीति काव्यलिङ्गालङ्कारः।

**या या चेष्टा समुत्पन्ना जायते शिवयोगिनाम्।**
**सा सा पूजा महेशस्य सर्वदा तद्गतात्मनाम्।।२७।।**

शिवयोगिनां शिवलिङ्गैक्यसम्पन्नानां शिवयोगिनाम् या या चेष्टा शारीरी वा मानसी वा या या क्रिया समुत्पन्ना जायते सम्भवति, तद्गतात्मनां तस्मिन् शिवे तादात्म्यरूपस्वरूपवतां तेषां शिवयोगिनां सर्वदैव सा सा क्रिया महेशस्य पूजा एव वर्तते।

*।।इति आचारसम्पत्तिस्थलम्।।*

## (४३) एकभाजनस्थलम्

**विश्वं शिवमयं चेति सदा भावयतो धिया।**
**शिवैक - भाजनात्मत्वादेकभाजनमुच्यते।।२८।।**

विश्वं तु शिवमयं च वर्तते इति धिया सदा भावयतः स्वहृदये चिन्तयतः लिङ्गैक्यस्य शिवयोगिनः शिवैकभाजनात्मत्वात् शिवः एव एकं भाजनं तदेव आत्मा यस्य तस्य भावात् शिव एव प्रधानमाश्रयस्थानम् इति दृढभावना-सत्त्वात् सः शिवयोगी एकभाजनम् इत्युच्यते एकभाजनस्थलीति कथ्यते।

**स्वस्य सर्वस्य लोकस्य शिवस्याद्वैतदर्शनात्।**
**एकभाजनयोगेन प्रसादैक्यमतिर्भवेत्।।२९।।**

स्वस्य शिवयोगिनः सर्वस्य लोकस्य च विषये शिवस्यैव अद्वैतदर्शनात् कारणात् एकभाजनयोगेन एकं च तत् भाजनं च तस्य योगेन एकस्यैव आश्रयत्वस्य सम्बन्धात्, प्रसादैक्यमतिः प्रसादे विषये ऐक्यबुद्धिरपि भवेत्-तद्यथा- शिवस्य प्रसाद एव स्वस्य प्रसादः, स्वस्य प्रसाद एव शिवस्य प्रसादः, अपि च अर्थापत्त्या-न केवलं प्रसादविषये परं शिवलिङ्ग-गुरु-जङ्गमानाम् पादोदकविषयेऽपि ऐक्यबुद्धिः भवेत्।

**शिवे विश्वमिदं सर्वं शिवः सर्वत्र भासते।**
**आधाराधेयभावेन शिवस्य जगतः स्थितिः।।३०।।**

शिवे इदं सर्वं विश्वमपि भासते तथैव शिवः सर्वत्र भासते, एवं शिवस्य जगतश्च स्थितिः तावत् आधाराधेयभावेन वर्तते आधारश्च आधेयश्च आधाराधेयौ तयोः भावेन शिवः आधारः जगत् आधेयमिति भावेन वर्तते।

**चिदेकभाजनं यस्य चित्तवृत्तेः शिवात्मकम्।**
**नान्यत् तस्य किमेतेन मायामूलेन वस्तुना?।।३१।।**

यस्य यस्य लिङ्गैक्यस्य शिवयोगिनः चित्तवृत्तेः मनोव्यापारस्य चित् एव ज्योतिरेव मनोव्यापाररूपा ज्ञप्तिः एव शिवात्मकं शिवस्वरूपकम् एकभाजनम् एकाश्रयकं वर्तते तस्य तादृशस्य शिवयोगिनः मायामूलेन मायाकारणवता एतेन वस्तुना पुरोदृश्यमानेन वस्तुना किम्? न किमपि, अन्यत् प्रयोजनमेव नास्ति।

**चित् प्रकाशयते विश्वं तद्विना नास्ति वस्तु हि।**
**चिदेकनिष्ठचित्तानां किं मायापरिकल्पितैः?।।३२।।**

चित् ईश्वरत्वं तावत् विश्वं प्रकाशयते, तद्विना तया चिदा विना वस्तु न अस्ति हि, तस्मात् चिदेकनिष्ठचित्तानां चिति एकनिष्ठं चित्तं येषां तेषां शिवैक्यम् आप्तानां शिवयोगिनां मायापरिकल्पितैः वस्तुभिः किं किं प्रयोजनम्? न किमपि प्रयोजनम्।

चित् - इति पदस्य विरूपाक्षपञ्चाशिकायाम् एवम् पर्याय - पदानि दत्तानि।

**'ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपा चेति।**
**एतेऽहंतायाः किल पर्यायाः सद्भिरुच्यन्ते।।'(श्लो.८)**

**'रूपादिपञ्चविषयात्मनि भोग्यहृषीकभोक्तृरूपेऽस्मिन्।**
**जगति प्रसरदनन्तस्वशक्तिचक्रा चितिर्भाव्या।।'(श्लो.१४)**

ईश्वरत्वम्, सर्वज्ञत्वम्, सर्वकर्तृत्वम्, सर्वस्वतन्त्रत्वम्, चित्स्वरूपत्वम्, अहन्ता, शिवोऽहम्भावत्वम् - इत्येतानि चितः पर्यायपदानि।

**वृत्तिशून्ये स्वहृदये शिवलीने निराकुले।**
**यः सदा वर्तते योगी स मुक्तो नात्र संशयः।।३३।।**

वृत्तिशून्ये निस्तरङ्गवत् व्यापारशून्ये शिवलीने केवलं शिवैक्ये शिवलिङ्गैक्यभूते निराकुले क्षोभादिरहिते निर्वातस्थलस्थदीपवत् निश्चले स्वहृदये यः शिवयोगी सदा वर्तते आत्मानुसन्धानपरो वर्तते सः मुक्तः जीवन्मुक्तः इत्यत्र न संशयः।

*।।इति एकभाजनस्थलम्।।*

## (४४) सहभोजस्थलम्

**गुरोः शिवस्य शिष्यस्य स्वस्वरूपतया स्मृतिः।**
**सहभोजनमाख्यातं सर्वग्रासात्मभावतः।।३४।।**

गुरुः शिवस्य शिष्यस्य च स्वस्वरूपतया स्वातिरिक्तं किमपि नास्तीति भावनया या स्मृतिः परिज्ञानं सैव सर्वग्रासात्मभावतः सर्वस्य ग्रासः एव आत्मा सर्वग्रासात्मा तस्य भावतः भावात् शिवोऽयमात्मा आत्मायं शिवः शिवोऽहम् इत्यात्मकात् भावात् परस्परं भेदबुद्धेः ग्रसनात् भक्षणात् नाशाद्वा एतत् सहभोजनम् इति आख्यातम्। गुरुशिवशिष्याणां मध्ये परस्परं शिवोऽहंभावात् भेदबुद्धिग्रसनम् इति भावः।

**शिवं विश्वं गुरुं साक्षात् योजयेन्नित्यमात्मनि।**
**एकत्वेन चिदाकारे तदिदं सहभोजनम्।।३५।।**

शिवम् विश्वम् गुरुं च साक्षात् प्रत्यक्षरूपे चिदाकारे शिवाभिन्नत्वाकारे शिवस्वरूपे आत्मनि नित्यं सदाकाले एकत्वेन परिपूर्णाभिन्नत्वेन योजयेत् संयोजयेत्। तदिदं तथा अभिन्नत्वेन संयोजनमेव सहभोजनम् इति ज्ञेयम्। अर्थापत्त्याच इदं रूपतया भासमानस्य जडस्यापि आत्मन्येव विश्रान्तत्वात् शिव-विश्व-गुरु-शिष्य-जडानामपि सहभोजनत्वम् आत्मैक्यसंयोजनात् सम्भवतीति भावः।

**अयं शिवो गुरुश्चैव जगदेतच्चराचरम्।**
**अहञ्चेति मतिर्यस्य नास्त्यसौ विश्वभोजकः।।३६।।**

अयं शिवः, एषः गुरुश्च, एतत् चराचरं जगच्च, अहम् च-मतिः प्रत्येकताविशिष्टभेदबुद्धिः यस्य यस्य शिवलिङ्गैक्यस्य शिवयोगिनः न अस्ति असौ एव विश्वभोजकः इति व्यपदिश्यते।

**अहं भृत्यः शिवः स्वामी शिष्योऽहं गुरुरेव वै।**
**इति यस्य मतिर्नास्ति स चाद्वैतपदे स्थितः।।३७।।**

अहं भृत्यः, शिवश्च स्वामी, अहं शिष्यः, एषः वै गुरुः इति मतिः यस्य नास्ति स च सः एव शिवयोगी अद्वैतपदे अद्वैतस्थाने शिवाद्वैतस्थितौ स्थितः वर्तते।

**पराहन्तामये स्वात्मपावके विश्वभास्वति।**
**इदन्ताहव्यहोमेन विश्वहोमीति कथ्यते।।३८।।**

पराहन्तामये उत्कृष्टत्वमूलायाः पराहन्तायाः सकाशात् समुत्पन्ने पराहन्तारूपे, विश्वभास्वति विश्वस्य सर्वस्य प्रकाशके, स्वात्मपावके स्वात्मा एव पावकः तस्मिन् स्वात्मरूपे अग्नौ इदन्ताहव्यहोमेन इदन्ता एव हव्यं इदन्ताहव्यम् तेन होमेन इदं शिवात् भिन्नम् इत्याकारकेण होमद्रव्येण क्रियमाणेन होमकार्येण शिवयोगी तावत् विश्वहोमी विश्वं जुहोति इति विश्वहोमी इति कथ्यते।

पराहन्तामयत्व-स्वात्मपावक-इदन्ताहव्य - इत्यत्र रूपकम्।

विरूपाक्षपञ्चाशिकायां पराहन्ता अहन्ता इदन्ता इति पदानां विवरणमेव दत्तमस्ति— (श्लो. ८, ९, १०)

**'ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपाचेति।**
**आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा।।'**

**'स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ।**
**अहमिति स एक उक्तोऽहन्ता स्थितिरीदृशी तस्य।।'**

प्रथमपुरुषः मध्यमपुरुषः उत्तमपुरुषश्चेति त्रयः पुरुषाः। सः तत् अयम् इत्यादयः प्रथमपुरुषाः त्वमिति मध्यमपुरुषः, अहमिति उत्तमपुरुषः। इदम्-

इत्यस्य भावः इदन्ता, अहम् इत्यस्य भावः अहन्ता। पूर्णा च असौ अहन्ता च पूर्णाहन्ता। इदन्तायाः अहन्तायाश्च ऐक्यं तावत् पूर्णाहन्तायाम्। पूर्णाहन्ता एव अत्युत्तमं तत्त्वम् आत्मतत्त्वम्। अस्य आत्मतत्त्वस्य प्राप्तिरेव निजसिद्धिः, मोक्षः। चिदात्मकैः देहादिभिः चिदात्मत्वप्राप्ति-स्थितिरेव जीवन्मुक्तावस्था।

पाञ्चभौतिकमिदं शरीरं तावत् अहन्ताभाव - सम्पन्नं सत् आधिव्याधिशोकसन्तापादीनां मूलकारणं सत् 'जीवन्मृतावस्था' इत्यवस्थाभाक् भवति। यदि ज्ञानक्रियात्मक-चैतन्यात्मके आत्मतत्त्वे अहन्तायाः समावेशः समरसो वा अद्वैतं वा ऐक्यं वा सम्भवति, स एव 'शिवोऽहम्भावः', अथवा 'जीवन्मुक्तावस्था।'

अहम् – इत्यस्य पदस्य निष्पत्तिः तावत् माहेश्वरसूत्रेभ्यः प्रत्याहाररूपेण लभ्यते। तद्यथा— अ इ उण् इति प्रथमं सूत्रम्, हल् इति अन्तिमं सूत्रम्। आदिमसूत्रस्थेन अकारेण साकम् अन्तिमसूत्रस्थस्य हकारस्य आयोजनेन अर्थात् प्रत्याहारेण 'अह' इति सम्पद्यते। अस्य प्रथमा विभक्तेः अन्तत्वेन 'अहम्' इति सम्पद्यते।

विमर्शरूपिणी या चितिशक्तिः सा एव परा वाणी इत्यपि व्यवह्रियते। अस्यामेव चितिशक्तौ अहम्– इत्यस्य स्फुरणम्। अथवा अहम् इत्यत्र नैरन्तर्येण चितिशक्तेः स्फुरणमेव अहन्ता। अहमित्यत्र पदे अकारमारभ्य हकारं यावत् वर्णाः प्रत्याहाररूपेण गृह्यन्ते खलु! एतादृशप्रत्याहारग्रहणमेव स्वरूपज्योतिः, शब्दब्रह्मस्वरूपिणी सूक्ष्मरूपा परा वाणी। एतेषां पञ्चाशद्वर्णानाम् आविर्भावस्तु अनया एव परावाणी इत्यपरपर्यायनामवत्या विमर्शशक्त्या एव। परशिवः प्रकाशरूपः, अस्य शक्तिरेव वर्णमातृका। एतैरेव वर्णैः समस्तं वाङ्मयं, समस्तं विश्वमपि संसृष्टमस्ति।

इत्येतासां कारिकाणां ससंग्रहमभिप्रायः काश्मीरदर्शनानुसारं ज्ञातव्यः।

**अहं शिवो गुरुश्चाहमहं विश्वं चराचरम्।**
**यया विज्ञायते सम्यक् पूर्णाहन्तेति सा स्मृता।।३९।।**

अहमेव शिवः अहमेव च गुरुः, अहमेव च चराचरं विश्वम् इति यया पूर्णाहन्तया सम्यगेव विज्ञायते सा एव पूर्णाहन्ता इति स्मृता।

**आधारवह्नौ चिद्रूपे भेदजातं जगद्धविः।**
**जुहोति ज्ञानयज्वा यः स ज्ञेयो विश्वहव्यभुक्।।४०।।**

चिद्रूपे ज्ञानस्वरूपे आधारवह्नौ आधारचक्रमेव वह्निः तस्मिन् वह्निरूपे आधारचक्रे भेदजातं समस्तभेद-युक्तं यत् जगद्धविः जगदेव हविः यः शिवयोगी जुहोति सः शिवयोगी एव ज्ञानयज्वा, विश्वहव्यभुक् विश्वरूपं हव्यं भुङ्क्ते इति विश्वहव्यभुक् इति ज्ञेयः।

आधारवह्नि-चिद्रूप-जगद्धविस् – इत्यत्र रूपकम्। यथा कश्चित् यज्वा विधिपूर्वकं प्रतिष्ठापिते अग्नौ समिदादिसमग्रं होमद्रव्यं सहविः हुत्वा तथाहुतं होमद्रव्यं प्रसादरूपेण स्वीकरोति तथैव शिवयोगिरूपः अग्निहोत्री आधारचक्रवह्नौ भेदपूर्ण-जगद्द्रव्यं हुत्वा तत्प्रसादं स्वीकरोति इति उपमाध्वनिः। **जुहोति**-हु दानादनयोः, लट्।

**चिदाकारे पराकाशे परमानन्दभास्वति।**
**विलीन-चित्तवृत्तीनां का वा विश्वक्रमस्थितिः?।।४१।।**

चिदाकारे ज्योतिः - स्वरूपात्मके, पराकाशे विकसित-हृदयकमलमध्ये परमानन्दभास्वति परमानन्दः एव भास्वान् तस्मिन् नित्यपरमानन्दमय-महालिङ्गाख्ये भानौ विलीन-चित्तवृत्तीनाम् विलीनाः चित्तस्य वृत्तयः येषां तेषाम् लयीभूत-सर्व - मनोव्यापारवताम् शिवलिङ्गैक्यानां शिवयोगिनां विश्वक्रमस्थितिः विश्वस्य क्रमः तस्य स्थितिः विश्वव्यवहारवर्तनं तावत् का वा स्यात्? न काप्यवस्थितिः वर्तते।

अत्र पराकाशे इत्यत्र ऊर्ध्वमुखात्मकहृत्कमलस्य समारोपः, परमानन्दे भास्वतः समारोपः इति रूपकम्।

**निरस्तविश्वसम्बाधे निष्कलङ्के चिदम्बरे।**
**भावयेल्लीनमात्मानं सामरस्यस्वभावतः।।४२।।**

निरस्तविश्वसम्बाधे निरस्तः विश्वस्य सम्बाधः यस्मिन् तस्मिन् सर्वात्मना दूरीकृतजननमरणादिरूपजगत्क्लेशे, निष्कलङ्के कलङ्करहिते दोषरहिते चिदम्बरे ज्ञानानन्दस्वरूपाकाशात्मके महालिङ्गे आत्मानम् अङ्गपदवाच्यं स्वात्मानं सामरस्यस्वभावतः सामरस्यस्य स्वभावात् स्वस्वरूपस्य हानिर्वा वृद्धिर्वा यथा न स्यात्तथारूपात् स्वाभाविकसमरसत्वात् लीनं सन्तं भावयेत् स्थिरनिजसिद्धिमन्तं सन्तं भावयेत्।

चिदम्बरे इत्यत्र अध्यवसानात् महालिङ्गस्य प्रतीतिः, तादृशमहालिङ्गस्य चिदम्बरस्य अभेदप्रतिपत्तेः रूपकातिशयोक्त्यलङ्कारः। अस्य लक्षणं तु–

'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः।' इति।

**सैषा विद्या परा ज्ञेया सत्तानन्दप्रकाशिनी।**
**मुक्तिरित्युच्यते सद्भिर्जगन्मोहनिवर्तिनी।।४३।।**

सत्तानन्दप्रकाशिनी सच्चिदानन्दस्वरूपप्रकाशकारिणी या विद्या सा एषा विद्या तु परा विद्या इतिज्ञेया, एषा एव जगन्मोहनिवर्तिनी जगतः मोहस्य निवर्तिनी दूरीकरण-सामर्थ्यवती अतएव विश्वभेदभ्रान्तिनिवारणी मुक्तिः इति सद्भिः शिवज्ञानपरिणतैः विद्वद्भिः उच्यते।

**भक्तादिधामार्पित - धर्मयोगात्**
**प्राप्तैकभावः परमाद्भुतेन।**
**शिवेन चिद्व्योममयेन साक्षान्-**
**मोक्षश्रियो भाजनतामुपैति।।४४।।**

चिद्व्योममयेन ऊर्ध्वमुखस्थविकसितहृत्कमलमध्ये सच्चिदानन्दात्मकत्वे प्रकाशमानेन, अत एव परमाद्भुतेन सृष्टिस्थितिलयतिरोधानानुग्रहरूपपञ्चकृत्यत्व-कारणात् षट्त्रिंशत्तत्त्वानां कारणीभूतत्वात् जीवन्मुक्तिप्रदातृत्वात् च परमाश्चर्यात्मक-स्वरूपयुक्तेन शिवेन साकं भक्तादिधामार्पितधर्मयोगात् - भक्तः महेशः प्रसादी प्राणलिङ्गी शरणः ऐक्यः इति षट्स्थलानां धामत्वात् आश्रयस्थानत्वात् अर्पितः-श्रद्धाभक्तिः निष्ठाभक्तिः अवधानभक्तिः अनुभवभक्तिः आनन्दभक्तिः समरसभक्तिः इत्यात्मकषड्भक्तिद्वारा समाचरितः यः धर्मः

सदाचारः लिङ्गाचारः शिवाचारः गणाचारः भृत्याचारः इति पञ्चाचारसमुदाचारैः आचरणीयस्य धर्मस्य योगात् सम्बन्धात्, प्राप्तैकभावः प्राप्तः एकभावः येन सः प्राप्तैक्य-स्वरूपवान् सन् शिवयोगी साक्षात् प्रत्यक्ष-रूपिण्याः मोक्षश्रियः मोक्षरूपसम्पत्प्राप्तेः भाजनतां भाजनत्वं पात्रत्वम् उपैति प्राप्नोति।

मोक्षश्रियः मोक्षः एव श्रीः इति रूपकम्।

**उपैति** – उप +इण् - गतौ, लट्।

प्रथमद्वितीयचतुर्थ-चरणेषु इन्द्रवज्रावृत्तम्, तृतीय-चरणे उपेन्द्रवज्रा वृत्तमिति उपजातिः छन्दः।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्त-शिखामणौ शिवलिङ्गैक्यस्य चतुर्विधस्थलप्रसङ्गो नाम ॥चतुर्दशः परिच्छेदः॥*



# ।।पञ्चदशः परिच्छेदः।।

वीरशैवसिद्धान्ते परब्रह्मस्थलम् इत्यपि प्रतिपादितम्। स्थलमेतत् स्वेच्छया अङ्गस्थलं लिङ्गस्थलञ्चेति द्विधा विभक्तम्। अत्र उभयत्र स्थले भक्तस्थलम् महेशस्थलम् प्रसादिस्थलम् प्राणलिङ्गिस्थलम् शरणस्थलम् ऐक्य-स्थलञ्चेति प्रत्येकभेदानुसारं क्रमशः अङ्गस्थलान्तर्गतत्वेन चतुश्चत्वारिंशद्भेदाः निरूप्यन्ते। एवमाहत्य एकोत्तरशतस्थलानि। एतान्येव शक्तिविशिष्टाद्वैतसिद्धान्तस्य निरूपणे मूलानि।

## ।।लिङ्गस्थलानि।।

### ।।श्रीरेणुक उवाच।।

**षट्स्थलोक्तसदाचारसम्पन्नस्य यथाक्रमम्।**
**लिङ्गस्थलानि कथ्यन्ते जीवन्मुक्तिपराणि च।।१।।**

षट्स्थलोक्तसदाचारसम्पन्नस्य इतः पूर्वं निरूपितानाम् अङ्गस्थलान्तर्गतानां भक्तादिषट्स्थलानां ये सदाचाराः पिण्डस्थलादिसहभोजनस्थलपर्यन्तं निरूपिताः तैः सम्पन्नस्य शिवलिङ्गैक्यस्य जीवन्मुक्तिपराणि जीवन्मुक्तिप्रतिपादकानि लिङ्गस्थलानि दीक्षागुरुस्थलादिज्ञानशून्यस्थलं यावत् सप्तोत्तरपञ्चाशद्भेदाः यथाक्रमं भक्तादिषट्स्थलानामानुगुण्येन कथ्यन्ते निरूप्यन्ते।

### ।।अगस्त्य उवाच।।

**भक्ताद्यैक्यावसानानि षडुक्तानि स्थलानि च।**
**लिङ्गस्थलानि कानीह कथ्यन्ते कति वा पुनः।।२।।**

भक्ताद्यैक्यावसानानि भक्तादिषट्स्थलानि च इतः पूर्वम् उक्तानि, पुनश्च लिङ्गस्थलानि कानि? इह लिङ्गस्थले कति वा भेदाः कथ्यन्ते? विशदयतु।

### ।।श्रीरेणुक उवाच।।

**गुर्वादिज्ञानशून्यान्ता भक्तादिस्थलसंश्रिताः।**
**स्थलभेदाः प्रकीर्त्यन्ते पञ्चाशत् सप्त चाधुना।।३।।**

गुर्वादिज्ञानशून्यान्ताः दीक्षागुरुस्थलमारभ्य ज्ञानशून्यस्थलं यावत् वर्तमानाः भक्तादिस्थलसंश्रिताः भक्तस्थलम् महेशस्थलम् प्रसादिस्थलं प्राणलिङ्गस्थलम् शरणस्थलम् ऐक्यस्थलञ्चेति षट्स्थलान्याश्रित्य वर्तमानाः सप्ताधिकपञ्चाशत्-संख्याकाः स्थलभेदाः प्रकीर्त्यन्ते निरूप्यन्ते।

**आदौ नवस्थलानीह भक्तस्थलसमाश्रयात्।**
**कथ्यन्ते गुणसारेण नामान्येषां पृथक् शृणु।।४।।**

आदौ लिङ्गसम्बन्धिनि षट्स्थले भक्तस्थलसमाश्रयात् भक्तस्थलमाश्रित्य वर्तमानत्वात् गुणसारेण श्रेष्ठत्वेन कारणेन नव स्थलानि इह वर्तन्ते, एषां नामानि पृथक् कथ्यन्ते शृणु।

**शृणु**-श्रु-श्रवणे, लोट् - शृणोतु शृणुतात् - इत्यादि

**दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम्।**
**प्रज्ञागुरुस्थलं चाथ क्रियालिङ्गस्थलं ततः।।५।।**

**भालिङ्गस्थलं चाथ ज्ञानलिङ्गस्थलं ततः।**
**स्वयं परं चरं चेति तेषां लक्षणमुच्यते।।६।।**

दीक्षागुरुस्थलम्, शिक्षागुरुस्थलम्, ज्ञानगुरुस्थलम्, क्रियालिङ्गस्थलम्, भावलिङ्गस्थलम् ज्ञानलिङ्गस्थलम्, स्वस्थलम्, परस्थलम्, चरस्थलञ्चेति एतेषां लक्षणं यथाक्रमम् उच्यते।

### (१) दीक्षागुरुस्थलम्

**दीयते परमं ज्ञानं क्षीयते पाशबन्धनम्।**
**यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः।।७।।**

यया दीक्षया परमं ज्ञानं सर्वोत्कृष्टं शिवज्ञानं दीयते अनुगृह्यते, पाशबन्धनं मलमायादिपाशबन्धनं क्षीयते विनश्यते सा दीक्षा इति सम्मंता, तस्यां चित्क्रियास्वरूपदीक्षाविषये यः गुरुः दीक्षादायकः सः दीक्षागुरुः इति स्मृतः।

**दीयते** - दाण् - दाने, कर्मणि लट्। **क्षीयते** - क्षि-क्षये, भावे, लट्।

दीयते दीयेते इत्यादि, क्षीयते क्षीयेते - इत्यादि।

**गुणातीतं गुकारं च रूपातीतं रुकारकम्।**
**गुणातीतमरूपं च यो दद्यात् स गुरुः स्मृतः।।८।।**

गुकारं गुकारतत्त्वं तु गुणातीतं प्राकृतरूपातीतम्, रुकारकं तत्त्वं च रूपातीतं अशुद्धमायारूपातीतम्, इति हेतोः गुणातीतं प्राकृतगुणानतीत्य विद्यमानम्, अरूपं च प्राकृतरूपरहितम् सच्चिदानन्दात्मकं वस्तु यः दद्यात् प्रयच्छेत् सः गुरुः इति स्मृतः।

**दद्यात्** - डु-दाञ् - दाने, विधिलिङ्, दद्यात् दद्याताम् इत्यादि।

**आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यलम्।**
**स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते।।९।।**

यस्मात् कारणात् शास्त्रार्थान् शास्त्राणाम् अर्थान् वीरशैवदर्शनशास्त्रादीनाम् अर्थान् रहस्यात्मकान् अर्थान् आचिनोति आसमन्तान् चिनोति संशोधन-परिचिन्तनादिद्वारा सम्यक् प्रकटीकरोति, आचारे वीरशैवसमुदाचारविषये शिष्यान् अलम् अत्यर्थम् आधिक्येन स्थापयति बोधनादिना तान् तदाचारे सम्यगायोजयति नियमयति वा, स्वयं च आचरते तेन च तेनैव कारणेनैव आचार्यः इत्युच्यते।

**आचिनोति** – आ+चिञ् - चयने, लट् चिनोति चिनुतः इत्यादि।

**स्थापयति** – ष्ठा - गतिनिवृत्तौ णिच् लट् आचरते इत्यादि।

**षडध्वातीतयोगेन यतते यस्तु देशिकः।**
**मायाब्धितरणोपाय-हेतुर्विश्वगुरुः शिवः।।१०।।**

षडध्वातीतयोगेन षट् च ते अध्वानश्च तान् अतीतश्चासौ योगश्च तेन भुवनाध्वा वर्णाध्वा पदाध्वा कलाध्वा तत्त्वाध्वा मन्त्राध्वा चेति षड् - अध्वनः अतीतयोगेन यस्तु देशिकः आचार्यः यतते प्रयत्नशीलः भवति, अपि च मायाब्धितरणोपायहेतुः मायाब्धेः तरणे उपायश्चासौ हेतुश्च मायारूपसमुद्रस्य तरणे उपायः हेतुभूतश्च यः शिवः शिवस्वरूपी एव विश्वगुरुः इति स्मृतः।

**यतते** – यती-प्रयत्ने, लट्।

मायाब्धि-इत्यत्र रूपकम्। गुरौ साध्यवसानात् उडुपत्वस्य समारोपात् च

रूपकम्। यथा नाविकः नावा सागरं तारयति तथैव गुरुः मायाब्धिं योगेन तारयतीति उपमाध्वनिः।

**अखण्डं येन चैतन्यं व्यज्यते सर्ववस्तुषु।**
**आत्मयोगप्रभावेण स गुरुर्विश्वभासकः।।११।।**

सर्ववस्तुषु सर्वेषु अपि वस्तुषु आत्मयोगप्रभावेण आत्मनः योगस्य प्रभावेण अखण्डं सच्चिदानन्दात्मकं चैतन्यं सदा जाग्रदवस्थायामेव वर्तमानं सर्वप्रकाशकं ज्योतीरूपम् चैतन्यं येन गुरुणा व्यज्यते आत्मनि प्रतीयते सः गुरुः विश्वभासकः विश्वस्य भासकः प्रकाशकारकः इति व्यपदिश्यते।

**व्यज्यते** – वि + अञ्जू - व्यक्तिम्रक्षणकान्तिगतिषु, कर्मणि लट्।

*।।इति दीक्षागुरुस्थलम्।।*

## (२) शिक्षागुरुस्थलम्

**दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः।**
**प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते।।१२।।**

असौ दीक्षागुरुः एव शिष्यस्य बोधकः सन् प्रश्नोत्तरप्रवक्ता च प्रश्नश्च उत्तरं च प्रश्नोत्तरे तयोः प्रवक्ता सन् शिक्षाहेतुः शिक्षायाः हेतुश्च सन् शिक्षागुरुः इति ईर्यते कथ्यते।

**ईर्यते** – ईर - गतौ, कर्मणि लट्।

**बोधकोऽयं समाख्यातो बोध्यमेतदिति स्फुटम्।**
**शिष्ये नियुज्यते येन स शिक्षागुरुरुच्यते।।१३।।**

अयं गुरुः बोधकः बोधयति इति बोधकः इति समाख्यातः, एतत् एवं-विधं ज्ञानं स्फुटं दृढतया बोध्यं बोधनीयम् इति बुद्ध्या येन गुरुणा शिष्ये नियुज्यते बोध्यं बोध्यते सः शिक्षागुरुः इति उच्यते।

**संसारतिमिरोन्माथिशरच्चन्द्रमरीचयः।**
**वाचो यस्य प्रवर्तन्ते तमाचार्यं प्रचक्षते।।१४।।**

यस्य आचार्यस्य वाचः शिवज्ञानबोधकवाक्यानि संसारतिमिरोन्माथि-

शरच्चन्द्रमरीचयः संसारः एव तिमिरं तस्य उन्माथी यः शरच्चन्द्रः तस्य मरीचयः इव संसाररूपगाढान्धकारस्य उन्मथने समर्थः यः शरत्कालिकचन्द्रः तस्य मरीचयः किरणाः इव प्रवर्तन्ते तम् आचार्यं प्रचक्षते कथयन्ति।

यथा शरत्कालीनः चन्द्रः स्वमरीचिभिः गाढान्धकारं नाशयति तथैव आचार्यः स्ववाग्भिः शिष्यस्य संसारं नाशयति इति उपमाध्वनिः। संसारतिमिर-मरीचिवाक् - चन्द्र-आचार्य-इत्यत्र रूपकम्।

**प्रचक्षते** – चक्षिङ् - व्यक्तायां वाचि, लट्।

प्रचक्षते – प्रचक्षाते प्रचक्षते इत्यादि।

**ददाति यः पतिज्ञानं जगन्मायानिवर्तकम्।**
**अद्वैतवासनोपायं तमाचार्यवरं विदुः।।१५।।**

यः आचार्यः जगन्मायानिवर्तकं जगतः माया तस्याः निवर्त्तकं प्रापञ्चिकभ्रान्तिदूरीकरणसमर्थम्, अद्वैतवासनोपायम् अद्वैतस्य वासनायाः उपायम् जीवेश्वरयोः अद्वैतप्रतिपादक-संस्कारविशेषोपायभूतं पतिज्ञानं शिवाद्वैतसिद्धान्तात्मकं शिवज्ञानं ददाति प्रयच्छति तम् आचार्यवरम् आचार्यश्रेष्ठं विदुः जानन्ति।

**ददाति** – डु-दाञ् - दाने, लट्।

**विदुः** – विद-ज्ञाने - लट्, वेद विदतुः विदुः इत्यादि।

**पूर्वपक्षं समादाय जगद्भेदविकल्पनम्।**
**अद्वैतकृतसिद्धान्तो गुरुरेष गुणाधिकः।।१६।।**

जगद्भेदविकल्पनं जगतः भेदस्य विकल्पनम् अन्याङ्गीकृत-भेदपरिकल्पनरूपविषयमेव पूर्वपक्षं समादाय पूर्वपक्षत्वेन स्वीकृत्य अद्वैतकृत-सिद्धान्तः अद्वैतेन कृतः सिद्धान्तः येन सः अद्वैतस्थापनद्वारा कृतसिद्धान्तः सन् यः आस्ते एष एव गुणाधिकः गुणैः अधिकः श्रेष्ठगुणवान् गुरुः वर्तते।

**सन्देहवनसन्दोहसमुच्छेदकुठारिका ।**
**यत्सूक्तिधारा विमला स गुरूणां शिखामणिः।।१७।।**

विमला परिशुद्धा यत्सूक्तिधारा यस्य सूक्तेः धारा निरन्तरोपदेशसरणिः

सन्देहवनसन्दोह-समुच्छेद-कुठारिका सन्देहः एव वनसन्दोहः तस्य समुच्छेदे कुठारिका शास्त्रचिन्तनावसरे समुत्पद्यमानवनसमूहरूपसन्देह - जातस्य समुन्मूलने कुठारिका परशुरिव वर्तते सः गुरूणां शिखामणिः गुरुश्रेष्ठः। सन्देहवनसन्दोह-इत्यत्र रूपकम्, कुठारिका इव कुठारिका इति उपमाध्वनिः, सूक्तिधारा कुठारिका इत्यत्र रूपकम्। यथा कुठारिका वनसन्दोहं निर्मूलयति तथैव गुरोः सूक्तिधारा शिष्यस्य सन्देहान् दूरीकरोति इति उपमाध्वनिः।

**यत्सूक्तिदर्पणाभोगे निर्मले दृश्यते सदा।**
**मोक्षश्रीर्बिम्बरूपेण स गुरुर्भवतारकः।।१८।।**

निर्मले परिशुद्धे = मलत्रयकापट्यादिदोषरहिते, यत्सूक्तिदर्पणाभोगे यस्य सूक्तिरेव दर्पणः तस्य आभोगे = यस्य गुरोः सूक्तिरूपविशालदर्पणे बिम्बरूपेण प्रतिबिम्बरूपेण मोक्षश्रीः मोक्षलक्ष्मीः सदा दृश्यते अवलोक्यते सः एव गुरुः भवतारकः संसारसागरोद्धारकः भवति।

सूक्तिदर्पण-मोक्षश्री-इत्यत्र रूपकम्। दर्पणः दर्पणः इति उपमा। यथा निर्मले दर्पणे प्रतिबिम्बं सुस्पष्टं प्रकाशते तथैव गुरोः सूक्तौ मोक्षः प्रतिबिम्बवत् प्रकाशते इति उपमाध्वनिः। निर्मलशब्दे अर्थद्वयस्य सम्भवात् श्लेषालङ्कारः।

**शिष्याणां हृदयालेख्यं प्रद्योतयति यः स्वयम्।**
**ज्ञानदीपिकयानेन गुरुणा कः समो भवेत्?।।१९।।**

यः शिवज्ञानी गुरुः शिष्याणां हृदयालेख्यं हृदयमेव आलेख्यं हृदयकमलमध्यस्थ-निजस्वरूपरूपं चित्रं ज्ञानदीपिकया ज्ञानमेव दीपिका तया ज्ञानरूपदीपेन स्वयमेव इतरानपेक्षः सन् प्रद्योतयति प्रकाशयति तादृशेन अनेन गुरुणा समः सदृशः कः वा भवेत्? न कोऽपि भवेत्।

हृदयालेख्य-ज्ञानदीपिका-इत्यत्र रूपकम्। यथा दीपिका चित्रं सुस्पष्टं द्योतयति तथैव गुरुरपि ज्ञानबोधनेन हृदयस्थनिजानन्दरूपस्वस्वरूपं प्रकाशयति इति उपमाध्वनिः

**प्रद्योतयति** – प्र+द्युत-दीप्तौ, णिच्, लट्।

**परमाद्वैतविज्ञानपरमौषधिदानतः ।**
**संसाररोगनिर्माथी देशिकः केन लभ्यते?।।२०।।**

परमाद्वैतविज्ञानपरमौषधिदानतः परमाद्वैतस्य विज्ञानं तदेव परमौषधिः तस्य दानतः श्रेष्ठतमायाः अद्वैतविज्ञानरूपिण्याः औषधेः दानात् संसाररोगनिर्माथी संसारः एव रोगः तं निर्मथ्नाति इति संसाररूपरोगस्य निर्मूलं नाशकः देशिकः आचार्यः केन वा लभ्यते? न केनापि लब्धुं शक्यते। किन्तु शिवकारुण्यपूर्णमनस्कैरेव केवलं लभ्यते।

परमाद्वैतविज्ञाने परमौषधेः समारोपः, संसारे रोगस्य, अपि च देशिके अर्थापत्त्या वैद्यत्वसमारोपः - इत्यत्र रूपकम्।

यथा वैद्यः रोगस्य निदानं ज्ञात्वा युक्तमौषधं दत्वा रोगं निवारयति तथैव उपदेशकः देशिकः शिवाद्वैत-परमज्ञानदानेन शिष्यस्य सांसारिकरोगं निर्मूलयति इति उपमाध्वनिः।

*॥इति शिक्षागुरुस्थलम्॥*

## (३) ज्ञानगुरुस्थलम्

**उपदेष्टोपदेशानां संशयच्छेदकारकः।**
**सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः॥२१॥**

उपदेशानाम् शिवाद्वैतसम्बन्धिनाम् उपदेशयोग्यानां रहस्यार्थानाम् उपदेष्टा उपदेशकः, संशयच्छेदकारकः संशयानां छेदं करोति इति शिष्याणां सम्यगुपदेशद्वारा समस्तसन्देहनिवारकः, सम्यक् समीचीनतया ज्ञानप्रदः ज्ञानं प्रददाति इति ज्ञानप्रदः एषः शिक्षागुरुरेव साक्षात् प्रत्यक्षरूपी ज्ञानप्रदः एषः शिक्षागुरुरेव साक्षात् प्रत्यक्षरूपी ज्ञानगुरुः इति स्मृतः।

**निरस्तविश्वसम्भेदं निर्विकारं चिदम्बरम्।**
**साक्षात्करोति यो युक्त्या स ज्ञानगुरुरुच्यते॥२२॥**

निरस्तविश्वसम्भेदं निरस्तः विश्वस्य सम्भेदः येन तत् दूरीकृतविश्वभेदत्वम् निर्विकारं विकाररहितम् चिदम्बरं निर्मलज्ञानाकाशरूपं ब्रह्म यः गुरुः युक्त्या शास्त्रोक्तरीत्या प्रत्यक्षादिप्रमाणद्वारा साक्षात्करोति प्रत्यक्षीकरोति सः ज्ञानगुरुः इति उच्यते।

**कलङ्कवानसौ चन्द्रः क्षयवृद्धिपरिप्लुतः।**
**निष्कलङ्कस्थितो ज्ञानचन्द्रमा निर्विकारवान्।।२३।।**

असौ प्रसिद्धः चन्द्रः कलङ्कवान् कलङ्कः अस्ति अस्मिन् इति सकलङ्कः, अपि च क्षयवृद्धिपरिप्लुतः क्षयश्च, वृद्धिश्च क्षयवृद्धी ताभ्यां परिप्लुतः क्षयवृद्धिगुणयुक्तः वर्तते। किन्तु ज्ञानचन्द्रमाः ज्ञानमेव चन्द्रमाः तावत् निष्कलङ्कस्थितः निष्कलङ्कः सन् स्थितः अपि च निर्विकारवान् निर्गतः विकारः यस्मात् सः तद्वान् विकाररहितः वर्तते। ज्ञानचन्द्रमाः इत्यत्र रूपकम्। प्रसिद्धः चन्द्रः कलङ्कवान् क्षयवृद्धिसमन्वितश्च, किन्तु ज्ञानचन्द्रमाः तावत् निष्कलङ्कः विकाररहितश्चेति प्रसिद्धचन्द्रापेक्षया ज्ञानचन्द्रमसः आधिक्यवर्णनात् अधिकताद्रूप्य-रूपकालङ्कारः। 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्। रूपकम्।' इति लक्षणम्। अपिच प्रसिद्धचन्द्रापेक्षया ज्ञानचन्द्रस्य वैशिष्ट्यवर्णनात् व्यतिरेकोऽपि व्यज्यते।

'व्यतिरेको विशेषश्चेद् उपमानोपमेययोः।' इतिलक्षणम्।

**पार्श्वस्थतिमिरं हन्ति प्रदीपो मणिनिर्मितः।**
**सर्वगामि तमो हन्ति बोधदीपो निरङ्कुशः।।२४।।**

मणिनिर्मितः प्रदीपस्तु केवलं पार्श्वस्थं तिमिरं हन्ति नाशयति, किन्तु निरङ्कुशः निरर्गलः सन् बोधदीपः शिवज्ञानरूपी दीपः सर्वगामि सर्वत्र गमनशीलं तमः अन्धकारं हन्ति नाशयति।

बोधदीपः इत्यत्र रूपकम्। मणिमयदीपापेक्षया बोधदीपस्य आधिक्यवर्णनात् अधिकताद्रूप्यरूपकम् अलङ्कारः। व्यतिरेकस्य प्रतीते व्यतिरेकध्वनिः। **हन्ति**-हन-हिंसागत्योः, लट्, हन्ति हतः घ्नन्ति इत्यादि।

**सर्वार्थसाधकज्ञानविशेषादेश – तत्परः।**
**ज्ञानाचार्यः समस्तानामनुग्रहकरः शिवः।।२५।।**

सर्वार्थसाधकज्ञानविशेषादेशतत्परः - सर्वे च ते अर्थाश्च सर्वार्थाः तेषां साधकं च तत् ज्ञानञ्च तस्य ज्ञानस्य विशेषेण आदेशे तत्परः भोगमोक्षादिसकलविध-प्रयोजन-साधकज्ञानस्य विशेषरूपेण उपदेशकरणे तत्परः ज्ञानाचार्यः ज्ञानप्रधानः आचार्यस्तु समस्तानां सर्वेषां मुमुक्षुजनानाम्

अनुग्रहकरः अनुग्रहदायकः प्रत्यक्षः शिव एव।

ज्ञानाचार्ये शिवस्य समारोपात् रूपकम्।

**कटाक्षचन्द्रमा यस्य ज्ञानसागरवर्धकः।**
**संसार – तिमिरच्छेदी स गुरुर्ज्ञानपारगः।।२६।।**

यस्य ज्ञानगुरोः कटाक्षचन्द्रमाः कटाक्षः एव चन्द्रमाः कटाक्षरूपचन्द्रस्तु ज्ञानसागरवर्धकः ज्ञानमेव सागरः तं वर्धयति इति वर्धकः शिवज्ञानरूप-समुद्रस्य वर्धने कारणम् अस्ति, अपि च संसारतिमिरच्छेदी संसारः एव तिमिरं तत् छिनत्ति इति छेदी-संसाररूपगाढान्धकारनाशकश्च अस्ति सः एव गुरुः ज्ञानपारगः परज्ञानापरज्ञानयोः परिपूर्णज्ञानी वर्तते।

कटाक्षे चन्द्रमसः आरोपः, ज्ञाने सागरस्य आरोपः, संसारे च तिमिरस्य आरोपः इति रूपकमत्र। चन्द्रे यथा सागरवर्धकत्वं तिमिरनाशकत्वं च वर्तते तथैव गुरावपि ज्ञानवर्धकत्वं संसारनाशकत्वं च वर्तते इति उपमाध्वनिः।

**बहिस्तिमिरविच्छेत्ता भानुरेष प्रकीर्तितः।**
**बहिरन्तस्तमश्छेदी विभुर्देशिकभास्करः।।२७।।**

एषः भानुः बहिः तिमिरविच्छेत्ता तिमिरस्य विच्छेत्ता अन्धकारस्य नाशकः इति प्रकीर्तितः, किन्तु विभुः व्यापकः देशिकभास्करः देशिकः एव भास्करः गुरुसूर्यस्तु बहिः तमः कायिकादिकल्मषजातं, अन्तः तमः मायीयादिकल्मषजातम् अज्ञानादिकं च छेदी नाशकः इति प्रकीर्तितः।

देशिकभास्करः इति रूपकम्। प्रसिद्धसूर्यापेक्षया देशिकसूर्ये आधिक्यवर्णनात् अधिकताद्रूप्यरूपकम् अलङ्कारः।

**कटाक्षलेशमात्रेण विना ध्यानादिकल्पनम्।**
**शिवत्वं भावयेद्यत्र स वेदः शाम्भवो मतः।।२८।।**

ध्यानादिकल्पनं विना ध्यानादिकल्पनं विना ध्यानधारणसंकल्पादिकं विनैव केवलं कटाक्षलेशमात्रेण कटाक्षस्य लेशः तावन्मात्रेणैव यत्र तस्मिन् शिष्ये शिवत्वं भावयेत् चिन्तयेत् सः एव शाम्भवः वेदः शिवाद्वैतज्ञानविशेषः इति मतः सम्मतः।

**शिववेदकरे ज्ञाने दत्ते येन सुनिर्मले।**
**जीवन्मुक्तो भवेच्छिष्यः स गुरुर्ज्ञानसागरः।।२९।।**

येन गुरुणा शिववेदकरे शिवस्य वेदं करोति इति यत् तस्मिन् शिवतादात्म्य-ज्ञान-सम्पादके सुनिर्मले परिशुद्धे ज्ञाने शिवज्ञाने दत्ते सति उपदिष्टे सति शिष्यः जीवन्मुक्तः भवेत् चेत् सः तादृशः गुरुः ज्ञानसागरः ज्ञानस्य महानेव निधिः भवति।

ज्ञानसागरः इत्यत्र रूपकम्।

*।।इति ज्ञानगुरुस्थलम्।।*

## (४) क्रियालिङ्गस्थलम्

**गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते।**
**तत्क्रियालिङ्गमाख्यातं सर्वैरागमपारगैः।।३०।।**

गुरोः ज्ञानगुरोः विज्ञानयोगेन विशिष्टस्य ज्ञानस्य योगेन यत्र क्रियाप्रधानलिङ्गे क्रिया बाह्यपूजादिक्रिया विलीयते तत्रैव संलीना भवति तत् तच्च लिङ्गम् क्रियालिङ्गमिति सर्वैः आगमपारगैः शिवसिद्धान्तबोधक-शिवागमादि-शिवशास्त्रपारङ्गतैः सर्वैः अपि आख्यातम् उक्तम्।

**परानन्दचिदाकारं परब्रह्मैव केवलम्।**
**लिङ्गं सद्रूपतापन्नं लक्ष्यते विश्वसिद्धये।।३१।।**

परानन्दचिदाकारं परानन्दं च तत् चिदाकारं च नित्यशिवानन्द-चित्स्वरूपात्मकं, सद्रूपतापन्नं सद्रूपत्वं प्राप्तं सत् केवलं परब्रह्म एव विश्वसिद्धये विश्वस्य सिद्धये समस्तसत्फलदायक-सत्क्रियासिद्ध्यर्थं लिङ्गम् इष्टलिङ्गमिति लक्ष्यते परिदृश्यते।

**लक्ष्यते** - लक्ष - दर्शनाङ्कनयोः, कर्मणि लट्।

**लिङ्गमेव परं ज्योतिर्भवति ब्रह्म केवलम्।**
**तस्मात् तत्पूजनादेव सर्वकर्मफलोदयः।।३२।।**

परं ज्योतिः परं ज्योतिः-स्वरूपात्मकं केवलम् अद्वितीयं ब्रह्म एव लिङ्गं

क्रियालिङ्गं भवति। तस्मात् तत्पूजनात् एव तस्य पूजनादेव तस्य क्रियालिङ्गात्मकस्य इष्टलिङ्गस्य पूजाकरणादेव सर्वकर्मफलोदयः सर्वेषां कर्मणां सत्फलानामेव उदयः प्राप्तिः सम्भवति।

**परित्यज्य क्रियाः सर्वा लिङ्गपूजैकतत्पराः।**
**वर्तन्ते योगिनः सर्वे तस्माल्लिङ्गं विशिष्यते।।३३।।**

सर्वे योगिनः सनकादयः सर्वे योगिनः सर्वाः क्रियाः अष्टाङ्गयोगसम्बन्धिन्यः सर्वाः क्रियाः परित्यज्य लिङ्गपूजैकतत्पराः लिङ्गस्य पूजायामेव तत्पराः वर्तन्ते, तस्मात् लिङ्गं क्रियालिङ्गं विशिष्यते वैशिष्ट्यपूर्णमस्ति। **विशिष्यते** – वि+शिष्लृ - विशेषणे, कर्मणि लट्।

**यज्ञादयः क्रियाः सर्वा लिङ्गपूजांशसम्मिताः।**
**इति यत्पूज्यते सिद्धैस्तत्क्रियालिङ्गमुच्यते।।३४।।**

यज्ञादयः सर्वाः क्रियाः स्वर्गादिप्रयोजनकाः यज्ञादयः सर्वाः क्रियाः लिङ्गपूजांशसम्मिताः लिङ्गस्य पूजायाः अंशेन सम्मिताः सदृशाः इति मत्वा सिद्धैः सनकादिसिद्धपुरुषैः यत् यस्मात् कारणात् पूज्यते तस्मात् तत् एव क्रियालिङ्गम् इत्युच्यते।

**किं यज्ञैरग्निहोत्राद्यैः? किं तपोभिश्च दुष्करैः?।**
**लिङ्गार्चनरतिर्यस्य स सिद्धः सर्वकर्मसु।।३५।।**

अग्निहोत्राद्यैः यज्ञैः किं किं प्रयोजनम्? दुष्करैः अतीव कष्टकरैः तपोभिश्च किं किं प्रयोजनम्? न किञ्चिदपि प्रयोजनम्। किन्तु यस्य शिवभक्तस्य लिङ्गार्चन-रतिः लिङ्गस्य क्रियालिङ्गस्य अर्चने रतिः अत्यन्तमासक्तिः वर्तते सः एव सर्वकर्मसु सर्वेष्वपि कर्मसु सिद्धः सकलविधसिद्धिमानेव जायेत।

यज्ञयागादिभ्यः तपोभ्यश्च सकाशात् लिङ्गपूजायाः विशेषत्ववर्णनात् व्यतिरेकालङ्कारः। अपि च यज्ञादीनां किम् इति कथनेन व्यर्थत्व-द्योतनात् पञ्चमः प्रतीपालङ्कारः। अस्य लक्षणम् –'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते।' इति।

**ब्रह्मविष्णवादयः सर्वे विबुधा लिङ्गमाश्रिताः।**
**सिद्धाः स्वस्वपदे भान्ति जगत्तन्त्राधिकारिणः।।३६।।**

ब्रह्मविष्ण्वादयः सर्वे विबुधाः ब्रह्मा विष्णुः इन्द्रः इत्यादयः सर्वे देवाः लिङ्गमेव आश्रिताः आश्रित्य पूजां कुर्वन्तः सन्तः स्वस्वपदे स्वस्य स्वस्य स्थाने जगत् तन्त्राधिकारिणः जगतः तन्त्रे सृष्टिस्थित्यादिकार्ये अधिकारिणः अधिकारयुक्ताः सन्तः सिद्धाः सुप्रसिद्धाः एव भान्ति प्रकाशन्ते।

**भान्ति** - भा - दीप्तौ - लट्।

*।।इति क्रियालिङ्गस्थलम्।।*

## (५) भावलिङ्गस्थलम्

**क्रिया यथा लयं प्राप्ता तथा भावोऽपि लीयते।**
**यत्र तद्देशिकैरुक्तं भावलिङ्गमिति स्फुटम्।।३७।।**

क्रिया पूजादिबाह्यक्रिया यथा क्रियालिङ्गे लयं प्राप्ता तथैव भावः अपि यत्र भावलिङ्गे लीयते लयमाप्नोति तत् लिङ्गं देशिकैः आचार्यवर्यैः भावलिङ्गम् इति स्फुटं स्पष्टमेव उक्तम्।

**भावेन गृह्यते देवो भगवान् परमः शिवः।**
**किं तेन क्रियते तस्य नित्यपूर्णो हि स स्मृतः।।३८।।**

देवः भगवान् परमः शिवः केवलं भावेन हृदयान्तःकरणवृत्त्या एव गृह्यते इत्यतः तेन बाह्यक्रियादिलयेन तस्य किं वा क्रियते? किं वा प्रयोजनम्? यतः सः शिवस्तु नित्यपूर्णाः इति हि स्मृतः नित्यपरिपूर्णः वर्तते। अत्र चतुर्थः पादः पूर्वपादत्रयं समर्थयतीति काव्यलिङ्गालङ्कारः।

**क्रियते**– डु-कृञ् - करणे, कर्मणि लट्।

**अखण्डपरमानन्दबोधरूपः परः शिवः।**
**भक्तानामुपचारेण भावयोगात् प्रसीदति।।३९।।**

अखण्डपरमानन्दबोधरूपः अखण्डश्चासौ परमानन्दश्च अखण्डपरमानन्दः तस्य बोधरूपः अपरिच्छिन्नशिवानन्दात्मकपरमानन्दस्य ज्ञानस्वरूपवान् यः परः शिवः सः भक्तानाम् उपचारेण मानसोपचारेण भावयोगात् भावस्य योगात् मनोभावसुसन्निवेशाच्च प्रसीदति प्रसन्नो भवति।

**प्रसीदति**– प्र + षद्लृ - विशरणगत्यवसादनेषु - लट्।

**मृच्छिलाविहिताल्लिङ्गाद् भावलिङ्गं विशिष्यते।**
**निरस्तसर्वदोषत्वाद् ज्ञानमार्गप्रवेशनात्।।४०।।**

मृच्छिलाविहितात् मृदा शिलया च विहितात् सम्पादितात् लिङ्गात् अपेक्षया, निरस्तसर्वदोषत्वात् छेदनभेदनादिरूपसकलदोषरहितत्वात्, ज्ञानमार्गप्रवेशनात् शिवज्ञानमार्गे भक्तानां संयोजनकरणाच्च भावलिङ्गं विशिष्यते विशिष्टं वर्तते।

**विहाय बाह्यलिङ्गानि चिल्लिङ्गं मनसि स्मरन्।**
**पूजयेद् भावपुष्पैर्यो भावलिङ्गीति कथ्यते।।४१।।**

बाह्यलिङ्गानि मृच्छिलामयादीनि बाह्यलिङ्गानि विहाय परित्यज्य चिल्लिङ्गं चिन्मयात्मकं भावलिङ्गं मनसि स्मरन् भावयन् सन् यः भावपुष्पैः भावप्रधानैः अहिंसादिभिः भावकल्पितैः पुष्पैः पूजयेत् पूजां कुर्यात् सः भावलिङ्गी इति कथ्यते।

**मूलाधारेऽथवा चित्ते भ्रूमध्ये वा सुनिर्मलम्।**
**दीपाकारं यजन् लिङ्गं भावद्रव्यैः स योगवान्।।४२।।**

मूलाधारे अथवा चित्ते अथवा भ्रूमध्ये वा सुनिर्मलं परमपरिशुद्धं दीपाकारं ज्योतिः स्वरूपात्मकं लिङ्गं प्राणलिङ्गं भावद्रव्यैः भावनात्मकैः पुष्पैः यः यजन् वर्तते शिवयोगी सः योगवान् शिवयोगवान् वर्तते।

**स्वानुभूतिप्रमाणेन ज्योतिर्लिङ्गेन संयुतः।**
**शिलामृद्दारुसम्भूतं न लिङ्गं पूजयत्यसौ।।४३।।**

असौ शिवयोगी स्वानुभूतिप्रमाणेन अहमस्मि इत्याकारकेण अकर्मकेण स्वानुभवनेनैव गम्यमानेन ज्योतिर्लिङ्गेन संयुतः शिलामृद्दारुसम्भूतं शिलया मृदा दारुणा इत्यादिना संभूतं लिङ्गं न पूजयति।

**क्रियारूपा तु या पूजा सा ज्ञेया स्वल्पसंविदाम्।**
**आन्तरा भावपूजा तु शिवस्य ज्ञानिनां मता।।४४।।**

शिवस्य शिवलिङ्गस्य क्रियारूपा तु या पूजा क्रियाप्रधानरूपा पूजा तु

सा स्वल्पसंविदां अत्यल्प-ज्ञानवतां ज्ञेया, किन्तु शिवस्य प्राणलिङ्गात्मकस्य अथवा भावलिङ्गात्मकस्य शिवस्य आन्तरा भावपूजा तु ज्ञानिनां शिवज्ञानिनां मता अभिमता।

*॥इति भावलिङ्गस्थलम्॥*

## (६) ज्ञानलिङ्गस्थलम्

**तद्भावज्ञापकं ज्ञानं लयं यत्र समश्नुते।**
**तज्ज्ञानलिङ्गमाख्यातं शिवतत्त्वार्थकोविदैः॥४५॥**

तद्भावज्ञापकज्ञानं तस्य भावस्य ज्ञापकं च तत् ज्ञानं च तादृशभावद्रव्यैः पूजायोग्यस्य भावलिङ्गस्य ज्ञापकं शिवज्ञानम् यत्र यस्मिन् ज्ञानलिङ्गे लयं समश्नुते लीनत्वमाप्नोति तत् एव ज्ञानलिङ्गमिति शिवतत्त्वार्थकौविदैः शिवागमादिरहस्यार्थपरिज्ञानवद्भिः आख्यातं कथितम्।

**समश्नुते** – सम् + (अश्) - व्याप्तौ संघाते च, लट्, अश्नुते अश्नुवाते अश्नुवते इत्यादि।

**त्रिमूर्तिभेद – निर्मूलं त्रिगुणातीतवैभवम्।**
**ब्रह्म यद् बोध्यते तत्तु ज्ञानलिङ्गमुदाहृतम्॥४६॥**

त्रिमूर्तिभेदनिर्मुक्तं त्रिमूर्तीनां भेदेन निर्मुक्तं त्रिमूर्तिभेदरहितम्, त्रिगुणातीतवैभवं त्रिगुणान् अतीतं वैभवं यस्य तत् सत्त्वादिगुणत्रयमपि अतीत्य वर्तमानवैभवयुक्तम्, ब्रह्म यत् बोध्यते श्रुत्यादिप्रमाणैः गुरुबोधादिभिः स्वानुभवैश्च प्रकाश्यते तत्तु ज्ञानलिङ्गम् इति उदाहृतम् उक्तम्।

**बोध्यते** – बुध् - अवगमने णिजन्तात् कर्मणि लट्।

**स्थूले क्रियासमापत्तिः सूक्ष्मे भावस्य सङ्गमः।**
**स्थूलसूक्ष्मपदातीते ज्ञानमेव परात्मनि॥४७॥**

स्थूले स्थूलरूपे इष्टलिङ्गे क्रियासमापत्तिः क्रियायाः समापत्तिः सम्पद्रूपेण प्राप्तिः, सूक्ष्मे सूक्ष्मरूपे प्राणलिङ्गे भावस्य सम्भवः निर्मलभावरूपसम्पत्प्राप्तिः, किन्तु स्थूल– सूक्ष्मपदातीते स्थूलं च सूक्ष्मं च

स्थूलसूक्ष्मे तयोः पदम् अतीते अतीत्य वर्तमाने परात्मनि ज्ञानलिङ्गात्मके तृप्तिलिङ्गे केवलं ज्ञानमेव शिवज्ञानमेव सम्पद्यते।

**कल्पितानि हि रूपाणि स्थूलानि परमात्मनः।**
**सूक्ष्माण्यपि च तैः किं वा? परबोधं समाचरेत्।।४८।।**

परमात्मनः स्थूलानि रूपाणि सूक्ष्माणि चापि रूपाणि केवलं कल्पितानि हि आरोपितरूपाण्येव हि सन्ति, किन्तु तैः एवमारोपितरूपवद्भिः किं वा किं वा प्रयोजनम्? न किमपि प्रयोजनम्, किन्तु परबोधं परब्रह्ममयं तृप्तिलिङ्गमेव समाचरेत् सम्यक्तया अनुसन्धानं कुर्यात्।

**परात्परं तु यद्ब्रह्म परमानन्दलक्षणम्।**
**शिवाख्यं ज्ञायते येन ज्ञानलिङ्गीति कथ्यते।।४९।।**

परात् परं तु श्रेष्ठादपि श्रेष्ठम् परमानन्दलक्षणम् परमश्चासौ आनन्दश्च परमानन्दः स एव लक्षणं यस्य तत् तादृशं शिवाख्यं यद्ब्रह्म येन शिवयोगिता ज्ञायते सः शिवयोगी ज्ञानलिङ्गी इति कथ्यते।

शिवसङ्कल्पसूक्तम् एवमुपवर्णयति—

'परात्परतरं ब्रह्म तत्परात्परतो हरिः।
यत्परात्परतोऽधीशं तन्मे मनः शिवसङ्कल्पमस्तु।।'

'परात्परतरं चैव तत्पराच्चैव यत्परम्।
तत्परात्परतो ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु।।'

इत्यादि।

**बाह्यक्रियां परित्यज्य चिन्तामपि च मानसीम्।**
**अखण्डज्ञानरूपत्वं यो भजेन्मुक्त एव सः।।५०।।**

यः शिवयोगी बाह्यक्रियां परित्यज्य तथैव मानसीमपि चिन्तां च ध्यानादिकं च परित्यज्य अखण्डज्ञानरूपत्वम् परिपूर्णज्ञानपूर्णं ज्ञानलिङ्गापरनामकं तृप्तिलिङ्गं भजेत् सः मुक्तः एव जीवन्मुक्त एव इति व्यपदिश्यते।

*।।इतिज्ञानलिङ्गस्थलम्।।*

## (७) स्वयंस्थलम् (स्वस्थलम्)

**तद्भावज्ञापकज्ञानं यत्र ज्ञाने लयं व्रजेत्।**
**तद्वानेष समाख्यातः स्वाभिधानो मनीषिभिः।।५१।।**

तद्भावज्ञापकज्ञानं तद्भावस्य ज्ञापकं च तत् ज्ञानं च तथाभूतस्य भावलिङ्गस्य ज्ञापकं सूचकं यत् ज्ञानं तत् यत्र ज्ञाने यस्मिन् ज्ञानलिङ्गे लयं व्रजेत् लीनत्वं प्राप्नुयात् एषः तद्वान् एतादृशलीनज्ञानवान् ज्ञानलिङ्गी एव मनीषिभिः शिवज्ञानसम्पन्नैः विद्वद्भिः स्वाभिधानः स्वयं लिङ्गाभिधानः स्वस्थली अथवा स्वयंस्थली इति समाख्यातः।

**स्वच्छन्दाचारसन्तुष्टो ज्योतिर्लिङ्गपरायणः।**
**आत्मस्थसकलाकारः स्वाभिधो मुनिसत्तमः।।५२।।**

स्वच्छन्दाचारसन्तुष्टः स्वच्छन्दं यथा स्यात् तथा आचारेण सन्तुष्टः स्वयं सुप्रीतः ज्योतिर्लिङ्गपरायणः ज्योतिर्लिङ्गे परायणः तत्परः आत्मस्थसकलाकारः आत्मस्थः सकलश्चासौ आकारश्च आत्मनि एव सकलाः आकाराः वर्तन्ते इति भावयन् मुनिसत्तमः शिवयोगिश्रेष्ठः स्वाभिधः स्वस्थलवान् इति कथ्यते।

**निर्ममो निरहङ्कारो निरस्तक्लेशपञ्चकः।**
**भिक्षाशी समबुद्धिश्च मुक्तप्रायो मुनिर्भवेत्।।५३।।**

निर्ममः ममकार-रहितः निरहङ्कारः अहङ्काररहितः, निरस्तक्लेशपञ्चकः निरस्तं क्लेशानां पञ्चकं येन सः अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेशः इति पञ्चभिः क्लेशैः रहितः, भिक्षाशी भिक्षाम् अश्नाति भिक्षान्नभोजी समबुद्धिश्च लोष्टाश्मकनकादिषु समानबुद्धिमान् एव मुनिः स्वयंलिङ्गाभिधानवान् शिवयोगी मुक्तप्रायः जीवन्मुक्तः भवेत्।

**यदृच्छालाभसन्तुष्टो भस्मनिष्ठो जितेन्द्रियः।**
**समवृत्तिर्भवेद्योगी भिक्षुके वा नृपेऽथवा।।५४।।**

यदृच्छालाभसन्तुष्टः यदृच्छया यः लाभः तेनैव सन्तुष्टः भस्मनिष्ठः भस्मधारणासक्तः जितेन्द्रियः एतादृशः शिवयोगी भिक्षुके वा अथवा नृपे वा विषये समवृत्तिः भवेत् समानमनोव्यापारवान् भवेत्।

**पश्यन् सर्वाणि भूतानि संसारस्थानि सर्वशः।**
**स्मयमानः परानन्दे लीनात्मा वर्तते सुधीः।।५५।।**

सुधी: शिवज्ञानवान् सर्वश: सर्वत्र संसारस्थानि जननमरणरूपसंसारचक्रे वर्तमानानि सर्वाणि भूतानि वस्तूनि पश्यन् सन् स्मयमान: विस्मयं प्राप्तवान् सन् परानन्दे परमशिवानन्दे लीनात्मा लयं प्राप्तवान् सन् वर्तते।

**ध्यानं शैवं तथा ज्ञानं भिक्षा चैकान्तशीलता।**
**यतेश्चत्वारि कर्माणि न पञ्चममिहेष्यते।।५६।।**

शैवं ध्यानम् तथा शैवं ज्ञानम्, भिक्षा, एकान्तशीलता चेति यत: स्वयं लिङ्गस्य शिवयोगिन: चत्वारि एव कर्माणि एतानि विना इह पञ्चमम् दृश्यते न हि नास्त्येव।

*॥इति स्वयंस्थलम्॥*

## (८) चरस्थलम्

**स्वरूपज्ञानसम्पन्नो ध्वस्ताहंममताकृतिः।**
**सर्वमेव स्वयं भूत्वा चरतीति चराभिधः।।५७।।**

स्वयंलिङ्गी एव स्वरूपज्ञानसम्पन्न: स्वस्वरूपस्य ज्ञानेन सम्पन्न: ध्वस्ताहंममताकृति: अहं मम इति एतयो: भाव: अहंममता सा एव कृति: यस्मिन् ध्वस्ता स: अहङ्कारम काररहित: स्वयम् एव स्वयं भूत्वा यस्मात् चरति अतएव चराभिध: चर: इति अभिधा यस्य स: चरस्थली इति कथ्यते, चरति इति चर: इति विग्रह:।

**क्रामक्रोधादिनिर्मुक्तः शान्तिदान्तिसमन्वितः।**
**समबुद्ध्या चरेद्योगी सर्वत्र शिवबुद्धिमान्।।५८।।**

कामक्रोधादिभि: निर्मुक्त: शून्य:, शान्तिदान्ति-समन्वित: शान्तिदान्तिभ्यां समन्वित: सर्वत्र चराचरादिषु सर्वेषु वस्तुषु शिवबुद्धिमान् शिव: इति बुद्ध्या वर्तयन् सन् समबुद्ध्या योगी शिवयोगी चरेत् सञ्चरणशील: भवेत्।

**इदं मुख्यमिदं हीनमिति चिन्तामकल्पयन्।**
**सर्वत्र सञ्चरेद्योगी सर्वं ब्रह्मेति भावयन्।।५९।।**

इदं वस्तु मुख्यं, इदं वस्तु हीनम् इति चिन्ताम् अकल्पयन् मनसि अचिन्तयन् सर्वमपि ब्रह्म इति भावयन् योगी शिवयोगी सर्वत्र सञ्चरेत्।

**न सम्मानेषु सम्प्रीतिं नावमानेषु च व्यथाम्।**
**कुर्वाणः सञ्चरेद्योगी कूटस्थे स्वात्मनि स्थितः।।६०।।**

सम्मानेषु गौरवादिषु सम्प्रीतिं परमासक्तिं न कुर्वन् तथैव अवमानेषु प्राप्तेषु सत्सु व्यथां च न कुर्वाणः कूटस्थे स्वात्मनि तुर्यसाक्षिकप्रत्यगात्मलक्षणे निजरूपे स्थितः वर्तमानः योगी सञ्चरेत् सञ्चरणशीलो भवेत्।

कूटो नाम शिवस्य स्वरूपान्तरं तुर्यसाक्षिकप्रत्यगात्मत्वम्।

**अप्राकृतैर्गुणैः स्वीयैः सर्वं विस्मापयन् जनम्।**
**अद्वैतपरमानन्दमुदितो देहिवच्चरेत्।।६१।।**

अद्वैतपरमानन्दमुदितः अद्वैतस्य परमानन्देन मुदितः जीवात्मपरमात्मनोः अद्वैतभावेन प्राप्तशिवानन्देन सन्तुष्टः, शिवयोगी स्वीयैः अप्राकृतैः गुणैः लोकविलक्षणैः शिवलीलारूपैः गुणैः सर्वं जनं विस्मापयन् आश्चर्ययुक्तान् कारयन् देहिवत् शरीरवान् इव चरेत्।

**न प्रपञ्चे निजे देहे न धर्मे न च दुष्कृते।**
**गतवैषम्यधीर्धीरो यतिश्चरति देहिवत्।।६२।।**

प्रपञ्चे विषये न प्रवर्तयन् निजेदेहे विषये न आसक्तः धर्मे विषये न प्रवर्तयन् दुष्कृते च विषये न चिन्तयन् सन् गतवैषम्यधीः गता वैषम्यस्य धीः यस्मात् सः दूरीकृतसमविषमत्वरूपबुद्धिः सन् धीरः यतिः देहिवत् देहवानिव चरति।

**प्राकृतैश्वर्यसम्पत्तिपराङ्मुखमनः - स्थितिः।**
**चिदानन्दनिजात्मस्थो मोदते मुनिपुङ्गवः।।६३।।**

प्राकृतैश्वर्यसम्पत्तिपराङ्मुखमनःस्थितिः प्राकृतैश्वर्यसम्पत्तिविषये पराङ्मुखा

मनसः स्थितिः यस्य सः लौकिकरजस्तमोगुणादिभिः सम्पन्नसृष्टिस्थित्यादिसम्पद्विषये आशारहितमनोभावनवान् सन् चिदानन्दनिजात्मस्थः सच्चिदानन्दात्मकस्वस्वरूपवान् च सन् मुनिपुङ्गवः चरस्थली शिवयोगिश्रेष्ठः मोदते नित्यशिवानन्दानन्दी भवति।

*॥इति चरस्थलम्॥*

## (९) परस्थलम्

**स्वयमेव स्वयं भूत्वा चरतः स्वस्वरूपतः।**
**परं नास्तीति बोधस्य परत्वमभिधीयते॥६४॥**

स्वस्वरूपतः स्वस्वरूपात् परं नास्ति अन्यत् किञ्चिदपि नास्ति इति बोधस्य इत्यात्मकज्ञानस्य कारणात् स्वयमेव स्वयं भूत्वा चरतः सञ्चरणशीलस्य शिवयोगिनः परत्वम् परस्थलत्वम् अभिधीयते कथ्यते।

**स्वतन्त्रः सर्वकृत्येषु स्वं परत्वेन भावितः।**
**तृणीकुर्वन् जगज्जालं वर्तते शिवयोगिराट्॥६५॥**

सर्वकृत्येषु स्वतन्त्रः सर्वतन्त्रस्वतन्त्रः, स्वं स्वात्मानं परत्वेन स्वयस्थलचरस्थलापेक्षया श्रेष्ठत्वेन भावितः शिवयोगिराट् शिवयोगिश्रेष्ठः जगज्जालं जगतः जालं तृणीकुर्वन् तृणवत् भावयन् वर्तते।

**वर्णाश्रमसमाचारमार्गनिष्ठापराङ्मुखः ।**
**सर्वोत्कृष्टं स्वमात्मानं पश्यन् योगी तु मोदते॥६६॥**

वर्णाश्रमसमाचारमार्गनिष्ठापराङ्मुखः-वर्णानाम् आश्रमानां च समुदाचारस्य मार्गे निष्ठया पराङ्मुखःवर्णाश्रमेषु विहितसमुदाचाराणां विषये परित्यक्तनिष्ठावान् योगी शिवयोगी स्वम् आत्मानं सर्वोत्कृष्टं पश्यन् सन् मोदते तु मोदते एव।

**विश्वातीतं परब्रह्म शिवाख्यं चित्स्वरूपकम्।**
**तदेवाहमिति ज्ञानी सर्वोत्कृष्टः स उच्यते॥६७॥**

शिवाख्यं परब्रह्म विश्वातीतं चित्स्वरूपकम् अस्ति इत्यतः अहमपि तदेव परब्रह्म इति चिन्तयन् ज्ञानी शिवयोगी सः सर्वोत्कृष्टः इत्युच्यते।

**अचलं ध्रुवमात्मानमनुपश्यन् निरन्तरम्।**
**निरस्तविश्वविभ्रान्तिर्जीवन्मुक्तो भवेन्मुनिः।।६८।।**

आत्मानम् अचलं निश्चलं ध्रुवं नित्यम् इति निरन्तरम् अनुपश्यन् चिन्तयन् मुनिः निरस्तविश्वविभ्रान्तिः निरस्ता विश्वस्य विभ्रान्तिः येन सः दूरीकृतप्रपञ्चिक-भ्रान्तिमान् सन् जीवन्मुक्तः भवेत्।

**ब्रह्माद्याः किं नु कुर्वन्ति देवताः कर्ममार्गगाः?।**
**कर्मातीतपदस्यास्य स्वयं ब्रह्मस्वरूपिणः।।६९।।**

कर्मातीतपदस्थस्य कर्मणा अतीते पदे तिष्ठतः शाश्वतिके शिवाद्वैतस्थाने वर्तमानस्य, स्वयं ब्रह्मस्वरूपिणः शिवयोगिनः विषये कर्ममार्गगाः सृष्ट्यादिकर्ममार्गेषु वर्तमानाः ब्रह्माद्याः देवताः किं नु कुर्वन्ति? न किमपि कर्तुं शक्ताः।

**स्वेच्छया सञ्चरेद् योगी विमुञ्चद् देहमानिताम्।**
**दर्शनैः स्पर्शनैः सर्वानज्ञानपि विमोचयेत्।।७०।।**

देहमानितां देहस्य अभिमानित्वं विमुञ्चन् परित्यजन् सन् योगी शिवयोगी स्वेच्छया स्वेच्छानुसारं सञ्चरेत् अपि च स्वकीयैः दर्शनैः स्पर्शनैश्च सर्वान् अज्ञान् अपि विमोचयेत् मुक्तान् कारयेत्।

**नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे**
**सत्तानन्दचिदात्मके परशिवे साम्यं गतः संयमी।**
**प्रध्वस्ताश्रमवर्णधर्मनिगलः स्वच्छन्दसञ्चारवान्।**
**देहीवाद्भुतवैभवो विजयते जीवन्विमुक्तः सुधीः।।७१।।**

नित्ये शाश्वतस्वरूपवति निर्मलभावने निर्मला भावना यस्य तस्मिन् परिशुद्धमनोभाववति निरुपमे उपमारहिते निर्धूतविश्वभ्रमे निर्धूतः विश्वस्य भ्रमः येन सः दूरीकृतविश्वविषयकभ्रान्त्यादिसमस्तदोषवति, सत्तानन्दचिदात्मके सच्चिदानन्दस्वरूपके परशिवे साम्यं सादृश्यं गतः प्राप्तः संयमी जितेन्द्रियः शिवयोगी स्वयं च प्रध्वस्ताश्रमवर्णधर्मनिगलः प्रध्वस्तः आश्रमाणां वर्णानां च धर्मः एव निगलः येन सः दूरकृतचतुराश्रमचतुर्वणसम्बन्धिधर्मरूपशृङ्खलः, स्वच्छन्दसञ्चारवान् स्वच्छन्दं यथा स्यात्तथा सञ्चरणशीलः सन् देही इव

देहवान् इव वर्तयन् अद्भुतवैभवः अद्भुतं वैभवं यस्य सः लोकाश्चर्यजनकरीत्या वैभवयुक्तः सन् सुधीः परशिवज्ञानी परलिङ्गरूपी शिवयोगी स्वयं जीवन् सन्नपि विमुक्तः मुक्तात्मा सन् विजयते सर्वोत्कृष्टतया लीलामूर्तिधरः सन् प्रवर्धते। **विजयते** – वि+जि-जये, लट्, 'विपराभ्यां जेः' इति सूत्रेण आत्मनेपदत्वम्।

शार्दूलविक्रीडितम् वृत्तम्। लक्षणं तु—

'सूर्याश्वैर्मसजस्तताः स गुरवः शार्दूलविक्रीडितम्' इति।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ लिङ्गस्थले भक्तस्थलगतनवविधलिङ्गप्रसङ्गो नाम*

*॥पञ्चदशः परिच्छेदः॥*



# ।।षोडशः परिच्छेदः।।

## ।।माहेश्वरस्थलम्।।

### ।।अगस्त्य उवाच।।

**स्थलानां नवकं प्रोक्तं भक्तस्थलसमाश्रयम्।**
**माहेश्वरस्थले सिद्धं स्थलभेदं वदस्व मे।।१।।**

भक्तस्थलसमाश्रयं भक्तस्थलमाश्रित्य वर्तमानं स्थलानां नवकं नवस्थलभेदाः प्रोक्तम्, इतः परं माहेश्वरस्थले सिद्धं नियतं प्रसिद्धं स्थलभेदं मे वदस्व कथय।

**वदस्व**– वद-व्यक्तायां वाचि, आत्मने लोट्।

वदताम् वदेताम् वदन्ताम्। वदस्व - इत्यादि

### ।।श्री रेणुक उवाच।।

**माहेश्वरस्थले सन्ति स्थलानि नव तापस!।**
**क्रियागमस्थलं पूर्वं ततो भावागमस्थलम्।।२।।**

**ज्ञानागमस्थलं चाथ सकायस्थलमीरितम्।**
**ततोऽकायस्थलं प्रोक्तं परकायस्थलं ततः।।३।।**

**धर्माचारस्थलं चाथ भावाचारस्थलं ततः।**
**ज्ञानाचारस्थलं चेति क्रमादेषां भिदोच्यते।।४।।**

हे तापस! माहेश्वरस्थले तावत् क्रियागमस्थलम्, भावागमस्थलम्, ज्ञानागमस्थलम्, सकायस्थलम्, अकायस्थलम्, परकायस्थलम्, धर्माचारस्थलम्, भावाचारस्थलम्, ज्ञानाचारस्थलञ्चेति नव स्थलानि सन्ति। एषां क्रमात् भिदा भेदः सलक्षणम् उच्यते।

## (१०) क्रियागमस्थलम्

**शिवो हि परमः साक्षात् पूजा तस्य क्रियोच्यते।**
**तत्परा आगमा यस्मात् तदुक्तोऽयं क्रियागमः।।५।।**

परमः परलिङ्गशिवयोगीश्वरः एव साक्षात् शिवः, तस्य पूजा एव क्रिया इत्युच्यते हि, यस्मात् कारणात् आगमाः शिवागमाः तत्पराः तस्याः क्रियायाः पराः निष्ठाः सन्ति तस्मात् अयं क्रियागमः इत्युक्तः।

**प्रकाशते यथा नाग्निररण्यां मन्थनं विना।**
**क्रियां विना तथान्तःस्थो न प्रकाशो भवेच्छिवः।।६।।**

मन्थनं विना घर्षणं विना अरण्यां दारुखण्डविशेषे यथा अग्निः न प्रकाशते तथैव क्रियां विना पूजादिकं विना अन्तःस्थः लिङ्गमध्ये वर्तमानः शिवः न प्रकाशः भवेत् नैव प्रकटः भवेत्। अरणिनिर्मन्थनादेव यथा अग्निः प्रकाशते तथैव क्रियया एव लिङ्गमध्ये वर्तमानः शिवः प्रकाशते-इति साधर्म्यमूलः उपमाध्वनिः। अरणिनिर्मन्थनं विना यथा अग्निः न प्रकाशते तथैव क्रियया विना अन्तःस्थः शिवः न प्रकाशते-इतिवैधर्म्यमूलः उपमाध्वनिः।

**न यथा विधिलोपः स्याद्यथा देवः प्रसीदति।**
**यथागमः प्रमाणं स्यात् तथा कर्म समाचरेत्।।७।।**

विधिलोपः विधेः लोपः नियमभङ्गः यथा न स्यात्, देवः यथा प्रसीदति, यथा च आगमः शिवागमः प्रमाणं स्यात् तथा कर्म समाचरेत्।

**विधिः शिव नियोगोऽयं तस्माद् विहितकर्मणि।**
**शिवाराधनबुद्ध्यैव निरतः स्यात् विचक्षणः।।८।।**

विहितकर्मणि विषये पूजादिविहितं कर्म तावत् अयं विधिः विधानमेतत् शिवनियोगः शिवस्य नियोगः शिवेन निर्दिष्टः। तस्मात् विचक्षणः शिवज्ञानी शिवाराधनबुद्ध्या एव शिवस्य आराधनविषयकबुद्ध्या एव निरतः स्यात् पूजायां निरतः स्यात्।

**गुरोरादेशमासाद्य पूजयेत्परमेश्वरम्।**
**पूजिते परमेशाने पूजिताः सर्वदेवताः।।९।।**

गुरोः आदेशम् आसाद्यमङ्गीकृत्य परमेश्वरं पूजयेत् परमेशाने परमेश्वरे पूजिते सति सर्वदेवताः सर्वाः अपि देवताः पूजिताः स्युः।

**सदा शिवार्चनोपाय - सामग्रीव्यग्रमानसः।**
**शिवयोगरतो योगी मुच्यते नात्र संशयः।।१०।।**

सदा शिवार्चनोपाय-सामग्रीव्यग्रमानसः शिवस्य अर्चनायाः उपायस्य सामग्री संग्रहे व्यग्रं मानसं यस्य सः पत्रपुष्पादिसङ्ग्रहे तत्परः सन् शिवयोगरतः शिवयोगे रतः आसक्तः यः सः योगी मुच्यते मुक्तो भवति इत्यत्र न संशयः।

**अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।**
**फलोत्पत्तौ विरक्तस्य तस्मात् तद्द्वयमाचरेत्।।११।।**

ज्ञानकर्मणी ज्ञानं च कर्मच ज्ञानकर्मणी शिवज्ञानं शिवपूजाकर्मचेति द्वयमपि अन्धपङ्गुवत् अन्धश्च पङ्गुश्च अन्धपङ्गू तौ इव अन्योन्यसापेक्षे भवतः, तस्मात् विरक्तस्य विषयविरागिणः शिवयोगिनः फलोत्पत्तौ विषये मोक्षरूप-फलप्राप्तिविषये न तद् द्वयम् ज्ञानं कर्म च आचरेत्। अन्धस्य पङ्गुः सहायकः, पङ्गोः अन्धः सहायकः, एवमेव ज्ञानकर्मणोः परस्परं सापेक्षता इति उपमालङ्कारः।

**ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।**
**फलाभिसन्धिरहितं तस्मात्कर्म न सन्त्यजेत्।।१२।।**

विदुषां शिवज्ञानसम्पन्नानां ज्ञाने सिद्धे सत्यपि कर्म अपि विनियुज्यते अवश्यं विधीयते, तस्मात् फलाभिसन्धिरहितं फलस्य अभिसन्धिना प्रतिफलापेक्षया रहितं कर्म न सन्त्यजेत्।

**विनियुज्यते** – वि+नि+युजिर् - योगे, कर्मणि लट्।

**सन्त्यजेत्** – सं+त्यज - हानौ, विधिलिङ्।

**आचार एव सर्वेषामलङ्काराय कल्प्यते।**
**आचारहीनः पुरुषो लोके भवति निन्दितः।।१३।।**

सर्वेषामपि मनुष्याणाम् आचारः एव अलङ्काराय कल्प्यते बाह्ये

अभ्यन्तरे च शोभार्थमेव युज्यते, यतः आचारहीनः पुरुषः लोके निन्दितः भवति।

पूर्वार्धः उत्तरार्धेन समर्थितः इति काव्यलिङ्गालकारः।

**ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।**
**तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।१४।।**

आचारयुक्तेन ज्ञानेन एव महेश्वरः प्रसीदति प्रसन्नः भवति, तस्मात् ज्ञानी शिवज्ञानी आदेहपातनं देहपातनं यावत् यावज्जीवम् आचारवान् भवेत्।

**प्रसीदति**– प्र+षद्लृ - विशरणगत्यवसादनेषु, लट्।

*।।इति क्रियागमस्थलम्।।*

## (११) भावागमस्थलम्

**भावचिह्नानि विदुषो यानि सन्ति विरागिणः।**
**तानि भावागमत्वेन वर्तन्ते सर्वदेहिनाम्।।१५।।**

विरागिणः फलापेक्षारहितस्य विदुषः शिवज्ञानवतः शिवयोगिनः यानि भावचिह्नानि भ्भावप्रधानानि चिह्नानि सन्ति तानि सर्वदेहिनां सर्वे च ते देहिनश्च तेषां सर्वेषामपि भावागमत्वेन भावरूपागमशास्त्रत्वेन वर्तन्ते प्रवर्तन्ते।

**शिवोऽहमिति भावोऽपि शिवतापत्तिकारणम्।**
**न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्।।१६।।**

शिवः अहम् इति भावः अपि शिवतापत्तिकारणं शिवतायाः आपत्तेः कारणं शिवत्वप्राप्तेः कारणं भवति। किन्तु ज्ञानमात्रं केवलं ज्ञानं न कारणम् अथवा केवलम् आचारः अपि न कारणम्, परं भावयुक्तः शिवोऽहम्भावयुक्तः एव शिवः भवेत्।

**ज्ञानं वस्तु परिच्छेदो ध्यानं तद्भावकारणम्।**
**तस्माज्ज्ञाते महादेवे ध्यानयुक्तो भवेत्सुधीः।।१७।।**

ज्ञानं नाम वस्तु परिच्छेदः वस्तुस्वरूपनिर्णायकः अस्ति, ध्यानं तु तद्भावकारणं तस्य भावस्य कारणं तादृशवस्तुधर्मस्य प्राप्तेः कारणम्, तस्मात्

महादेवे ज्ञाते सति सुधीः शिवज्ञानी ध्यानयुक्तः ध्यानापरपर्यायभावयुक्तः भवेत्।

**अन्तर्बहिश्च सर्वत्र परिपूर्णं महेश्वरम्।**
**भावयेत्परमान्दलब्धये पण्डितोत्तमः।।१८।।**

तस्मात् पण्डितोत्तमः महाशिवज्ञानी अन्तः बहिश्च एवं सर्वत्र परिपूर्णं महेश्वरं परमानन्दलब्धये परमानन्दस्य परमशिवानन्दस्य लब्धये प्राप्त्यर्थं भावयेत् ध्यानादिना चिन्तयेत्।

**अर्थहीना यथावाणी पतिहीना यथा सती।**
**श्रुतिहीना यथा बुद्धिर्भावहीना तथा क्रिया।।१९।।**

अर्थहीना अर्थेन हीना वाणी यथा व्यर्था, पतिहीना सती यथा व्यर्था श्रुतिहीना वेदादिज्ञानसम्पत्तिरहिता बुद्धिः यथा व्यर्था तथैव भावहीना भावेन हीना क्रियापि व्यर्था। अत्र मालोपमालङ्कारः।

**चक्षुर्हीनो यथा रूपं न किञ्चिदीक्षितुं क्षमः।**
**भावहीनस्तथा योगी न शिवं द्रष्टुमीश्वरः।।२०।।**

चक्षुर्हीनः चक्षुषा हीनः अन्धः यथा किञ्चिदपि रूपम् ईक्षतुं न क्षमः न समर्थः तथैव भावहीनः योगी अपि शिवं द्रष्टुं न ईश्वरः न समर्थः।

चक्षुहीनः यथारूपं द्रष्टुं न समर्थः तथा भावहीनः योगी शिवं द्रष्टुं न समर्थः - इति वैधर्म्यमूलः उपमाध्वनिः। चक्षुष्मान् यथारूपं द्रष्टुं समर्थः तथा भावयुक्तः योगी शिवं द्रष्टुं समर्थः इति साधर्म्यमूलः उपमाध्वनिः।

**भावशुद्धेन मनसा पूजयेत् परमेष्ठिनम्।**
**भावहीनां न गृह्णाति पूजां सुमहतीमपि।।२१।।**

भावशुद्धेन भावः शुद्धः यस्मिन् तेन शुद्धभावयुक्तेन मनसा परमेष्ठिनं परमेश्वरं पूजयेत्, किन्तु भावहीनां सुमहतीमपि अत्युत्कृष्टामपि पूजां परमेश्वरः न गृह्णाति न स्वीकरोति।

उत्तरार्धः पूर्वार्धं समर्थयतीति काव्यलिङ्गालंकारः।

**नैरन्तर्येण सम्पन्ने भावे ध्यातुं शिवं प्रति।**
**तद्भावो जायते तद्वत् क्रिमेः कीटस्य चिन्तनात्।।२२।।**

क्रिमेः कीटस्य भ्रमरस्य नैरन्तर्येण चिन्तनात् यद्वत् तद्भावः तस्य भ्रमरस्य भावः जायते तद्वदेव नैरन्तर्येण भावे विशिष्टे भावे चित्ते शिवं प्रति ध्यातुं सम्पन्ने सति समुद्युक्ते सति तदा तद्भावः तस्य परमेश्वरस्य भावः जायते।

तद्भावः इत्यत्र श्लेषः। अतः अत्र श्लेषानुप्राणितः वाक्यार्थोपमालङ्कारः।

**निष्कलङ्कं निराकारं परब्रह्म शिवाभिधम्।**
**निर्ध्यातुमसमर्थोऽपि तद्विभूतिं विभावयेत्।।२३।।**

निष्कलङ्कं कलङ्करहितं निराकारम् आकाररहितम् शिवाभिधं परब्रह्म निर्ध्यातुं नैरन्तर्येण ध्यातुम् ध्यानं कर्तुम् असमर्थः सन्नपि पुरुषः तद्विभूतिं वा सर्वकर्तृत्व-सर्वशक्तिमत्त्वादिरूपां तस्य विभूतिं वापि विभावयेत् विशेषेण भावयेत् चिन्तयेत्।

*।।इति भावागमस्थलम्।।*

## (१२) ज्ञानागमस्थलम्

**परस्य ज्ञानचिह्नानि यानि सन्ति शरीरिणाम्।**
**तानि ज्ञानागमत्वेन प्रवर्तन्ते विमुक्तये।।२४।।**

परस्य भावागमस्यलसम्पन्नस्य परमशिवयोगिनः यानि ज्ञानचिह्नानि ज्ञानस्य चिह्नानि सन्ति तानि शरीरिणां जीवात्मनां विमुक्तये मोक्षप्रदानार्थं ज्ञानागमत्वेन ज्ञानप्रधानागमत्वेन साधनरूपेण प्रवर्तन्ते प्रयत्नशीलानि भवन्ति।

**भावेन किं फलं पुंसां कर्मणा वा किमिष्यते?।**
**भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम्।।२५।।**

पुंसां मनुष्याणां भावेन किं वा फलं स्यात्? न किमपि, तथैव केवलं कर्मणा वा किम् इष्यते? न किमपि, किन्तु ज्ञानकर्मसमायुक्तं ज्ञानं च कर्म च ज्ञानकर्मणी ताभ्यां समायुक्तं संयुक्तं ज्ञानमेव विमुक्तिदं विमुक्तिं ददाति इति विमुक्तिदं मोक्षप्रदायकम्।

**केवलं कर्ममात्रेण जन्मकोटिशतैरपि।**
**नात्मनां जायते मुक्तिर्ज्ञानं मुक्तेर्हि कारणम्।।२६।।**

केवलं कर्ममार्गेण आत्मनां जीवानां जन्मकोटिशतैः अपि शतकोटि-संख्याकजन्मभिः अपि मुक्तिः न जायते, किन्तु ज्ञानं हि ज्ञानमेव मुक्तेः कारणम्।

मुक्तेर्हि कारणम्- इति सामान्यवाक्यम्, अवशिष्टं पादत्रयं विशेषवाक्यम्। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासालङ्कारः।

**ज्ञानहीनं सदाकर्म पुंसां संसारकारणम्।**
**तदेव ज्ञानयोगेन संसारविनिवर्तकम्।।२७।।**

ज्ञानहीनं कर्म ज्ञानेन हीनं कर्म तु सदा पुंसां संसारकारणं भवति संसारस्य भवस्य कारणं भवति, तत् एव कर्म ज्ञानयोगेन ज्ञानस्य योगेन सम्बन्धेन संसारविनिवर्तकं संसारस्य विनिवर्तकं संसारनाशकं भवति।

**फलं क्रियावतां पुंसां स्वर्गाद्यं नश्वरं यतः।**
**तस्मात् स्थायिफलप्राप्त्यै ज्ञानमेव समभ्यसेत्।।२८।।**

यतः यस्मात् कारणात् पुंसां मनुष्याणां क्रियावतां सतां क्रियाशीलाः यदि वा स्युः तदा फलं तु नश्वरं क्षणिकं स्वर्गाद्यमेव, तस्मादेव कारणात् स्थायिफलप्राप्त्यै स्थायिनः फलस्य प्राप्त्यै शाश्वतिक-मोक्षरूप-फलप्राप्त्यर्थं ज्ञानमेव समभ्यसेत् सम्यगेव आश्रयेत्।

**शास्त्राभ्यासादियत्नेन सद्गुरोरुपदेशतः।**
**ज्ञानमेव समभ्यस्येत् किमन्येन प्रयोजनम्?।।२९।।**

शास्त्राभ्यासादियत्नेन शास्त्राणाम् अभ्यासादिना यत्नेन तथैव सद्गुरोः उपदेशतः उपदेशाच्च ज्ञानमेव समभ्यस्येत् सम्यगभ्यासं कुर्यात्, अन्येन कर्मादिना किं प्रयोजनम्? न किमपि प्रयोजनम्।

**समभ्यस्येत्** – सम् + अभि+ असु-क्षेपणे, विधिलिङ्- अस्येत् अस्येताम् अस्येयुः इत्यादि।

**समभ्यसेत्**– सम् + अभि + अस - भुवि, भावार्थक– विधिलिङ् – अभ्यसेत् अभ्यसेताम् - इत्यादि।

**ज्ञानं परशिवाद्वैतपरिपाकविनिश्चयः।**
**येन संसारसम्बन्धविनिवृत्तिर्भवेत् सताम्।।३०।।**

येन येन शिवज्ञानेन सतां सत्पुरुषाणां शिवयोगिनाम् संसारसम्बन्धविनिवृत्तिः संसारसम्बन्धस्य विनिवृत्तिः जननमरणरूपसंसारसम्बन्धस्य विनाशः फलेत् फलतः जीवन्मुक्तिः सम्भवेत्, तादृशं च ज्ञानं नाम- परशिवाद्वैत-परिपाकविनिश्चयः परशिवेन सह यदद्वैतं तस्य अद्वैतस्य परिपाकः यः तस्यैव विनिश्चयः दृढता लिङ्गाङ्गसामरस्यरूपस्य अद्वैतसिद्धेः परिपक्वतायाः दार्ढ्यम् एव ज्ञानम्।

**शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते।**
**शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम्।।३१।।**

इदं सर्वमपि शिवात्मकमेव शिवात् अन्यत् नैव विद्यते, अपि च अहमपि शिव एव इति या बुद्धिः तदेव उत्तमं श्रेष्ठतमं ज्ञानम्।

**अन्धो यथा पुरः स्थानि वस्तूनि च न पश्यति।**
**ज्ञानहीनस्तथा देही नात्मस्थं वीक्षते शिवम्।।३२।।**

अन्धः नेत्रहीनः यथा पुरःस्थानि पुरोवर्तमानानि वस्तूनि न पश्यति द्रष्टुमशक्तः तथैव ज्ञानहीनः देही अपि आत्मस्यम् आत्मनि दहराकाशे वर्तमानं शिवं न एव वीक्षते। अत्र वाक्यार्थोपमालङ्कारः।

**शिवस्य दर्शनात् पुंसां जन्मरोगनिवर्तनम्।**
**शिवदर्शनमप्याहुः सुलभं ज्ञानचक्षुषाम्।।३३।।**

पुंसां मनुष्याणां शिवस्य दर्शनात् जन्मरोगनिवर्तनम् जन्म एव रोगः तस्य निवर्तनं नाशः सम्भवति, अपि च शिवदर्शनं तु ज्ञानचक्षुषां ज्ञानमेव चक्षुः येषां तेषां शिवज्ञानरूपनेत्रवतामेव सुलभमिति आहुः कथयन्ति। जन्मरोग–ज्ञानचक्षुष् – इत्यत्र रूपकम्।

**दीपं विना यथा गेहे नान्धकारो निवर्तते।**
**ज्ञानं विना तथा चित्ते मोहोऽपि न निवर्तते।।३४।।**

गेहे गृहे यथा दीपं विना अन्धकारः न निवर्तते, तथैव ज्ञानं विना चित्ते

हृदये मोहः अपि न निवर्तते। वाक्यार्थोपमालङ्कारः।

गेहे यथा दीपेन अन्धकारः नश्यति तथैव चित्ते ज्ञानेन मोहः नश्यति इति साधर्म्यमूलः वाक्योपमा।

गेहे यथा दीपेन विना अन्धकारः न नश्यति तथैव ज्ञानेन विना चित्ते मोहः नैव नाशमेति इति वैधर्म्यमूलः वाक्यार्थोपमालङ्कारः।

*।।इति ज्ञानागमस्थलम्।।*

## (१३) सकायस्थलम्

**परस्य या तनुर्ज्ञेयाऽदेहकर्माभिमानिनः।**
**तथा सकायो लोकोऽयं तदात्मत्वनिरूपणात्।।३५।।**

अदेहकर्माभिमानिनः देहश्च कर्म च देहकर्मणी तयोः अभिमानः न अस्ति इति तस्य देहाभिमानशून्यस्य कर्माभिमानशून्यस्य च परस्य शिवज्ञानसम्पन्नस्य शिवयोगिनः या तनुः शरीरं ज्ञेया ज्ञातुं योग्या वर्तते तया तन्वा तेन शरीरेण तदात्मत्वनिरूपणात् तस्य तदीयशरीरस्य आत्मत्वेन निरूपणात् कारणात् अयं लोकः सकायः कायेन सहितः इति जानाति। 'शरीरमाद्यं खलु धर्मसाधनम्' इति महाकविवाक्यानुसारं लौकिकव्यवहारकृते अयं शरीरवान् इति भावः।

**कायं विना समस्तानां न क्रिया न च भावना।**
**न ज्ञानं यत्ततो योगी कायवानेन सञ्चरेत्।।३६।।**

समस्तानां सर्वेषामपि जनानां कायं विना शरीरेण विना क्रिया नास्ति भावना अपि च नास्ति नापि च ज्ञानमृष यस्मात् कारणात् एतत्सर्वं ज्ञानं विना न स्यात् ततः एव तस्मादेव कारणात् योगी शिवयोगी कायवानेव सन् सञ्चरेत्। क्रियायाः भावनायाः ज्ञानस्य च शरीरमेव मूलं कारणम्।

**शिवैकज्ञानयुक्तस्य योगिनोऽपि महात्मनः।**
**काययोगेन सिद्ध्यन्ति भोगमोक्षादयः सदा।।३७।।**

महात्मनः योगिनः शिवयोगिनः शिवैकज्ञानयुक्तस्यापि सतः शिवे एव एकं प्रधानं ज्ञानं यत् तेन युक्तस्य सतः अपि अपारशिवज्ञानवान् सन्नपि

काययोगेनैव कायस्य योगेनैव सम्बन्धेनैव सदा भोगमोक्षादयः भोगः मोक्षः इत्याद्यः सिद्धयन्ति सम्भवन्ति। तेन शरीरवता भाव्यम्।

**काष्ठं विना यथा वह्निर्जायते न प्रकाशवान्।**
**मूर्तिं विना तथा योगी नात्मतत्त्वप्रकाशवान्।।३८।।**

काष्ठं विना वह्निः यथा प्रकाशवान् प्रकाशयुक्तः न जायते तथैव मूर्तिं विना शरीरं विना आत्मतत्त्वप्रकाशवान् आत्मनः तत्त्वस्य प्रकाशवान् जीवात्मपरमात्मतत्त्वस्य प्रकाशकः एव न जायते। वाक्यार्थोपमालङ्कारः।

**मूर्त्यात्मनैव देवस्य यथा पूज्यत्वकल्पना।**
**तथा देहात्मनैवास्य पूज्यत्वं परयोगिनः।।३९।।**

देवस्य परमेश्वरस्य यथा मूर्त्यात्मना एव स्थूलमूर्तित्वस्वरूपेणैव पूज्यत्वकल्पना पूज्यत्वस्य कल्पना पूज्यत्वभावना तथैव परयोगिनः अस्य परशिवज्ञानसम्पन्नस्य शिवयोगिनः देहात्मना एव देहस्वरूपेणैव पूज्यत्वं कल्पितमस्ति। वाक्यार्थोपमालङ्कारः।

**निष्कलो हि महादेवः परिपूर्णः सदाशिवः।**
**जगत्सृष्ट्यादिसंसिद्ध्यै मूर्तिमानेव भासते।।४०।।**

महादेवः सदाशिवः निष्कलः कलारहितः परिपूर्णः इति हि सत्यम्, परं जगत्सृष्ट्यादिसंसिद्धौ जगतः सृष्टिः स्थितिः इत्यादिकार्याणां संसिद्ध्यै सिद्ध्यर्थं मूर्तिमान् सन्नेव भासते प्रकाशते। अमूर्तिमतः तस्य सृष्ट्यादिकार्ये सुगमता न स्यात्।

**ब्रह्माद्या देवताः सर्वा मुनयोऽपि मुमुक्षवः।**
**कायवन्तो हि कुर्वन्ति तपः सर्वार्थ-साधकम्।।४१।।**

ब्रह्माद्याः सर्वाः देवताः मुमुक्षवः मोक्षेच्छवः सर्वेऽपि मुनयः कायवन्तः शरीरवन्तः एव सन्तः सर्वार्थसाधकं सर्वेषामर्थानां साधकं तपः कुर्वन्ति। शरीरराहित्येन तपसः असम्भवत्वम्।

**तपोहि मूलं सर्वासां सिद्धीनां यज्जगत्त्रये।**
**तपस्तत्कायमूलं हि तस्मात् कायं न सन्त्यजेत्।।४२।।**

जगत्त्रये जगतां त्रयेऽपि सर्वासां सिद्धीनां तपः एव मूलं हि मूलकारणं हि, तत् तपः तादृशं तपस्तावत् कायमूलं हि कायः मूलं यस्य तत् कायमूलमेवास्ति हि, तस्मात् कायं न सन्त्यजेत्।

सिद्धीनां तपः कारणम् अस्य तपसः शरीरं कारणम् पूर्वपूर्वकार्यं प्रति उत्तरोत्तरं कारणमिति वर्णनात् अत्र कारणमालालङ्कारः। अस्य लक्षणं तु–

'गुम्फः कारणमाला स्याद्यथा प्राक् प्रान्तकारणैः' इति।

*।।इति सकायस्थलम्।।*

## (१४) अकायस्थलम्

**औपचारिकदेहित्वाज्जगदात्मत्वभावनात् ।**
**मायासम्बन्ध-राहित्यादकायो हि परः स्मृतः।।४३।।**

औपचारिकदेहित्वात् उपचारस्य भावः औपचारिकम् देहिनः भावः देहित्वम् औपचारिकं च तत् देहित्वं च औपचारिकदेहित्वम् तस्मात् - उपचारमात्रेण अप्राधान्येन मात्रेण देहधारिवत् वर्तमानत्वात्, जगदात्मत्व-भावनात् जगतः आत्मत्वस्य भावनात् सर्वमपि विश्वं शिवस्वभाव-भूतचित्क्रियाशक्तिमयमिति भावनाविशेषात् मायासम्बन्धराहित्याच्च मायायाः सम्बन्धस्य राहित्यात् च परः विशिष्टकायवान् परयोगी तावत् अकायः इति स्मृतः हि। प्रथमपादत्रयं चतुर्थपादं समर्थयतीति काव्यलिङ्गालङ्कारः।

**परस्य देहयोगेऽपि न देहाश्रयविक्रिया।**
**शिवस्येव यतस्तस्मादकायोऽयं प्रकीर्तितः।।४४।।**

यतः यस्मात् कारणात् शिवस्य इव-यथा शिवस्य देहयोगे सत्यपि कामक्रोधादिदेहाश्रयविक्रियाः नैव भवन्ति तथैव, परस्य परयोगिनः देहयोगे सत्यपि देहस्य योगे सत्यपि यस्मात् कारणात् देहाश्रयविक्रियाः शरीरप्रयुक्त कामक्रोधादयो विकाराः नैव भवन्ति, तस्मादेव कारणात् अयं परयोगी अकायः इति प्रकीर्तितः। वाक्यार्थोपमालङ्कारः।

**परलिङ्गे विलीनस्य परमानन्दचिन्मये।**
**कुतो देहेन सम्बन्धो? देहिवद् भासनं भ्रमः।।४५।।**

परमानन्दचिन्मये परमानन्दमये चिन्मये च परलिङ्गे विलीनस्य लयं प्राप्तस्य परयोगिनः देहेन स्थलशरीरेण सम्बन्धः कुतः? सम्बन्धोनास्त्येव, परं लोके देहिवत् भासनं तु केवलं भ्रमः एव।

**देहाभिमानहीनस्य शिवभावे स्थितात्मनः।**
**जगदेतच्छरीरं स्याद् देहेनैकेन का व्यथा?।।४६।।**

देहाभिमानहीनस्य देहस्य अभिमानेन हीनस्य देहाभिमानरहितस्य शिवभावे शिवोऽहम्भावे स्थितात्मनः स्थिततत्वस्वरूपवतः शिवयोगिनः एतत् जगत् एव शरीरं स्यात्, स्थिते चैवं एकेन देहेन केवलमेकेन शरीरेण का व्यथा? कापि व्यथा नास्ति जगच्छरीरवत्त्वात्।

**शिवज्ञानैकनिष्ठस्य नाहङ्कारभवभ्रमः।**
**न चेन्द्रियभवं दुःखं त्यक्तदेहाभिमानिनः।।४७।।**

शिवज्ञानैकनिष्ठस्य शिवज्ञाने एव केवलं निष्ठस्य त्यक्तदेहाभिमानिनः त्यक्तः देहस्य अभिमानः येन तस्य देहाभिमानशून्यस्य शिवयोगिनः अहङ्कारभवभ्रमः अहङ्कारस्य भवविषयकः प्राप्तेः भ्रमः नास्ति अपि च इन्द्रियभवं इन्द्रियैः भवं समुत्पन्नं दुःखमपि नास्ति।

**न मनुष्यो न देवोऽहं न यक्षो नैव राक्षसः।**
**शिवोऽहमिति यो बुद्ध्यात् तस्य किं देहकर्मणा?।।**

अहं न मनुष्यः, अहं न देवः, अहं न यक्षः, नैव राक्षसः, किन्तु अहं शिवः इति यः बुद्ध्यात् जानीयात् तस्य देहकर्मणा देहसम्बन्धिकर्मणा किम्? किं प्रयोजनम्? न किमपि प्रयोजनम्।

**बुद्ध्यात्** – बुध-अवगमने, आशीर्लिङ्, बुद्ध्यात् बुद्ध्यास्ताम् बुद्ध्यासुः इत्यादि।

*।।इति अकायस्थलम्।।*

## (१५) परकायस्थलम्

**वशीकृतत्वात् प्रकृतेर्मायामार्गातिवर्तनात्।**
**परकायोऽयमाख्यातः सत्यज्ञानसुखात्मकः।।४९।।**

प्रकृतेः वशीकृत्वात् वशीकृतप्रकृतेः कारणात्मायामार्गातिवर्तनात् मायायाः मार्गस्य अतिवर्तनात् मायाम् अतीत्य वर्तमानत्वात् अयं स्वयम् अकायः शिवयोगी सत्यज्ञानसुखात्मकः सत्यं च ज्ञानं च सुखं च सत्यज्ञानसुखानि एतान्येव आत्मा यस्य सः सच्चिदानन्दात्मकः सन् परकायः इत्याख्यातः प्रोक्तः।

**परब्रह्मवपुर्यस्य प्रबोधानन्दभासुरम्।**
**प्राकृतेन शरीरेण किमेतेनास्य जायते?।।५०।।**

यस्य वशीकृतप्रकृतिकस्य निवारितमायामार्गकस्य सत्यज्ञानसुखात्मकस्य च परकायस्य शिवयोगिनः, प्रबोधानन्दभासुरं प्रबोधानन्दाभ्यां भासुरं चिदानन्दाभ्यां मनोहरम् यत् परब्रह्म तदेव वपुः शरीरमस्ति तादृशस्य शिवयोगिनः अस्य एतेन प्राकृतेन शरीरेण प्राकृतिकशरीरेण किं जायते? न किञ्चिदपि जायते।

**सम्यग्-ज्ञानाग्नि-सन्दग्ध-जन्मबीजकलेबरः।**
**शिवतत्त्वावलम्बी यः परकायः स उच्यते।।५१।।**

सम्यगज्ञानाग्निसन्दग्धजन्मबीजकलेवरः - सम्यक्तया ज्ञानमेव अग्निः तेन सन्दग्धं जन्म एव बीजं तदेव कलेवरं यस्य सः दृढतरं यथातथा ज्ञानाग्निंसन्दग्धजन्मरूपबीजसदृशशरीरः सन् यः शिवतत्त्वावलम्बी च वर्तते पर-शिव-तत्त्वविशिष्टवान् वर्तते शिवयोगी सः एव परकायः इत्युच्यते।

ज्ञानाग्नि-जन्मबीज-इत्यत्र रूपकम्।

यथा अग्निना सन्दग्धं बीजं नैव प्ररोहति तद्वदेव शिवतत्त्वज्ञानवान् शिवयोगी दूरीकृतजननमरणादिवान् वर्तते - इति उपमाध्वनिः।

**इन्द्रियाणि मनोवृत्तिवासनाः कर्मसम्भवाः।**
**यत्र यान्ति लयं तेन सकायोऽयं परात्मना।।५२।।**

इन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि, कर्मसम्भवाः कर्मणा कर्मवशात् सम्भवाः मनोवृत्तिवासनाः मनसः वृत्तेः कारणात् उत्पन्नाः संस्कारविशेषाः - इत्येते यत्र ब्रह्मणि लयं यान्ति तेन तादृशेन परात्मना स्वान्तर्निहित-सर्वव्यापारवता परब्रह्मणा अयं परकायः शिवयोगी सकायः इति

व्यपदिश्यते।

**पराहन्तामनुप्राप्य पश्येद्विश्वं चिदात्मकम्।**
**सदेहोऽतिभ्रमस्तस्य निश्चिता शिवात्मता।।५३।।**

पराहन्ताम् – परब्रह्म-परशिव-पर्यात्मेतिपर्यायवत् परतत्त्वमेव स्वयम् इति भावना एव पराहन्ता, तां पराहन्ताम् अनुप्राप्य यः सदेहः, अतिभ्रमः अतिक्रान्तः भ्रमः येन सः अतिभ्रमः भ्रमरहितः सन्नेव यः शिवयोगी चिदात्मकं विश्वं विश्वं सच्चिदानन्दात्मकमिति भावयन् पश्येत् तस्य तादृशस्य शिवयोगिनः शिवात्मता तु निश्चिता एव।

**स्वस्वरूपं चिदाकारं ज्योतिः साक्षाद्विचिन्तयन्।**
**देहवानपि निर्देहो जीवन्मुक्तो हि साधकः।।५४।।**

स्वस्वरूपं तावत् साक्षात् अन्तश्चक्षुर्गोचरत्वात् हृदि प्रत्यक्षरूपं चिदाकारं ज्योतिः सदा चिन्तयन् साधकः शिवयोगी स्वयं देहवान् सन्नपि निर्देहः शरीर-रहितः इव जीवन्मुक्तः एव वर्तते हि।

**देहस्तिष्ठतु वा यातु योगिनः स्वात्मबोधिनः।**
**जीवन्मुक्तिर्भवेत् सद्यश्चिदानन्दप्रकाशिनी।।५५।।**

स्वात्मबोधिनः स्वात्मविषयकपरिज्ञानवतः योगिनः परकायस्य शिवयोगिनः देहः तिष्ठतु वा यातु वा, परं चिदानन्दप्रकाशिनी सच्चिदानन्दप्रकाशिका जीवन्मुक्तिः सद्यः एव भवेत्।

**आत्मज्ञानावसानं हि संसारपरिपीडनम्।**
**सूर्योदयेऽपि किं लोकास्तिमिरेणोपरुद्ध्यते?।।५६।।**

संसारपरिपीडनं संसारस्य परिपीडनं सांसारिकं दुःखं तावत् आत्मज्ञानावसानं हि आत्मनः ज्ञानमेव अवसानं यस्य तत् आत्मज्ञानप्राप्तिपर्यन्तमेव वर्तते हि, सूर्योदये सत्यपि लोकः तिमिरेण अन्धकारेण किम् उपरुद्ध्यते? नैव उपरुद्ध्यते। सूर्योदये सति सम्भवति तिमिरं यथा नष्टमायाति तथैव आत्मज्ञाने सम्भवति सति संसारपरिपीडनं नष्टमाप्नोति – इति उपमाध्वनिः। अपि च उत्तरार्धेन समर्थकवाक्येन पूर्वार्धः समर्थ्यते इति काव्यलिङ्गालंकारः।

**देहाभिमाननिर्मुक्तः कलातीतपदाश्रयः।**
**कथं याति परिच्छेदं शरीरेषु महाबुधः?।।५७।।**

देहाभिमाननिर्मुक्तः देहस्य अभिमानेन निर्मुक्तः कलातीतपदाश्रयः कलाभिः अतीतं पदमेव आश्रयः यस्य सः निवृत्तिकलादिषट्कलाभिः अतीतं परब्रह्मणः यत् पदं तत् आश्रित्य वर्तमानः सन् महाबुधः परकायः शिवयोगी शरीरेषु सर्वेषु परिच्छेदम् इदमस्य शरीरम् इदं तस्य शरीरम् इदं मदीयम् इत्याध्यात्मकं भेदभावं कथं वा याति? न केनापि प्रकारेण याति।

*।।इति परकायस्थलम्।।*

**तस्यैव परकायस्य समाचारो य इष्यते।**
**स धर्मः सर्वलोकानामुपकाराय कल्प्यते।।५८।।**

तस्यैव परकायस्य परब्रह्मशरीरिणः परकायस्य शिवयोगिनः यः समाचारः सम् समीचीनः उत्कृष्टः आचारः इष्यते इच्छाविषयीक्रियते सः एव धर्मः सर्वलोकानां सर्वेषामपि लोकानाम् उपकाराय एव कल्प्यते समर्थो भवति।

**अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा।**
**दानं पूजा जपो ध्यानमिति धर्मस्य सङ्ग्रहः।।५९।।**

अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, दया, क्षमा, दानम्, पूजा, जपः, ध्यानम् इति एषः धर्मस्य सङ्ग्रहः।

**शिवेन विहितो यस्मादागमैर्धर्मसङ्ग्रहः।**
**तस्मात्तमाचरन् विद्वान् तत्प्रसादाय कल्प्यते।।६०।।**

यस्मात् कारणात् शिवेन उपदेष्ट्रा आगमैः शिवागमैः अयं धर्मसङ्ग्रहः विवृतः प्रोक्तः अत एव तं धर्मम् आचरन् विद्वान् शिवज्ञानी शिवयोगी तत्प्रसादाय तस्य परमेश्वरस्य प्रसादाय अनुग्रहाय कल्प्यते योग्यः भवति।

**कल्प्यते** - क्लृप् - व्यक्तायां वाचि, कर्मणि लट्।

**अधर्मं न स्पृशेत् किञ्चिद् विहितं धर्ममाचरेत्।**
**तं च कामविनिर्मुक्तं तमपि ज्ञानपूर्वकम्।।६१।।**

किञ्चिदपि अधर्मं न स्पृशेत् अर्थात् धर्मविरुद्धं कर्म नाचरेत्, अपि च विहितमेव धर्मम् आचरेत्, तत्रापि कामनिर्मुक्तं तं च कामेन निर्मुक्तं यथास्यात् तथा तं विहितं धर्मम् आचरेत्, तत्रापि ज्ञानपूर्वकमेव तमपि विहितं निष्कामं धर्मं समाचरेत्। ज्ञानपूर्वकः कामनिर्मुक्तः विहितश्च एव धर्मः आचरणीयः।

**आत्मवत् सर्वभूतानि संपश्येद्योगवत्तमः।**
**जगदेवात्मताभावान्निग्रहादिविरोधतः ।।६२।।**

योगवित्तमः योगिश्रेष्ठः योगीश्वरः तावत् जगदेकात्मताभावात् जगतः एकात्मत्वस्य भावात् स्वाभिन्नत्वेन वर्तते जगत् इत्यात्मकैकात्मत्वभावात् अपि च निग्रहादिविरोधतः निग्रहादेः विरोधात् निग्रहानुग्रहयोः विरोधात् निग्रहानुग्रहयोः अवकाशमदत्त्वा एव सर्वभूतानि सर्वानपि जनान् प्राणिनश्च आत्मवत् एव सम्पश्येत्।

**एक एव शिवः साक्षाज्जगदेतदिति स्फुटम्।**
**पश्यतः किं न जायेत ममकारो हि विभ्रमः।।६३।।**

शिवः एकः एव साक्षात् जगत् वर्तते इत्येतत् सर्वं स्फुटं यथा स्यात् तथा पश्यतः ईक्षमाणस्य शिवयोगिनः किं न जायेत? सर्वमपि करगतमेव स्यात्, किन्तु ममकारः हि इदं मम इत्यात्मकः ममकारस्तु केवलं विभ्रमः भ्रमः एव।

**धर्म एव समस्तानां यतः संसिद्धिकारणम्।**
**निःस्पृहोऽपि महायोगी धर्ममार्गं च न त्यजेत्।।६४।।**

यतः यस्मात् कारणात् धर्मः एव समस्तानां सर्वेषामपि संसिद्धिकारणं संसिद्धेः भोगमोक्षादेः कारणम्, तस्मात् महायोगी निःस्पृहः सन्नपि आशारहितः सन्नेव धर्मस्य मार्गं नैव त्यजेत्।

**जायेत** – जनी - प्रादुर्भावे विधिलिङ्।

**त्यजेत्** – त्यज-हानौ, विधिलिङ्।

**ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत्।**
**आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः।।६५।।**

ज्ञानामृतेन ज्ञानमेव अमृतं तेन तृप्तः सन्नपि योगी धर्मं नैव सन्त्यजेत्,

यतः लौकिकाः जनाः महतां महात्मनाम् आचारं दृष्ट्वा तथैव प्रवर्तन्ते हि तानेव अनुकुर्वन्ति हि। उत्तरार्धः पूर्वार्धं समर्थयतीति अर्थान्तरन्यासालङ्कारः। 'यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः' —इति भगवद्गीतोक्तिः।

**सदाचारप्रियः शम्भुः सदाचारेण पूजयेत्।**
**सदाचारं विना तस्य प्रसादो नैव जायते।।६६।।**

शम्भुः सदाचारप्रियः सदाचारः एव प्रियः यस्य सः सदाचारप्रियः वर्तते, तस्मात् सदाचारेण एव तं शिवं पूजयेत्, यतः सदाचारं विना तस्य पूजां कुर्वतः पूजकस्य तस्य शिवस्य प्रसादः अनुग्रहः नैव जायते नैव सम्भवति।

उत्तरार्धेन पूर्वार्धस्य समर्थनात् काव्यलिङ्गालङ्कारः।

*।।इति धर्माचारस्थलम्।।*

## (१७) भावाचारस्थलम्

**भाव एवास्य सर्वेषां भावचारः प्रकीर्तितः।**
**भावो मानसचेष्टात्मा परिपूर्णः शिवाश्रयः।।६७।।**

अस्य धर्माचारसम्पन्नस्य शिवयोगिनः भावः एव सर्वेषां जनानां कृते भावाचारः भावस्य आचारः इति प्रकीर्तितः, भावो नाम मानसचेष्टात्मा मानसचेष्टास्वरूपकः, परिपूर्णः, शिवाश्रयश्च।

'परिपूर्णत्वे सति शिवाश्रयत्वे च सति मानसचेष्टात्मत्वं भावः' इति भावस्य लक्षणम्। 'भावः चित्तवृत्तिविशेषः' इत्यालंकारिकाः।

**भावनाविहितं कर्म पावनादपि पावनम्।**
**तस्माद्भावनया युक्तं परधर्मं समाचरेत्।।६८।।**

भावनाविहितं भावनया विहितं अन्तर्भावनया समाचरितं कर्म तावत् पावनात् अपि पवित्रतरादपि पावनं पवित्रतमम्, तस्मात् भावनया युक्तमेव परधर्मं समाचरेत्। शिवभावनया रहितं कर्म व्यर्थमेव।

**भावेन हि मनः शुद्धिर्भावशुद्धिश्च कर्मणा।**
**इति सञ्चित्य मनसा योगी भावं न सन्त्यजेत्।।६९।।**

भावेन शिवभावेन मनःशुद्धिः हि मनसः शुद्धिः भवत्येव, भावशुद्धिः च भावस्य बुद्धिस्तावत् कर्मणा बाह्याभ्यन्तरकर्मणा भवति, इति मनसा सञ्चिन्त्य योगी तु भावं नैव सन्त्यजेत्।

भावः कारणम्, मनः शुद्धिः कार्यम्, कर्म च कारणं भावशुद्धिश्च कार्यम्- एवम् उत्तरोत्तरकारणकार्यभाववर्णनात् कारणमालालङ्कारः। अस्य लक्षणम्– 'गुम्फः कारणमाला स्याद्यथा प्राक्प्रान्तकारणैः' इति।

**शिवभावनया सर्वं नित्यनैमित्तिकादिकम्।**
**कुर्वन्नपि महायोगी गुणदोषैर्न बाध्यते।।७०।।**

नित्यनैमित्तिकादिकं नित्यं कर्म नैमित्तिकं कर्म इत्यादिकं च यत्किमपि कर्म तत्सर्वमपि शिवभावनया कुर्वन् सन्नपि महायोगी गुणदोषैः गुणैश्च दोषैश्च न बाध्यते नैव पीड्यते। आचरणे गुणोऽपि नैव त्यागे दोषोऽपि नैव।

**अन्तः प्रकाशांमनस्य संवित्सूर्यस्य सन्ततम्।**
**भावेन यदुपस्थानं तत्सन्ध्यावन्दनं विदुः।।७१।।**

अन्तः सन्ततं प्रकाशमानस्य हृदयकमलमध्ये निरन्तरं ज्योतिवत् प्रकाशमानस्य संवित्सूर्यस्य संविद्रूपस्य शिवज्ञानरूपस्य सूर्यस्य भावेन शिवभावने यत् उपस्थानं उपासनं सेवा, तदेव सन्ध्यावन्दनं प्रातः सन्ध्यावन्दनं सायं सन्धावन्दनमिति विदुः जानन्ति।

संवित्सूर्य – इत्यत्ररूपकम्।

प्रसिद्धं सन्ध्यावन्दनम् आर्यरूपेण निषिद्ध्य तत्र संवित्सूर्योपासनरूपसन्ध्यावन्दनं समारोपितमिति अत्र शुद्धापह्नुत्यलङ्कारस्य ध्वनित्वम्। लक्षणन्तु– 'शुद्धापह्नुतिरन्यस्य आरोपार्थो धर्मनिह्नवः' - इति।

'प्रसिद्धं सन्ध्यावन्दनं तु सन्ध्यावन्दनं नास्ति किन्तु सन्ध्यावन्दनं तु अन्तः संवित्सूर्यस्य भावेन उपासनम् एव' इति समन्वयः।

**आत्मज्योतिषि सर्वेषां विषयाणां समर्पणम्।**
**अन्तर्मुखेन भावेन होमकर्मेति गीयते।।७२।।**

आत्मज्योतिषि हृदन्तः भासमाने चिदानन्दात्मके अग्नौ अन्तर्मुखेन

भावेन अन्तर्मुखीकृतभावेन सह सर्वेषामपि विषयाणां गन्धादीनां समर्पणमेव होमकर्म इति गीयते कथ्यते। होमकर्म एव होमकर्म इति रूपकम्, आत्मज्योतिः इत्यत्रापि रूपकम्।

लोके प्रसिद्धं होमकर्म निषिद्ध्य आत्माग्नौ विषयसमर्पणम् एव होमकर्म इति समारोपात् शुद्धापह्नुत्यलङ्कारः।

**भावयेत् सर्वकर्माणि नित्यनैमित्तिकानि च।**
**शिवप्रीतिकराण्येव सङ्गराहित्यसिद्धये।।७३।।**

नित्यनैमित्तिकानि यानि सर्वकर्माणि सर्वाणि च तानि कर्माणि च वर्तन्ते तानि सर्वाणि अपि सङ्गराहित्य-सिद्धये संसारबन्धननिवृत्त्यर्थमेव शिवप्रीतिकराणि शिवस्य प्रीति-सम्पादकानि इत्येव भावयेत्।

**शिवे निवेश्य सकलं कार्याकार्यं विवेकतः।**
**वर्तते यो महाभागः स सङ्गरहितो भवेत्।।७४।।**

विवेकतः-कर्ता कारयिता कर्म कर्मफलम् इत्यादिकं सर्वम् अपि शिव एवेति विवेकात् कार्याकार्यं कार्यं च अकार्यं च एतयोः समाहारः कार्याकार्यं सकलमपि शिवे निवेश्य समर्पयित्वा यः महाभागः महाशिवयोगी वर्तते स एव सङ्गरहितः संसारबन्धनिर्मुक्तः एव भवेत्।

**आत्मानमखिलं वस्तु शिवमानन्दचिन्मयम्।**
**एकभावेन सततं सम्पश्यन्नेव पश्यति।।७५।।**

आत्मानम्, अखिलं वस्तु, आनन्दचिन्मयं सच्चिदानन्दात्मकं शिवम् इत्येतत्सर्वमपि सततं निरन्तरं एकभावे स्वाविनाभावसम्बन्धेन सम्पश्यन्नेव शिवयोगी पश्यत्येव।

*।।इति भावाचारस्थलम्।।*

## (१८) ज्ञानाचारस्थलम्

**अस्य ज्ञानसमाचारः योगिनः सर्वदेहिनाम्।**
**ज्ञानाचारो यदुक्तोऽयं ज्ञानाचारः सकथ्यते।।७६।।**

अस्य योगिनः भावाचारसम्पन्नस्य शिवयोगिनः यः ज्ञानसमाचारः ज्ञानप्रधानः आचारः अस्ति सः एव सर्वदेहिनां अपि ज्ञानाचारः इति यत् यस्मात् कारणात् उक्तः अयं ज्ञानाचारः एव सः प्रसिद्धः ज्ञानाचारः इति कथ्यते।

**शिवाद्वैतपरं ज्ञानं ज्ञानमित्युच्यते बुधैः।**
**सिद्धेन वाप्यसिद्धेन फलं ज्ञानान्तरेण किम्?।।७७।।**

शिवाद्वैत-परं ज्ञानमेव ज्ञानमिति बुधैः शिवशास्त्रज्ञैः विद्वद्भिः उच्यते, स्थिते चैवम् सिद्धेन वा शास्त्रसिद्धेन वा असिद्धेन वा शास्त्रैः असिद्धेन वा ज्ञानान्तरेण शिवाद्वैतज्ञानं विना अन्येन ज्ञानेन किं फलम्? न किमपि फलम्।

**निर्मूलं हि शिवज्ञानं निःश्रेयसकरं परम्।**
**रागद्वेषादिकलुषं भूयः संसृतिकारणम्।।७८।।**

शिवज्ञानं तावत् निर्मलं हि स्वभावनिर्मलमेव हि, अपि च परम् उत्कृष्टतया निःश्रेयसकरं निःश्रेयसं करोति इति शिवजीवैक्यरूपमोक्षस्य मूलकारणम्, किन्तु एतद्व्यतिरिक्तं तु ज्ञानं भेदात्मकं यत् तत् रागद्वेषादिकलुषं रागद्वेषादिना कलुषं रागद्वेषादिना कामक्रोधादिना च सम्मिश्रितत्वात् कालुष्ययुक्तं सत् भूयः पौनः पुन्येन संसृतिकारणम् संसृतेः जननमरणादिकृते मूल-कारणम्।

**परिपूर्णं महाज्ञानं परतत्त्वप्रकाशकम्।**
**अवलम्ब्य प्रवृत्तो यो ज्ञानाचारः स उच्यते।।७९।।**

परतत्त्वप्रकाशकं परतत्त्वस्य प्रकाशकं यत् परिपूर्णं महाज्ञानम् अवलम्ब्य आश्रित्य यः प्रवृत्तः भवति आचारः स एव ज्ञानाचारः इत्युच्यते।

**निर्विकल्पे परे धाम्नि निष्कले शिवनामनि।**
**ज्ञानेन योजयेत् सर्वं ज्ञानाचारी प्रकीर्तितः।।८०।।**

निर्विकल्पे विकल्परहिते निष्कलेकलादिशून्ये शिवनामनि शिवइति अभिधानवति परे धाम्नि परब्रह्मणः आधारभूते परवेश्मनि यः शिवयोगी सर्वं समस्तमपि ज्ञानेन शिवज्ञानेन सह योजयेत् संयोजयेत् सः ज्ञानाचारी ज्ञानाचारस्थली इति प्रकीर्तितः कथितः।

**ज्ञानं मुक्तिप्रदं प्राप्य गुरुदृष्टिप्रसादतः।**
**कः कुर्यात् कर्मकार्पण्ये वाञ्छां संसारवर्धने।।८१।।**

गुरुदृष्टिप्रसादतः गुरोः दृष्टेः प्रसादात् गुरोः अनुग्रहात् मुक्तिप्रदं मुक्तिं प्रददाति इति मुक्ति-प्रदायकं ज्ञानं प्राप्य, संसारवर्धने रागद्वेषादियुक्तत्वात् जननमरणादिसहितत्वात् संसारवर्धने कर्मकार्पण्ये महति कर्मरूपकूपविषये वांछाम् अपेक्षां कः कुर्यात्? न कोऽपि ज्ञानी तत्र मतिं कुर्यात्।

**कर्मज्ञानाग्निना दग्धं न प्ररोहेत् कथञ्चन।**
**यदाहुः संसृतेर्मूलं प्रवाहानुगतं बुधाः।।८२।।**

यत्कर्म संसृतेः जननमरणादिकस्य मूलं कारणमिति प्रवाहानुगतं प्रवाहमनुसृत्य गतं लोकानुगतत्वेनागतम् इति बुधाः यत् आहुः यत् कर्म कथयन्ति तत् कर्मज्ञानाग्निना दग्धं चेत् कथञ्चन न प्ररोहेत् नैव अङ्कुरत्वमेति।

ज्ञानाग्निना – इत्यत्र रूपकम्। यथा अग्निदग्धं बीजं न प्ररोहति तथैव ज्ञानाग्निदग्धं कर्म पुनः नैव कार्यकारि भवति इति उपमाध्वनिः।

**ज्ञानेनः हीनः पुरुषः कर्मणा बध्यते सदा।**
**ज्ञानिनः कर्मसंकल्पाः भवन्ति किल निष्फलाः।।८३।।**

ज्ञानेन शिवज्ञानेन हीनः पुरुषः सदा कर्मणा बद्ध्यते। किन्तु ज्ञानिनः शिवज्ञानसम्पन्नस्य कर्मसंकल्पाः कर्मविषयकमनः - संकल्पाः निष्फलाः फलशून्याः एव भवन्ति किल!

**शुद्धाचारे शुद्धभावो विवेकी**
**ज्योतिः पश्यन् सर्वतश्चैवमेकम्।**
**ज्ञानध्वस्तप्राकृतात्म - प्रपञ्चो**
**जीवन्मुक्तश्चेष्टते दिव्ययोगी।।८४।।**

शुद्धाचारे सुनिर्मले ज्ञानरूपे शिवाचारे शुद्धभावः परिशुद्धशिवभाववान् सन् विवेकी परमज्ञानी ज्ञानाचारस्थली शिवयोगी सर्वतः सर्वत्र एकमेव एकैकमेव अनिर्वचनीयम् अद्वितीयं च एकमेव ज्योतिः दिव्यं शैवं च ज्योतिः पश्यन् अन्तरनुसन्धानं कुर्वन्, ज्ञानध्वस्तप्राकृतात्मप्रपञ्चः शिवज्ञानेन ध्वस्तः प्राकृतात्मा चासौ प्रपञ्चः येन सः शिवाद्वैत - रूपपरमज्ञानेन

विनाशितप्राकृतरूपप्रपञ्चः सन् दिव्ययोगी शिवयोगसम्पन्नः दिव्यशिवयोगी जीवन्मुक्तः सन् चेष्टते लौकिकः इव व्यवहरति।

**चेष्टते** – चेष्ट - चेष्टायाम्, लट्।

अत्र शालिनीवृत्तं छन्दः। लक्षणं—

'शालिन्युक्ता म्तौतगौ गोऽब्धिलोकैः।' इति।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ माहेश्वस्थलाश्रितनवलिङ्गप्रसङ्गो नाम ।।षोडशः परिच्छेदः।।*



# ।।सप्तदशः परिच्छेदः।।

## ।।प्रसादिस्थलम्।।

।।अगस्त्य उवाच।।

स्थलानि तानि चोक्तानि यानि माहेश्वरस्थले।
वदस्व स्थलभेदं मे प्रसादिस्थलसंश्रितम्।।१।।

माहेश्वरस्थले यानि च स्थलानि वर्तन्ते तानि उक्तानि, इदानीं प्रसादिस्थलसंश्रितं स्थलभेदं मे वदस्व।

।।श्रीरेणुक उवाच।।

स्थलभेदा नव प्रोक्ताः प्रसादिस्थलसंश्रिताः।
कायानुग्रहणं पूर्वमिन्द्रियानुग्रहं ततः।।२।।

प्राणानुग्रहणं पश्चात् ततः कार्यार्पितं मतम्।
करणार्पितमाख्यातं ततो भावार्पितं मतम्।।३।।

शिष्यस्थलं ततः प्रवोक्तं शुश्रूषास्थलमेव च।
ततः सेव्यस्थलं चैषां क्रमशः श्रृणु लक्षणम्।।४।।

प्रसादिस्थलमाश्रित्य वर्तमानाः संख्यया नव विद्यन्ते स्थलभेदाः, ते च यथाक्रमं - कायानुग्रहस्थलम्, इन्द्रियानुग्रहस्थलम्, प्राणानुग्रहस्थलम्, कार्यार्पणस्थलम्, शुश्रूषुस्थलम्, सेव्यस्थलं चेति। एषां लक्षणं यथाक्रमं उच्यते, श्रृणु।

**श्रृणु**– श्रु - श्रवणे - लोट् - श्रृणोतु - श्रृणुतात् - इत्यादि।

### (१९) कायानुग्रहस्थलम्

अनुगृह्णाति यल्लोकान् स्वकायं दर्शयन्नसौ।
तस्मादेव समाख्यातः कायानुग्रहनामकः।।५।।

असौ ज्ञानाचारः शिवयोगी यत् यस्मात् कारणात् स्वकायं स्वस्य शरीरं दर्शयन् प्रकटयन् सन् लोकान् सर्वानपि जनान् अनुगृह्णाति अनुग्रहं करोति, तस्मात् एव कारणात् कायानुग्रहनामकः इति समाख्यातः।

**अनुगृह्णाति** – अनु+ग्रह - उपादाने, लट्।

**यथा शिवोऽनुगृह्णाति मूर्तिमाविश्य देहिनः।**
**तथा योगी शरीरस्थः सर्वानुग्राहको भवेत्।।६।।**

यथा शिवः मूर्तिम् आविश्य चन्द्रधरत्वादिरूपेण शरीरं सम्प्राप्य देहिनः जनान् अनुगृह्णाति, तथैव योगी ज्ञानाचारसम्पन्नः शिवयोगी शरीरस्थः शरीरे तिष्ठति इति शरीरस्थः शरीरवान् सन् सर्वानुग्राहकः भवेत्।

**शिवः शरीरयोगेऽपि यथा सङ्गविवर्जितः।**
**तथा योगी शरीरस्थो निःसङ्गो वर्तते सदा।।७।।**

शिवः यथा शरीरयोगे सत्यपि शरीरसम्बन्धे सत्यपि सङ्गविवर्जितः सङ्गेन विवर्जितः शरीरसम्पर्करहितः वर्तते, तथैव योगी अपि शरीरस्थः शरीरवान् सन्नपि सदा निःसङ्गः शरीरसङ्गरहितः वर्तते।

उपमाध्वनिः।

**शिवभावनया युक्तः स्थिरया निर्विकल्पया।**
**शिवो भवति निर्धूतमायावेशपरिप्लवः।।८।।**

स्थिरया दृढतरया निर्विकल्पया विकल्परहितया शिवभावनया शिवोऽहम्भावनया युक्तः सन् शिवयोगी निर्धूतमायावेशपरिप्लवः निर्धूतः मायायाः आवेशः एव परिप्लवः येन सः दूरीकृतमायासम्बन्धिदुःखादि-रूपघोरोपप्लवः सन् शिवः एव भवति। प्रत्यक्ष-शिवः।

**चित्तवृत्तिषु लीनासु शिवे चित्सुखसागरे।**
**अविद्याकल्पितं वस्तु नान्यत्पश्यति संयमी।।९।।**

चित्सुखसागरे चित्सुखस्य सागरः इव वर्तमाने शिवे संयमिनः योगिनः चित्तवृत्तिषु लीनासु सतीषु मनोव्यापारेषु सर्वेषु लयं गतेषु सत्सु संयमी जितेन्द्रियः योगी अविद्याकल्पितम् अविद्यया अविद्यारूपिण्या मायया

कल्पितम् अन्यत् वस्तु न पश्यति। शिवे महासागरसादृश्यप्रतीतेः उपमाध्वनिः।

**नेदं रजतमित्युक्ते यथा शुक्तिः प्रकाशते।**
**नेदं जगदिति ज्ञाते शिवतत्त्वं प्रकाशते।।१०।।**

शुक्तौ इदं न रजतम् इत्युक्ते सति यथैव शुक्तिः स्वयं प्रकाशते, तथैव इदं जगत् न शिवस्वरूपकत्वात् इति ज्ञाते सति स्वयमेव शिवतत्त्वं प्रकाशते।

वाक्यार्थोपमालङ्कारः।

**यथा स्वप्नकृतं वस्तु प्रबोधेनैव शाम्यति।**
**तथा शिवस्य विज्ञाने संसारं नैव पश्यति।।११।।**

स्वप्नकृतं वस्तु स्वप्ने दृष्टं वस्तु यथा प्रबोधेन एव जाग्रदवस्थायामेव सत्यां शाम्यति शमनं प्राप्नोति, तथैव शिवस्य विज्ञाने शिवाद्वैतपरिज्ञाने जाते सति संसारं योगी नैव पश्यति। वाक्यार्थोपमालङ्कारः।

**अज्ञानमेव सर्वेषां संसारभ्रमकारणम्।**
**तन्निवृतौ कथं भूयः संसारभ्रमदर्शनम्?।।१२।।**

सर्वेषाम् अज्ञानमेव संसारभ्रमकारणम् संसारभ्रमस्य कारणं भवति, तन्निवृत्तौ तस्य निवृत्तौ सत्यां भूयः पुनश्च संसारभ्रमदर्शनं संसारभ्रमस्य दर्शनं जननमरणचक्रभ्रमप्राप्तिः कथं स्यात्? नैव स्यात्।

**गलिताहङ्कृतिग्रन्थिः क्रीडाकल्पित-विग्रहः।**
**जीवन्मुक्तश्चरेद्योगी देहिवन्निरुपाधिकः।।१३।।**

गलिताहङ्कृतिग्रन्थिः गलिता अहंकृतिरेव ग्रन्थिः यस्य सः विनष्टाहंकाररूपग्रन्थिः, क्रीडाकल्पितविग्रहः क्रीडया कल्पितः विग्रहः येन सः क्रीडार्थम् स्वेच्छया आरोपितशरीरः सन् निरुपाधिकः उपाधिरहितः सन् योगी जीवन्मुक्तः सन्नपि देहिवत् चरेत्। अहंकृतिग्रन्थिः - अत्र रूपकम्।

**चरेत्** – चर-गतौ भक्षणे च, विधिलिङ्।

*।।इति कायानुग्रहस्थलम्।।*

## (२०) इन्द्रियानुग्रहस्थलम्

**दर्शनात् परकायस्य करणानां विवेकतः।**
**इन्द्रियानुग्रहः प्रोक्तः सर्वेषां तत्त्ववेदिभिः।।१४।।**

परकायस्य शिवयोगिनः दर्शनात् करणानाम् इन्द्रियाणाम् विवेकतः विवेकाच्च सर्वेषामपि तत्त्ववेदिभिः शिवतत्त्वज्ञानसम्पन्नैः इन्द्रियानुग्रहः इति प्रोक्तः।

**इन्द्रियाणां समस्तानां स्वार्थेषु सति सङ्गमे।**
**रागो वा जायते द्वेषस्तौ योगी परिवर्जयेत्।।१५।।**

समस्तानामपि इन्द्रियाणां ज्ञानेन्द्रियाणां स्वार्थेषु शब्दादिस्वस्वविषयेषु सङ्गमे सम्बन्धे सति तदा रागः अनुरागो वा द्वेषो वा जायते, किन्तु योगी तौ द्वावपि परिवर्जयेत् परित्यजेत्।

**इन्द्रियाणां बहिर्वृत्तिः प्रपञ्चस्य प्रकाशिनी।**
**अन्तः शिवे समावेशो निष्प्रपञ्चस्य कारणम्।।१६।।**

इन्द्रियाणां पञ्चज्ञानेन्द्रियाणां बहिःवृत्तिः बाह्यव्यापारस्तु प्रपञ्चस्य जगतः प्रकाशिनी प्रकाशिका भवति, किन्तु तासां वृत्तीनां अन्तः हृदये शिवे यः समावेशः प्रवृत्तिस्तु निष्प्रपञ्चस्य संसारबन्धराहित्यस्य कारणं भवति।

**क्षणं मन्त्रः शिवं पश्यन् केवलेनैव चेतसा।**
**बाह्यार्थानामनुभवं क्षणं कुर्वन् दृगादिभिः।।१७।।**

**सर्वेन्द्रियनिरूढोऽपि सर्वेन्द्रियविहीनवान्।**
**शिवाहितमना योगी शिवं पश्यति नापरम्।।१८।।**

अन्तः स्वहृदि केवलेन बाह्येन्द्रियसङ्गरहितेन चेतसा एव क्षणं क्षणकालं यावत् शिवं पश्यन् ध्यायन् सन्, दृगादिभिः नेत्रेन्द्रियादिभिः क्षणं बाह्यार्थानाम् शब्दादिविषयाणाम् अनुभवं कुर्वन् सन्, शिवाहितमनाः शिवे आहितं मनः यस्य सः शिवनिष्ठमनस्कः सन् योगी, सर्वेन्द्रियनिरूढः सर्वेन्द्रियविहीनवान् इव सर्वैः अपि इन्द्रियैः विहीनवान् इव वर्तमानः केवलं शिवमेव पश्यति परं नापरं पश्यति।

**न जरा मरणं नास्ति न पिपासा न च क्षुधा।**
**शिवाहितेन्द्रियस्यास्य निर्मानस्य महात्मन:।।१९।।**

शिवाहितेन्द्रियस्य शिवे आहितानि इन्द्रियाणि यस्य तस्य शिवे निवेशितसकलेन्द्रियव्यापारस्य निर्मानस्य अभिमानशून्यस्य महात्मन: अस्य शिवयोगिन: जरा नास्ति, मरणं नास्ति, पिपासा नास्ति, क्षुधा च नास्ति।

**मनो यत्र प्रवर्तेत तत्र सर्वेन्द्रियस्थिति:।**
**शिवे मनसि संल्लीने क्व चेन्द्रियविचारणा?।।२०।।**

यत्र विषये मन: प्रवर्तेत प्रवर्तयति तत्रैव सर्वेन्द्रियस्थिति: सर्वेषाम् इन्द्रियाणां स्थिति: प्रवर्तते, अथ च मनसि शिवे संल्लीने सति संसक्ते सति तदा इन्द्रियविचारणा च क्व? इन्द्रियाणां व्यापारेषु प्रवृत्तिरपि नास्ति।

**यद्यत् पश्यन् दृशा योगी मनसा चिन्तयत्यपि।**
**तत्तत् सर्वं शिवाकारं संविद्रूपं प्रकाशते।।२१।।**

योगी दृशा नेत्रेण यद्यत् यत् यत् पश्यन् तथा यद्यत् मनसा चिन्तयति, तत्तत् सर्वमपि शिवाकारं सन् संविद्रूपं च चिदानन्दरूपं च सत् एव प्रकाशते।

**करणै: सहितं प्राणं मनस्याधाय संयमी।**
**योजयेत् स शिव: साक्षाद्यत्र नास्ति जगद्भ्रम:।।२२।।**

संयमी जितेन्द्रिय: योगी करणै: नेत्रादिभि: सहितं प्राणं प्राणवायुं मनसि आधाय संस्थाप्य परशिवे योजयेत् स: एव साक्षात् शिव:, यत्र अस्य च जगद्भ्रम: जगत: भ्रम: नास्ति।

**सर्वेन्द्रियप्रवृत्त्या च बहिरन्त: शिवं यजन्।**
**स्वच्छन्दचारी सर्वत्र सुखी भवति संयमी।।२३।।**

संयमी शिवयोगी सर्वेन्द्रियप्रवृत्त्या सर्वेषाम् इन्द्रियाणां सर्वत्र प्रवर्तनेन बहि: अन्तश्च शिवं यजन् पूजयन् सन् स्वयं च सर्वत्र स्वच्छन्दचारी स्वेच्छया एव सञ्चरणशील: सुखी भवति शिवानन्दानन्दी भवति।

*।।इति इन्द्रियानुग्रहस्थलम्।।*

## (२१) प्राणानुग्रहस्थलम्

**शिवस्य परकायस्य यत् तात्पर्यावलोकनम्।**
**तत्प्राणानुग्रहः प्रोक्तः सर्वेषां तत्त्वदर्शिभिः।।२४।।**

परकायस्य इन्द्रियानुग्रहसम्पन्नस्य परब्रह्मकायस्य शिवस्य शिवरूपिणः शिवयोगिनः यत् तात्पर्यावलोकनं तात्पर्यस्य अवलोकनं महालिङ्गात्मक-परमेश्वरस्य अन्तर्दर्शनम् भवति तत् तत्त्वदर्शिभिः तत्त्वज्ञानिभिः सर्वेषां जनानां कृते प्राणानुग्रहः इति प्रोक्तः।

**प्राणो यस्य लयं याति शिवे परमकारणे।**
**कुतस्तस्येन्द्रियस्फूर्तिः कुतः संसारदर्शनम्?।।२५।।**

यस्य शिवयोगिनः प्राणः प्राणवायुः परमकारणे शिवे लयं याति सामरस्यं प्राप्नोति तस्य शिवयोगिनः इन्द्रियस्फूर्तिः कुतः? संसारदर्शनं च कुतः? उभयमपि न स्यात्।

**करणेषु निवृत्तेषु स्वार्थसङ्गात् प्रयत्नतः।**
**तैः समं प्राणमारोप्य स्वान्ते शान्तमतिः स्वयम्।।२६।।**

प्राणवायौ शिवे लयं गते सति, तदा, प्रयत्नतः प्रयत्नपूर्वकम् करणेषु ज्ञानेन्द्रियेषु स्वार्थसङ्गात् शब्दादिस्वविषयसम्बन्धात् निवृत्तेषु दूरीभूतेषु सत्सु तदा शिवयोगी स्वान्ते स्वहृदये तैः समं ज्ञानेन्द्रियैः सह प्राणमपि आरोप्य योजयित्वा स्वयं शान्तमतिः प्रशान्तमतिः भवति।

**शान्तत्वात् प्राणवृत्तीनां मनः शाम्यति वृत्तिभिः।**
**तच्छान्तौ योगिनां किञ्चिच्छिवादन्यन्न दृश्यते।।२७।।**

शिवयोगिनः प्राणवृत्तीनां रेचकादीनां व्यापाराणां शान्तत्वात् केवलं कुम्भके स्थिरत्वात् मनः अपि स्वस्य वृत्तिभिः व्यापारैः शाम्यति प्रशान्तं भवति, तच्छान्तौ तस्याः मनोवृत्तेः शान्तौ सत्यां योगिनां शिवात् अन्यत् किञ्चिदपि न दृश्यते।

**प्राण एव मनुष्याणां देहधारणकारणम्।**
**तदाधारः शिवः प्रोक्तः सर्वकारणकारणम्।।२८।।**

प्राणः एव प्राणवायुरेव मनुष्याणां देहधारणकारणं देहधारणस्य कारणम्, तदाधारः तस्य प्राणस्य आधारः तावत् सर्वकारणकारणं सर्वेषां कारणानामपि कारणं शिवः एवेति प्रोक्तः।

**निराधारः शिवः साक्षात् प्राणस्तेन प्रतिष्ठितः।**
**तदाधारा तनुर्ज्ञेया जीवो येनैव चेष्टते।।२९।।**

शिवः साक्षात् निराधारः स्वयमेव आधारभूतत्वात् आधाररहितः, प्राणश्च तेन आधारभूतेन शिवेनैव तेन प्रतिष्ठितः वर्तते, तनुश्च शरीरं च तदाधारा तस्य प्राणवायोः आधारः अस्ति अस्याः इति तदाधारा प्राणाधारा इति ज्ञेया, येन शरीरेण जीवः चेष्टते चलनादिक्रियावान् वर्तते। प्राणस्य शिवः आधारः, प्राणाधारा तनुः, शरीराधारः जीवः इति वर्णनात् कारणमालालङ्कारः।

**शिवे प्राणो विलीनोऽपि योगिनो योगमार्गतः।**
**स्वशक्तिवासनायोगाद् धारयत्येव विग्रहम्।।३०।।**

योगमार्गतः योगस्य मार्गतः योगमार्गात् योगिनः शिवयोगिनः प्राणः शिवे विलीनः सन्नपि योगी तु स्वशक्तिवासनायोगात् स्वशक्तेः .वासनायाः योगात् स्वशक्त्या प्राप्तस्य संस्कारविशेषस्य सम्बन्धबलात् सः विग्रहं शरीरं धारयति एव धारयन्नेव वर्तते।

**स चाभ्यासवशाद्भूयः सर्वतत्त्वातिवर्तिनि।**
**निष्कलङ्के निराकारे निरस्ताशेषविक्लवे।।३१।।**

सः च जीवात्मनि आश्रयीभूतः सः च प्राणवायुः भूयः आधिक्येन अभ्यासवशात् एव सर्वतत्त्वातिवर्तिनि सर्वाणि च तत्त्वानि अतीत्य वर्तमाने, निष्कलङ्के कलङ्करहिते निराकारे आकाररहिते निरस्ताशेषविक्लवे दूरीकृतसमस्त-बाधादिके, शिवे–

**चिद्विलासपरिस्फूर्तिपरिपूर्ण - सुखाद्वये।**
**शिवे विलीनः सर्वात्मा योगी चलति न क्वचित्।।३२।।**

चिद्विलासपरिस्फूर्तिपरिपूर्ण-सुखाद्वये - चिद्विलासस्य परिस्फूर्त्या प्राप्तेन परिपूर्णशिवानन्दरूपसुखेन अनुपमे शिवे विलीनः सर्वात्मा सकलव्यापारवान् योगी क्वचिदपि न चलति स्थिरो वर्तते।

**प्रध्वस्तवासनासङ्गात् प्राणवृत्तिपरिक्षयात्।**
**शिवैकीभूतसर्वात्मा स्थाणुवद्भाति संयमी।।३३।।**

प्रध्वस्तवासनासङ्गात् विनष्टसकलेन्द्रियविषय - सहवासात् प्राणवृत्ति-परिक्षयात् प्राणवृत्तेः परिक्षयात् प्राणव्यापारस्यापि नाशात् संयमी योगी तावत् शिवैकीभूतसर्वात्मा सन् शिवलिङ्गे एव एकरसीभूतसकलेन्द्रियव्यापारवान् सन् स्थाणुवत् शाखादिरहितशुष्ककुब्जवृक्षवत् अचलः सन् भाति प्रकाशते।

शिवयोगिनः स्थाणोः सादृश्यवर्णनात् उपमालङ्कारः।

*॥ प्राणानुग्रहस्थलम्॥*

**शिवस्य पररूपस्य सर्वानुग्राहिणोऽर्चने।**
**त्यागो देहाभिमानस्य कार्यार्पितमुदाहृतम्।।३४।।**

सर्वानुग्राहिणः सर्वानुग्राहकस्य पररूपस्य परब्रह्मशरीरवतः परमशिवयोगिनः शिवस्य अर्चने विषये देहाभिमानस्य त्यागः एव कार्यार्पितम् इति उदाहृतम्।

**यदा योगी निजं देहं शिवाय विनिवेदयेत्।**
**तदा भवति तद्रूपं शिवरूपं न संशयः।।३७।।**

यदा योगी निजं देहं शरीरं शिवाय विनिवेदयेत् समर्पयेत् तदा तद्रूपं तस्य शिवयोगिनः रूपं केवलं शिवरूपमेव अत्र न संशयः।

**इन्द्रियप्रीतिहेतूनि विषयासङ्गजानि च।**
**सुखानि सुखचिद्रूपे शिवयोगी निवेदयेत्।।३६।।**

इन्द्रियप्रीतिहेतूनि चक्षुरादीन्द्रियाणां प्रीतेः कारणीभूतानि विषयासङ्गजानि च रूपदर्शनादि-विषयसम्पर्कात् जातानि च सुखानि लौकिक - सुखानि सुखचिद्रूपे चिदानन्दरूपे परमेश्वरे शिवयोगी निवेदयेत् समर्पयेत्।

**दर्शनात् स्पर्शनाद्भुक्तेः श्रवणाद् घ्राणनादपि।**
**विषयेभ्यो यदुत्पन्नं शिवे तत्सुखमर्पयेत्।।३७।।**

दर्शनात् नेत्रेन्द्रियद्वारा रूपदर्शनात्, स्पर्शनात् त्वगिन्द्रियद्वारा स्पर्शनात्, भुक्तेः रसनेन्द्रियद्वारा चर्वणरूपकार्यात्, श्रवणात् श्रवणेन्द्रियद्वारा शब्दश्रवणात्, घ्राणनात् घ्राणेन्द्रियद्वारा गन्धग्रहणाच्च एवं विषयेभ्यः

सकाशात् यत् सुखमुत्पन्नं तत्सर्वमपि सुखं शिवे समर्पयेत्।

**देहद्वारेण यद्यत् स्यात् सुखं प्रासङ्गमात्मनः।**
**तत्तन्निवेदयन् शम्भोर्योगी भवति निर्मलः।।३८।।**

देहद्वारेण शरीरमुखेन इन्द्रियैश्च यत् यत् सुखं स्यात्, अपि च आत्मनः स्वस्य प्रासङ्गं प्रसङ्गाच्च आगतं यत् सुखं तत् तत् सुखं शम्भोः निवेदयन् समर्पयन् योगी निर्मलः परिशुद्धः भवति।

*।।इति कायार्पितस्थलम्।।*

## (२३) करणार्पितस्थलम्

**आसञ्जनं समस्तानां करणानां परात्परे।**
**शिवे यत्तदिदं प्रोक्तं करणार्पितमागमे।।३९।।**

परात्परे श्रेष्ठतरादपि श्रेष्ठतमे शिवे समस्तानां करणानाम् इन्द्रियाणां यत् आसञ्जनम् अस्ति संयोजनं वर्तते तदिदं आगमे आगमजाते करणार्पितम् इति प्रोक्तम्।

**यद्यत्करणमालम्ब्य भुङ्क्ते विषयजं सुखम्।**
**तत्तच्छिवे समर्प्यैष करणार्पक उच्यते।।४०।।**

यत् यत् करणम् अवलम्ब्य (आलम्ब्य) यद्यत् ज्ञानेन्द्रियम् आश्रित्य तथैव यत् यत् विषयजं सुखं गन्धादिविषयेभ्यः सम्प्राप्तं सुखम् भुङ्क्ते अनुभवविषयीकरोति यः शिवयोगी तत् तत् सर्वमपि सुखं शिवे समर्प्य एषः शिवयोगी तावत् करणार्पकः इति उच्यते।

**अहङ्कारमदोदृक्तमन्तःकरणवारणम् ।**
**बध्नीयाद्यः शिवालाने स धीरः सर्वसिद्धिमान्।।४१।।**

अहङ्कारमदोद्रिक्तम् अहङ्कारः एव मदः तेन उद्रिक्तम् उन्मत्तम् अन्तःकरणवारणम् अन्तःकरणमेव वारणः तम् मनोबुद्धिचित्तरूपं गजं यः शिवालाने शिवलिङ्गरूपगजबन्धनस्तम्भे बध्नीयात् बन्धनं कुर्यात् स एव सर्वसिद्धिमान् अपि च धीरः इति कथ्यते।

अहङ्कारमद - अन्तःकरणवारण - शिवालान - इत्यत्र रूपकम्।

**इन्द्रियाणां समस्तानां मनः प्रथममुच्यते।**
**वशीकृते शिवे तस्मिन् किमन्यैस्तद्वशानुगैः।।४२।।**

समस्तानाम् इन्द्रियाणां दशानामपि मध्ये मनः एव प्रथमम् प्रधानमिन्द्रियम् इत्युच्यते, तस्मिन् मनसि शिवे वशीकृते सति तद्वशानुगैः तस्य मनसः वशमनुगच्छद्भिः अन्यैः इन्द्रियैः किम् प्रयोजनम्? न किमपि।

**इन्द्रियाणां वशीकारो निवृत्तिरिति गीयते।**
**लक्षीकृते शिवे तेषां कुतः संसारगाहनम्?।।४३।।**

इन्द्रियाणां सर्वेषामपि वशीकारः वशीकरणमेव निवृत्तिः इति गीयते, तेषाम् इन्द्रियाणां प्रवृत्तिः शिवे लक्षीकृते केन्द्रीकृते सति संसारगाहनं संसारे गाहनं संसारसागरे निमज्जनं कुतः? कुत्रापि न स्यात्।

**संसारविषकान्तारसमुच्छेदकुठारिका ।**
**उपशान्तिर्भवेत्पुंसामिन्द्रियाणां वशीकृतौ।।४४।।**

पुंसां मनुष्याणां इन्द्रियाणां दशानामपि इन्द्रियाणां प्रवृत्तौ वशीकृतौ सत्यां संसारविषयकान्तारसमुच्छेदकुठारिका-संसारः एव विषकान्तारं तस्य समुच्छेदे कुठारिका इव वर्तमाना संसाररूपविषवृक्षपूर्णारण्यस्य समूलोच्छेदने कुठारिका परशुरिव वर्तमाना उपशान्तिः विषयनिरपेक्षरूपमानसी शान्तिः भवेत्।

संसारविषकान्तार-इत्यत्र रूपकम्, कुठारिका इव कुठारिका इति उपमा। इन्द्रियाणामुपशान्तिरेव मानसिकी शिवभावनारूपा शान्तिरिति रूपकध्वनिः।

**इन्द्रियैरेव जायन्ते पापानि सुकृतानि च।**
**तेषां समर्पणादीशे कुतः कर्मनिबन्धनम्?।।**

पापानि सुकृतानि च इन्द्रियैरेव जायन्ते, इत्यतः तेषां सर्वेषाम् ईशे परमेश्वरे समर्पणात् कुतः कर्मनिबन्धनं स्यात्? न कस्मादपि कर्मनिबन्धनं स्यात्।

**प्रकाशमाने चिद्वह्नौ बहिरन्तर्जगन्मये।**
**समर्प्य विषयान् सर्वान् मुक्तवज्जायते जनः।।४६।।**

बहिः अन्तश्च प्रकाशमाने द्योतमाने जगन्मये जगत्स्वरूपके चिद्वह्नौ चिदग्निरूपे शिवलिङ्गे सर्वान् विषयान् समर्प्य जनः मुक्तवत् जीवन्मुक्तवत् जायते।

चिद्वह्नौ – इत्यत्र रूपकम्, विषयान् समर्प्य इत्यनेन होमद्रव्यानि अध्यवसानात् प्रतीयन्ते इति रूपकम्।

**चित्तद्रव्यं समादाय जगज्जातं महाहविः।**
**चिद्वह्नौ जुह्वतामन्तः कुतः संसारविप्लवः?।।४७।।**

चित्तद्रव्यं चित्तमेव द्रव्यं, जगज्जातं जगतां जातमेव महाहविः एतत् द्वयमपि समादाय चिद्वह्नौ अन्तः हृदयकमले ज्वलति चिद्वह्नौ चिदग्निरूपे शिवलिङ्गे जुह्वतां होमकार्यं सम्पादयतां शिवयोगिनां संसारविप्लवः संसारस्य विप्लवः बन्धः कुतः? कुत्रापि नैव सम्भवति।

चित्तद्रव्यम् - जगज्जातम् - महाहविः चिद्वह्नौ इत्यत्र रूपकम्।

यथा होमद्रव्यं हविश्च स्वीकृत्य वह्नौ होमकार्यं कुर्वतां पापसंस्पर्शः नश्यति तद्वदेव चित्तद्रव्यं जगद्रूपं हविश्च आदाय चिद्वह्नौ होमकार्यं कुर्वतां शिवयोगिनां संसारबन्धः नश्यति-इति वाक्यार्थोपमालङ्कारः।

**आत्मज्योतिषि चिद्रूपे प्राणवायुनिरोधिते।**
**जुह्वन् समस्तविषयान् तन्मयो भवति ध्रुवम्।।४८।।**

प्राणवायुनिरोधिते प्राणवायुना निरोधिते सुप्रकाशिते चिद्रूपे चित्स्वरूपके आत्मज्योतिषि आत्मज्योतिःस्वरूपे शिवाग्नौ समस्तविषयान् तत्तत्करणजन्यसुखादिविषयान् जुह्वन् सन् होमं कुर्वन् सन् शिवयोगी तन्मयः चिन्मयः चिन्मयशिवस्वरूपकः भवति इति ध्रुवं निश्चितम्।

आत्मज्योतिषि चिद्रूपे इत्यत्र रूपकम्।

**इन्द्रियाणि समस्तानि शरीरं भोगसाधनम्।**
**शिवपूजाङ्गभावेन भावयन् मुक्तिमाप्नुयात्।।४९।।**

समस्तानि इन्द्रियाणि शरीरं च इत्येतत् सर्वं भोगसाधनम्, भोगस्य प्रधानं साधनम् इत्येतत् सर्वमपि शिवपूजाङ्गभावेन शिवपूजायाः पोषकम्

अङ्गम् इति भावयन् सन् सर्वाण्येतानि शिवसमर्पणयोग्यानीति चिन्तयन्, सर्वाण्येतानि शिवसमर्पणयोग्यानीति चिन्तयन् सन् शिवयोगी मुक्तिम् आप्नुयात्, मुक्तो भवति।

*॥इति करणार्पित-स्थलम्॥*

## (२४) भावार्पितस्थलम्

**शिवे निश्चलभावेन भावानां यत्समर्पणम्।**
**भावार्पितमिदं प्रोक्तं शिवसद्भाववेदिभिः॥५०॥**

शिवे विषये निश्चलभावेन निश्चलेन भावेन भावानां चित्तवृत्ति-विशेषाणां यत् समर्पणं तदेव इदं शिवसद्भाववेदिभिः शिवसद्भावशिवज्ञानादिपरिणतैः भावार्पितम् इति प्रोक्तम्।

**चित्तस्य सकलार्थानां मननं यत्तु मानसे।**
**तदर्पणं शिवे साक्षान्मानसो भाव उच्यते॥५१॥**

मानसे मनोविकारविशेषयुक्ते भावे चित्तस्य सकलार्थानां चित्तस्थानां सकलानां च अर्थानां भावरूपपदार्थानां यत् मननम् अनुभवीकरणरूपं चिन्तनं वर्तते शिवे साक्षात् साक्षात्परमेश्वरे तदर्पणं तस्य अर्पणं समर्पणं तावत् मानसः भावः इत्युच्यते।

**भाव एव हि जन्तूनां कारणं बन्धमोक्षयोः।**
**भावशुद्धौ भवेन्मुक्तिर्विपरीते तु संसृतिः॥५२॥**

जन्तूनां मनुष्याणां बन्धमोक्षयोः संसारबन्धनस्य संसारमोक्षस्य च भाव एव कारणं हि! तस्मात् भावशुद्धौ सत्यां मुक्तिः भवेत् तद्विपरीते तु भावस्य अशुद्धौ सत्यां संसृतिः संसारस्य प्राप्तिरेव।

**भावस्य शुद्धिराख्याता शिवोऽहमिति योजना।**
**विपरीतसमायोगे कुतो दुःखनिवर्तनम्?॥५३॥**

शिवः अहम् इति योजना भावस्य शुद्धिः इत्याख्याता, यदि विपरीतसमायोगे विपरीतस्य समायोगे विरुद्ध-भावसम्बन्धे सति कुतः दुःखनिवर्तम्? न कुत्रापि दुःखस्य विनाशः।

**भोक्ता भोज्यं भोजयिता सर्वमेतच्चराचरम्।**
**भावयन् शिवरूपेण शिवो भवति वस्तुतः।।५४।।**

भोक्ता जीवः, भोज्यं पदार्थादिकम्, भोजयिता प्रेरकः, चराचरम् एतत् सर्वं जगत् इत्येतत् सर्वं शिवरूपेण शिवाभिन्नत्वेन भावयन् वस्तुतः सत्यमेव शिवः एव भवति।

**मिथ्येति भावयन् विश्वं विश्वातीतं शिवं स्मरन्।**
**सत्तानन्दचिदाकारं कथं बद्धुमिहार्हति?।।५५।।**

विश्वं मिथ्या इति भावयन्, अपि च सत्तानन्दचिदाकारं सच्चिदानन्दात्मकम् विश्वातीतं च विश्वमतीत्य वर्तमानं शिवं मनसा स्मरन् सन् जनः बद्धुं मलमायादिरूपैः पाशैः बन्धनं प्राप्तुम् इह अस्मिन् जगति कथं वा अर्हति? नैव अर्हति।

**सर्वं कर्मार्चनं शम्भोर्वचनं तस्य कीर्तनम्।**
**इति भावयतो नित्यं कथं स्यात्कर्मबन्धनम्?।।५६।।**

सर्वम् अपि कर्म यत् यत् नित्यं क्रियमाणं भवति, तत् तत् सर्वमपि कर्म शम्भोः अर्चनम्, शम्भोः यद्वचनं तत्तत् वचनं तस्य शिवस्य कीर्तनम्, इति नित्यं भावयतः तस्य कर्मबन्धनं कथं वा स्यात्? न केनापि प्रकारेण स्यात्।

**सर्वेन्द्रियगतं सौख्यं दुःखं वा कर्मसम्भवम्।**
**शिवार्थं भावयन् योगी जीवन्मुक्तो भविष्यति।।५७।।**

सर्वेन्द्रियगतं सर्वेभ्यः इन्द्रियेभ्यश्च गतं प्राप्तं सौख्यं वा, कर्मसम्भवम् कर्मणः फलत्वेन सम्भूतं दुःखं वा इत्येतद् द्वयमपि शिवार्थम् एव इति भावयन् योगी जीवन्मुक्तः भविष्यति।

*।।इति भावार्पितस्थलम्।।*

## (२५) शिष्यस्थलम्

**शासनीयो भवेद्यस्तु परकायेन सर्वदा।**
**तत्प्रसादात्तु मोक्षार्थी स शिष्य इति कीर्तितः।।५८।।**

परकायेन भावार्पित-सम्पन्नेन शिवयोगिना यः तु सर्वदा शासनीयः

शासितुं योग्यः भवेत् तत्प्रसादात् तस्य भावार्पितसम्पन्नस्य प्रसादात् तु अनुग्रहादिव तावत् मोक्षार्थी मोक्षमर्थयते परापरमोक्षापेक्षी यः स एव शिष्यः इति कीर्तितः।

**भावो यस्य स्थिरो नित्यं मनोवाक्कायकर्मभिः।**
**गुरौ निजे गुणोदारे स शिष्य इति गीयते।।५९।।**

यस्य शिष्यस्य भावः मनोव्यापारः गुणोदारे गुणैः उदारे उदारगुणयुक्ते निजे गुरौ स्वगुरौ विषये मनोवाक्कायकर्मभिः मनसः कर्मभिः वाचः कर्मभिः कायस्य कर्मभिः यथाक्रमं ध्यान-स्तोत्रपूजादिरूपैः नित्यं सदाकाले स्थिरः भवति सः शिष्यः इति गीयते।

**शान्तो दान्तस्तपश्शीलः सत्यवाक् समदर्शनः।**
**गुरौ शिवे समानस्थः स शिष्याणामिहोत्तमः।।६०।।**

शान्तः अन्तरिन्द्रियनिग्रहवान्, दान्तः बाह्येन्द्रियनिग्रहवान्, तपश्शीलः तपसि शीलः अष्टाङ्गयोगनिरतः, सत्यवाक्, समदर्शनः लोष्टकाष्ठकनकादिषु समानबुद्धिमान्, गुरौ शिवे च विषये समानस्थः समानभक्तिभाववान् यः वर्तते स एव इह शिष्याणाम् उत्तमः शिष्येषु श्रेष्ठः।

**गुरुमेव शिवं पश्येच्छिवमेव गुरुं तथा।**
**नैतयोरन्तरं किञ्चिद्विजानीयाद्विचक्षणः।।६१।।**

विचक्षणः परमज्ञानी शिष्यः गुरुम् एव शिवमिति पश्येत्, शिवमेव गुरुमिति तथा पश्येत्, किन्तु तयोर्मध्ये किञ्चिदपि अन्तरं नैव विजानीयात्।

**शिवाचारे शिवध्याने शिवज्ञाने च निर्मले।**
**गुरोरादेशमात्रेण परां निष्ठामवाप्नुयात्।।६२।।**

शिष्यः गुरोः आदेशमात्रेण शिवाचारे शिवविषयकाचारे शिवध्याने शिवविषयकध्याने निर्मले परिशुद्धे च शिवज्ञाने शिवविषयकज्ञाने च पराम् उत्कृष्टां निष्ठाम् विश्वासम् अवाप्नुयात् प्राप्नुयात्।

**ब्रह्माण्डबुद्बुदोद्भूतं मायासिन्धुं महत्तरम्।**
**गुरोः कवलयत्याशु कटाक्षबडवानलः।।६३।।**

ब्रह्माण्डबुद्बुदोद्भूतं ब्रह्माण्डमेव बुद्बुदाः तैः उद्भूतम् उत्पन्नं महत्तरं महान्तं मायासिन्धुं माया एव सिन्धुः तम् मायासमुद्रं गुरोः कटाक्षवडवानलः कटाक्षः एव वडवानलः आशु शीघ्रमेव कवलयति भक्षयति।

अत्र रूपकालङ्कारः।

**गुरोः कटाक्षवेधेन शिवो भवति मानवः।**
**रसवेधाद्यथा लोहो हेमतां प्रतिपद्यते।।६४।।**

रसवेधात् रसस्य पारदस्य वेधात् समावेशात् यथा लोहः हेमतां सुवर्णत्वं प्रतिपद्यते तथैव गुरोः कटाक्षवेधेन कटाक्षस्य वेधेन अन्तः सम्पर्केण मानवः शिवः भवति। अत्र वाक्यार्थोपमालङ्कारः।

**न लङ्घयेद् गुरोराज्ञां ज्ञानमेव प्रकाशयन्।**
**शिवासक्तेन मनसा सर्वसिद्धिमवाप्नुयात्।।६५।।**

शिष्यः ज्ञानमेव शिवाद्वैतज्ञानमेव प्रकाशयन् सन् गुरोः आज्ञां न लङ्घयेत् न अतिवर्तयेत्, अपि च शिवासक्तेन मनसा केवलं शिवे एव निष्ठेन मनसा सर्वसिद्धिम् अवाप्नुयात्।

**शिवादन्यज्जगन्मिथ्या शिवः संवित्स्वरूपकः।**
**शिवस्त्वमिति निर्दिष्टो गुरुणा मुक्त एव सः।।६६।।**

शिवात् अन्यत् यत् जगत् तत् मिथ्या, परं शिवस्तु संवित्स्वरूपकः ज्ञानानन्दस्वरूपकः, अतएव शिष्यः गुरुणा त्वं शिवः ज्ञानानन्दस्वरूपकः, इति निर्दिष्टः उपदिष्टः सन् सः शिष्यः मुक्तः एव।

**गुरोर्लब्ध्वा महाज्ञानं संसारामयभेषजम्।**
**मोदते यः सुखी शान्तः स जीवन्मुक्त एव हि।।६७।।**

यः शिष्यः संसारामयभेषजं संसारः एव आमयः तस्य भेषजमिव भेषजम् संसाररोगनिवर्तकौषधम् इव वर्तमानं महाज्ञानं शिवाद्वैतसम्पादकं महाशिवज्ञानम् गुरोः सकाशात् लब्ध्वा सुखी शिवसुखी सन् मोदते शिवानन्दानन्दवान् भवति सः शान्तः रागद्वेषादिरहितः स एव जीवन्मुक्तः हि।

संसारामय– इत्यत्र रूपकम्, भेषजम् - अत्र उपमा।

।।इति शिष्यस्थलम्।

## (२६) शुश्रूषुस्थलम्

**बोध्यमानः स गुरुणा परकायेन सर्वदा।**
**तच्छुश्रूषारतः शिष्यः शुश्रूषुरिति कीर्त्यते।।६८।।**

परकायेन गुरुणा परब्रह्मकायवता गुरुणा बोध्यमानः उपदिष्टः सः शिष्यः सर्वदा तच्छुश्रूषारतः तस्य गुरोः शुश्रूषायां रतः आसक्तः सन् शुश्रूषुः इति कीर्त्यते।

**किं सत्यं किं न वा सत्यं क आत्मा कः परः शिवः?।**
**इति श्रवणसंसक्तो गुरोः शिष्यो विशिष्यते।।६९।।**

सत्यं वस्तु किम्? किं वस्तु न सत्यम्? आत्मा कः? परः शिवः कः? इति श्रवणसक्तः श्रवणे सक्तः आसक्तः शिष्यः गुरोः सकाशात् विशिष्यते विशिष्टो वर्तते।

**श्रुत्वा श्रुत्वा गुरोर्वाक्यं शिवसाक्षात्क्रियावहम्।**
**उपशाम्यति यः स्वान्ते स मुक्तिपदमाप्नुयात्।।७०।।**

यः शिष्यः शिवसाक्षात्क्रियावहं शिवस्य साक्षात्क्रियायाः आवहं शिवसाक्षात्कारसम्पादकं गुरोः वाक्यम् उपदेशं श्रुत्वा श्रुत्वा पौनःपुन्येन आकर्ण्य स्वान्ते स्वचित्ते उपशाम्यति उपशान्तित्वम् आप्नोति सः शिष्यः मुक्तिपदं मुक्तेः आस्पदं आप्नुयात् प्राप्नुयात्।

**न बुद्ध्यति गुरोर्वाक्यं विना शिष्यस्य मानसम्।**
**तेजो विना सहस्रांशोः कथं स्फुरति पङ्कजम्?।।७१।।**

गुरोः वाक्यं विना उपदेशं विना शिष्यस्य मानसं न बुद्ध्यति न विकसति, यतः सहस्रांशोः तेजः विना पङ्कजं कमलं कथं स्फुरति? कथं विकसति? नैव विकसति।

यथा सूर्यस्य तेजःसम्पर्कं विना कमलं न विकसति तथैव गुरोः वाक्यं विना शिष्यस्य मनः न विकसति - इति वैधर्म्यमूलः उपमाध्वनिः। यथा सूर्यस्य तेजःसम्पर्केण कमलं विकसति तथैव गुरोः वाक्यश्रवणात् शिष्यस्य

मानसं बुद्ध्यति - इति साधर्म्यमूलः पमाध्वनिः। काव्यलिङ्गालंकारश्च।

**स्फुरति** – स्फुर -स्फुरणे - लट्।

**बुध्यति** - बुध - अवगमने, लट्।

**सूर्यस्योदयमात्रेण सूर्यकान्तः प्रकाशते।**
**गुरोरालोकमात्रेण शिष्यो बोधेन भासते।।७२।।**

सूर्यस्य उदयमात्रेण सूर्यकान्तः सूर्यकान्तमणिः प्रकाशते, गुरोः आलोकमात्रेण शिष्यः बोधेन ज्ञानबोधनेन भासते प्रकाशते।

पूर्वार्धेन उत्तरार्धस्य समर्थनात् काव्यलिङ्गालङ्कारः।

अथवा अत्र पूर्वार्धः उपमानवाक्यम्, उत्तरार्धः उपमेय-वाक्यम्। उभयोः बिम्बप्रतिबिम्बभावात् दीपकालंकारः। 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति लक्षणम्। यथा सूर्यस्य उदयात् चन्द्रकान्तः प्रकाशते तथैव गुरोः आलोकमात्रेण शिष्यः भासते - इति उपमाध्वनिः।

**अद्वैत - परमानन्दप्रबोधैकप्रकाशकम्।**
**उपायं श्रृणुयाच्छिष्यः सद्गुरुं प्राप्य साञ्जलिः।।७३।।**

शिष्यः साञ्जलिः अञ्जलिबद्धः सन् सद्गुरुं प्राप्य अद्वैतपरमानन्दप्रबोधैकप्रकाशकम् अद्वैत - परमानन्दस्य प्रबोधे प्रकाशने प्रधानप्रकाशकम् उपायं श्रृणुयात्।

**श्रृणुयात्** – श्रु - श्रवणे, विधिलिङ्।

**किं तत्त्वं परमं ज्ञेयम्? केन सर्वे प्रतिष्ठिताः?।**
**कस्य साक्षात्क्रिया मुक्तिः? कथयेति समासतः।।७४।।**

हे गुरो! ज्ञेयं ज्ञातुं योग्यं परमं तत्त्वं श्रेष्ठतमं किम्? केन व्यक्ति-विशेषेण सर्वे चराचराः प्रतिष्ठिताः संस्थिताः सन्ति? कस्य सकाशात् मुक्तिः साक्षात्क्रिया साक्षात् कर्तव्या? इति समासतः संक्षेपेण कथय।

**इति प्रश्ने कृते पूर्वं शिष्येण नियतात्मना।**
**ब्रूयात् तत्त्वं गुरुस्तस्मै येन स्यात् संसृतेर्लयः।।७५।।**

नियतात्मना एकाग्रचित्तेन शिष्येण पूर्वम् इति प्रश्ने कृते सति तदा गुरुः तस्मै शिष्याय तत्त्वं तात्त्विकं विचारजातं ब्रूयात् उपदिशेत्, येन तत्त्वबोधनेन संसृतेः भवस्य लयः स्यात् नाशः स्यात्।

**ब्रूयात्** – ब्रूञ् - व्यक्तायां वाचि, विधिलिङ्।

**शिव एव परं तत्त्वं चिदानन्दसदाकृतिः।**
**स यथार्थस्तदन्यस्य जगतो नास्ति नित्यता।।७६।।**

चिदानन्दसदाकृतिः सच्चिदानन्दात्मकः शिवः एव परं तत्त्वम्, सः शिवः यथार्थः सत्यस्वरूपकः नित्यः, तदन्यस्य तस्मात् अन्यस्य विजातीयत्वेन भासमानस्य जगतः प्रपञ्चस्य नित्यता एव नास्ति।

**अयथार्थप्रपञ्चोऽयं प्रतितिष्ठति शङ्करे।**
**सदात्मनि यथा शुक्तौ रजतत्वं व्यवस्थितम्।।७७।।**

अयम् अथयार्थ-प्रपञ्चः अनित्यत्वेन भासमानः अयं प्रपञ्चः, सदात्मनि व्यावहारिक-सत्यत्वेन दृश्यमाने, शुक्तौ रजतत्वं यथा व्यवस्थितं तथा शङ्करे प्रतितिष्ठति। उपमालङ्कारः।

**शिवोऽहमिति भावेन शिवे साक्षात्कृते स्थिरम्।**
**मुक्तो भवति संसारान्मोहग्रन्थेर्विभेदतः।।७८।।**

शिवः अहम् इति भावेन शिवे परमेश्वरे स्थिरं दृढतया साक्षात् कृते प्रत्यक्षीकृते सति, तदा शिष्यः विभेदतः विशिष्टभेदाश्रितात् संसारात् मोहग्रन्थेः सकाशात् संसाररूपात् अज्ञानग्रन्थेः सकाशात् मुक्तः भवति।

**शिवं भावय चात्मानं शिवादन्यं न चिन्तय।**
**एवं स्थिरे शिवाद्वैते जीवन्मुक्तो भविष्यसि।।७९।।**

भोः शिष्य! त्वं च आत्मानं स्वात्मानं शिवं शिवाभिन्नं भावय, तथैव शिवात् अन्यं न चिन्तय, इत्येवं त्वयि शिवाद्वैते स्थिरे सति, त्वं जीवन्मुक्तः एव भविष्यसि।

**एवं प्रचोदितः शिष्यो गुरुणा गुणशालिना।**
**शिवमेव जगत्पश्यन् जीवन्मुक्तोऽभिजायते।।८०।।**

एवमनेन प्रकारेण गुणशालिना ज्ञानवैराग्यादिगुणभरितेन गुरुणा प्रचोदितः शिवाद्वैतभावनायां प्रचोदितः शिष्यः जगत् सर्वं विश्वमपि शिवमेव पश्यन् जीवनन्मुक्तः अभिजायते सम्पद्यते।

॥इति शुश्रूषुस्थलम्॥

## (२७) सेव्यस्थलम्

**गुरुवाक्यामृतास्वादात् प्राप्त-बोधमहाफलः।**
**शुश्रूषुरेव सर्वेषां सेव्यत्वात् सेव्य उच्यते॥८१॥**

गुरुवाक्यामृतास्वादात् गुरोः वाक्यमेव अमृतम् तस्य आस्वादात् गुरूपदेशामृतपानात् प्राप्तबोध-महाफलः प्राप्तं बोधरूपं महाफलं येन सः प्राप्तसफलोपदेशः सन् शुश्रुषुः एव सर्वेषामपि सेव्यत्वात् स्वयं सेव्यः सेवितुं योग्यः सेव्यः इत्युच्यते।

पूर्वार्धे रूपकालङ्कारः।

**गुरूपदिष्टे विज्ञाने चेतसि स्थिरतां गते।**
**साक्षात्कृतशिवः शिष्यो गुरुवत् पूज्यते सदा॥८२॥**

गुरूपदिष्टे गुरुणा उपदिष्टे विज्ञाने विशिष्टज्ञाने चेतसि शिष्यस्य चित्ते स्थिरतां गते सति, शिष्यः साक्षात्कृतशिवः प्रत्यक्षीकृत-शिवः सन् सदा गुरुवत् पूज्यते।

**ज्ञानादाधिक्य - सम्पत्तिर्गुरोर्यस्मादुपस्थिता।**
**तस्माज्ज्ञानागमाच्छिष्यो गुरुवत् पूज्यतां व्रजेत्॥८३॥**

गुरोः गुरोः अपेक्षया ज्ञानाधिक्यसम्पत्तिः ज्ञानाधिक्यस्य सम्पत्तिः वैभवं यस्मात् उपदेशात् कारणात् उपस्थिता शिष्येण सम्प्राप्ता, तस्मात् ज्ञानागमात् तस्मात् ज्ञानस्य अधिकतया प्राप्तत्वात् कारणात् शिष्यः गुरुवत् पूज्यतां व्रजेत् प्राप्नुयात्।

**व्रजेत्** — व्रज - गतौ, विधिलिङ्।

**शिवोऽहमिति भावस्य नैरन्तर्याद् विशेषतः।**
**शिवभावे समुत्पन्ने शिववत् पूज्य एव सः॥८४॥**

शिवोऽहम् इति भावस्य नैरन्तर्यात् निरन्तरत्वात् विशेषतः विशेषेण अभ्यासात् शिवभावे समुत्पन्ने सति शिष्यः सः शिववत् पूज्यः एव भवति।

**विषयासक्तचित्तोऽपि विषयासङ्गवर्जितः।**
**शिवभावयुतो योगी सेव्यः शिव इवापरः।।८५।।**

योगी शुश्रूषुः शिवयोगसम्पन्नः शिष्यः विषयासक्तचित्तः सन्नपि विषयेषु आसक्तं चित्तं यस्य सः गन्धादिविषयेषु आसक्तचित्तः सन्नपि विषयासङ्गवर्जितः विषयाणामासङ्गेन वर्जितः इव,विषयाणां संसर्गरहितः सन् शिवभावयुतः शिवस्य भावेन युक्तश्च सन् अपरः शिवः इव सेव्यः भवति।

**मुक्तः संशयपाशतः स्थिरमना बोधे च मुक्तिप्रदे**
**मोहं देहभृतां दृशा विघटयन् मूलं महासंसृतेः।**
**सत्तानन्दचिदात्मके निरुपमे शैवे परस्मिन् पदे**
**लीनात्मा क्षयितप्रपञ्च-विभवो योगी जनैः सेव्यते।।८६।।**

संशयपाशतः संशयः एव पाशः तस्मात् 'अहं शिवो वा न वा?' इत्यात्मकसन्देहरूपपाशात्, मुक्तः निर्मुक्तः, मुक्तिप्रदे मुक्तिप्रदायके बोधे च श्रीगुरुपदिष्टे परिज्ञानविषये स्थिरमनाः दृढतरमनस्कः, महासंसृतेः निवारणीय-घोरसंसारस्य मूलं प्रधानकारणीभूतं देहभृतां शरीरिणां मोहं व्यामोहं दृशा कृपाकटाक्ष-प्रसरणेन विघटयन् दूरीकुर्वन् सन्, सत्तानन्दचिदात्मके सच्चिदानन्दात्मके निरुपमे उपमारहिते शैवे शिवसम्बन्धिनि परस्मिन् पदे श्रेष्ठतमे शिवपदे शिव-स्थाने लीनात्मा लयंगतस्वरूपवान्, क्षयितप्रपञ्चविभवः क्षयितः प्रपञ्चस्य विभवः येन सः विनाशितप्रपञ्चविभवश्च सन् योगी शिवयोगी जनैः सेव्यते पूज्यते।

शार्दूलविक्रीडितं छन्दः। लक्षणं तु–'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति।

*।।इति सेव्यस्थलम्।।*

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ प्रसादिस्थलाश्रितनवलिङ्गप्रसंगो नाम*

*।।सप्तदशः परिच्छेदः।।*

●

# ।।अष्टादशः परिच्छेदः।।

## ।।प्राणलिङ्गिस्थलम्।।

### ।।अगस्त्य उवाच।।

प्रसादिस्थलसम्बद्धाः स्थलभेदाः प्रकीर्तिताः।
प्राणलिङ्गिस्थलारूढान् स्थलभेदान् वदस्व मे।।१।।

एतावत्पर्यन्तं प्रसादिस्थलसम्बद्धाः प्रसादिस्थलस्य सम्बन्धिनः स्थलभेदाः प्रकीर्तिताः कथिताः। इदानीं प्राणलिङ्गिस्थलारूढान् प्राणलिङ्गिस्थलसम्बन्धान् स्थलभेदान् मे वदस्व।

### ।।श्रीरेणुक उवाच।।

स्थलानां नवकं प्रोक्तं प्राणलिङ्गिस्थलाश्रितम्।
आदावात्मस्थलं प्रोक्तमन्तरात्मस्थलं ततः।।२।।

परमात्मस्थलं पश्चान्निर्देहागमसंज्ञकम्।
निर्भावागमसंज्ञं च ततो नष्टागमस्थलम्।।३।।

आदिप्रसादनामाथ ततोऽप्यन्त्यप्रसादकम्।
सेव्यप्रसादकं चाथ शृणु तेषां च लक्षणम्।।४।।

प्राणलिङ्गिस्थलाश्रितं स्थलानां नवकमेवम् प्रोक्तम्आत्मस्थलम्, परमात्मस्थलम्, निर्देहागमस्थलम्, निर्भावागमस्थलम्, नष्टागमस्थलम्, आदिप्रसादिस्थलम्, अन्त्यप्रसादिस्थलम्, सेव्यप्रसादिस्थलञ्च इति, तेषां लक्षणं यथाक्रमम् उच्यते, शृणु।

### (२८) आत्मस्थलम्

जीवभावं परित्यज्य यदा तत्त्वं विभाव्यते।
गुरोश्च बोधयोगेन तदात्मायं प्रकीर्तितः।।५।।

अयं सेव्यः, गुरोश्च बोधयोगेन उपदेशसम्बन्धेन जीवभावं परित्यज्य यदा तस्मिन् सेव्ये तत्त्वं शिव एवाहं इति परतत्त्वं विभाव्यते अनुभव-विषयीक्रियते तदा अयमेव आत्मा इति प्रकीर्तितः।

**बालाग्रशतभागेन सदृशो हृदयस्थितः।**
**अश्नन् कर्मफलं सर्वमात्मा स्फुरति दीपवत्।।६।।**

बालाग्रशतभागेन बालाग्रस्य शते एकभागेन सदृशः सन् हृदयस्थितः हृदये वर्तमानः सूक्ष्मरूपेण वर्तयन् स्वकीयं सर्वं कर्मफलम् अश्नन् अनुभवन् आत्मा दीपवत् स्फुरति प्रकाशते।

**आत्मापि सर्वभूतानामन्तः करणमाश्रितः।**
**अणुभूतो मलासङ्गादादिकर्म - नियन्त्रितः।।७।।**

सर्वभूतानां सर्वप्राणिनाम् आत्मा सन्नपि मलासङ्गात् मलानामासङ्गात् सम्पर्कात् अणुभूतः परमाणुवत् अतिसूक्ष्मः, आदिकर्मनियन्त्रितः स्वकीयेन आदिकर्मणा नियन्त्रितश्च सन् अन्तःकरणम् अहङ्कारनामकम् अन्तःकरणं आश्रितः वर्तते।

**जपायोगाद्यथा रागः स्फटिकस्य मणेर्भवेत्।**
**तथाहङ्कारसम्बन्धादात्मनो देहमानिता।।८।।**

स्फटिकस्य मणेः जपायोगात् जपाकुसुमस्य सम्पर्कात् यथा रागः रक्तवर्णता भवेत् तथैव आत्मनः अहङ्कारसम्बन्धात् अहङ्कारनामकान्तःकरण-सम्पर्कात् देहमानिता देहस्य अभिमानिता वर्तते।

अत्र वाक्यार्थोपमालङ्कारः।

**अशरीरोऽपि सर्वत्र व्यापकोऽपि निरञ्जनः।**
**आत्मा मायाशरीरस्थः परिभ्रमति संस्कृतौ।।९।।**

अशरीरः अपि शरीररहितः सन्नपि सर्वत्र व्यापकः अपि निरञ्जनः निष्कल्मषः, मायाशरीरस्थः अधोमायाकल्पित-शरीरवान् सन् आत्मा संसृतौ संसारे परिभ्रमति।

**आत्मस्वरूपविज्ञानं देहेन्द्रियविभागतः।**
**अखण्डब्रह्मरूपेण तदात्मप्राप्तिरुच्यते।।१०।।**

देहेन्द्रियविभागतः देहः इन्द्रियाणि इत्यात्मकविभागात् अखण्डब्रह्मरूपेण अखण्डं यत् ब्रह्म तद्रूपेण अपरिच्छिन्नब्रह्मरूपेण आत्मस्वरूप-विज्ञानं आत्मनः स्वरूपस्य विज्ञानम् एव यदा सम्भवति तदा आत्मप्राप्तिः आत्मनः प्राप्तिः इति उच्यते।

**न चास्ति देहसम्बन्धो निर्देहस्य स्वभावतः।**
**अज्ञानकर्मयोगेन देही भवति भुक्तये।।११।।**

स्वभावतः स्वाभाविकतया निर्देहस्य देहसम्बन्धरहितस्य आत्मनः देहसम्बन्धः न च अस्ति नैवास्ति, किन्तु भुक्तये कर्मफलस्य उपभोगाय अज्ञानकर्मयोगेन स्वातन्त्र्य - परिकल्पिताणवादिमलसम्बन्धेन देही देहवान् भवति।

**नासौ देवो न गन्धर्वो न यक्षो नैव राक्षसः।**
**न मनुष्यो न तिर्यक् च न च स्थावरविग्रहः।।**
**तत्तच्छरीरयोगेन तत्तन्नाम्ना विराजते।।१२।।**

असौ आत्मा न देवः, न गन्धर्वः, न यक्षः न चापि राक्षसः, नैव मनुष्यः, न तिर्यक्, अपि च न च स्थावरविग्रहः शिलादिरूपस्थावरशरीर-वानपि न, किन्तु तत्तत्-शरीरयोगेन तस्य तस्य शरीरस्य योगेन कर्मानुगुणशरीर-सम्बन्धेनैव तत्तन्नाम्ना तेन तेन नाम्ना विराजते।

**नानाकर्मविपाकाश्च नानायोनिसमाश्रिताः।**
**नानायोगसमापन्ना नानाबुद्धिविचेष्टिताः।।१३।।**

**नानामार्गसमारूढा नाना – सङ्कल्पकारिणः।**
**अस्वतन्त्राश्च किञ्चिज्ज्ञाः किञ्चित्कर्तृत्व–हेतवः।।**
**लीलाभाजनतां प्राप्ताः शिवस्य परमात्मनः।।१४।।**

आत्मानः तावत् नानाकर्मविपाकाः स्वैः आचरितानां नानाविधप्राचीनकर्मणां विपाकरूपाः, नाना - योनि - समाश्रिताः देव-तिर्यङ्मनुष्यादिनानायोनिषु समुत्पन्नाः, नानायोगसमापन्नाः नानाविधस्वर्गादिभोगोपाय - समन्विताः, नानाबुद्धिविचेष्टिताः नानाबुद्धिभिः विचेष्टिताः आक्रान्ताश्च नानामार्ग-समारूढाः, नानाविध - शैववैष्णवादिमार्ग - प्रविष्टाः, नानासङ्कल्पकारिणः

नानाविध-सङ्कल्प-विकल्पादिकार्यकरणशीलाः, अस्वतन्त्राः शिवाधीनत्वात् किञ्चिज्ज्ञाः अल्पज्ञाः किञ्चित्कर्तृत्वहेतवः किञ्चित्कर्तृत्वस्य हेतवः परमात्मनः शिवस्य लीलाभाजनतां प्राप्ताः लीलायाः पात्रत्वं प्राप्ताः कन्दुकादिवत् क्रीडाभाजनरूपाः वर्तन्ते।

**चोदिताः परमेशेन स्वस्वकर्मानुरूपतः।**
**स्वर्गं वा नरकं वापि प्राणिनो यान्ति कर्मिणः।।१५।।**

स्वस्वकर्मानुरूपतः स्वैः स्वैः आचरितानां कर्मणाम् अनुरूपात् परमेशेन शिवेन चोदिताः प्रचोदिताः प्रेरिताः कर्मिणः निरन्तरकर्मनिरताः प्राणिनः जीविनः आत्मानः स्वस्वकर्मानुसारं स्वर्गं वा यान्ति नरकं वापि यान्ति।

**पुनः कर्मावशेषेण जायन्ते गर्भकोटरात्।**
**जाता मृताः पुनर्जाताः पुनर्मरणभाजिनः।।**
**भ्रमन्ति घोरसंसारे विश्रान्तिकथया विना।।१६।।**

कर्मावशेषेण कर्मणाम् अवशेषेण पुनः जायन्ते गर्भकोटरात् तथा जाताः मृताः भवन्ति तथा मृताः पुनः जाताः पुनः मरणभाजिनः, एवं विश्रान्तिकयथा विना घोरसंसारे भ्रमन्ति। 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्' इति श्रीशङ्कराचार्याः। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति भगवद्गीता।

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते।।१७।।**

तदिदं जीवत्वं मलकल्पितम् आणवादिमलत्रयेण कल्पितम् दुःखसर्वस्वं च केवल-दुःखभूयिष्ठम् सत् वर्तते, किन्तु एतद् गुरोः बोधात् उपदेशात् निरस्यते, अपि च बोधात् ज्ञानशक्तिः प्रकाशते।

*।।इति आत्मस्थलम्।।*

## (२९) अन्तरात्मस्थलम्

**यदा निरस्तं जीवत्वं भवेद् गुर्वनुबोधतः।**
**तदान्तरात्मभावोऽपि निरस्तस्य भवेद् ध्रुवम्।।१८।।**

गुर्वनुबोधतः गुरोः अनुबोधतः उपदेशकारणात् यदा जीवत्वं निरस्तं दूरीकृतं भवति तदा अन्तरात्मभावः अपि तथा निरस्तजीवभावयुक्तस्य ध्रुवमेव भवेत्।

**देहस्थितोऽप्ययं जीवो देहसङ्गविवर्जितः।**
**बोधात् परात्मभावित्वादन्तरात्मेति कीर्तितः।।१९।।**

अयं जीवः देहस्थितः देहे स्थितः सन्नपि परं देहसङ्गविवर्जितः दूरीकृतदेहसम्पर्कवान् सन् बोधात् गुरूपदेशात् परात्मभावित्वात् च स्वयं परमेश्वरस्य परात्मनः शिवभावित्वाच्च अन्तरात्मा इति कीर्तितः।

**आत्मान्तरालवर्तित्वाज्जीवात्मपरमात्मनोः ।**
**योगादुभयधर्माणामन्तरात्मेति कीर्तितः।।२०।।**

जीवात्मपरमात्मनोः जीवात्मनः परमात्मनश्च इत्युभयोः अन्तरालवर्तित्वात् हृदयान्तर्वर्तित्वात् तदा उभयधर्माणां योगात् जीवधर्मस्य शिवधर्मस्य च इत्युभयोः सम्बन्धात् अन्तरात्मा इति कीर्तितः।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते' – इति उपनिषद्वाक्यम्।

**अहङ्कारस्य सम्बन्धान्मनुष्यत्वादि - विभ्रमः।**
**न स्वभाव इति ज्ञानादन्तरात्मेति कथ्यते।।२१।।**

अहङ्कारस्य सम्बन्धादेव मनुष्यत्वादिविभ्रमः अहं मनुष्यः अहं कनिष्ठः अहं ज्येष्ठः इत्यादि-विभ्रमः भवति, किन्तु, अयं विभ्रमस्तु न स्वभावः इति ज्ञानात् ज्ञानप्राप्तेः कारणात् अन्तरात्मा इति कथ्यते।

**यथा पद्मपलाशस्य न सङ्गो वारिणा भवेत्।**
**तथा देहजुषोऽप्यस्य न शरीरेण सङ्गतिः।।२२।।**

पद्मपलाशस्य पद्मपत्रस्य वारिणा जलेन सङ्गः यथा न भवेत् तथा देहजुषः अपि देहं जुषति इति देहजुट्, तस्य शरीरवतः अपि अस्य आत्मनः शरीरेण सङ्गतिः सम्बन्धः न भवति।

उपमालङ्कारः।

**नीडस्थितो यथा पक्षी नीडाद्भिन्नः प्रदृश्यते।**
**देहस्थितस्तथात्मायं देहादन्यः प्रकाश्यते।।२३।।**

नीडस्थितः पक्षी यथा नीडात् भिन्नः सन् प्रदृश्यते तथैव अयमात्मा देहस्थितः देहे स्थितः सन्नपि देहात् अन्यः एव प्रकाश्यते द्योत्यते। उपमालङ्कारः।

**आच्छाद्यते यथा चन्द्रो मेघैरासङ्गवर्जितैः।**
**तथात्मा देहसङ्घातैरसङ्गपरिवेष्टितः।।२४।।**

चन्द्रः आसङ्गवर्जितैः सम्पर्करहितैः मेघैः यथा आच्छाद्यते तथैव आत्मापि देहसङ्घातैः देहसमूहैः असङ्गपरिवेष्टितः नितरां सङ्गरहितः वर्तते। उपमालङ्कारः।

**निर्ममो निरहङ्कारो निरस्तोपाधिविक्लवः।**
**देहस्थोऽपि सदा ह्यात्मा शिवं पश्यति योगतः।।२५।।**

अयम् आत्मा निर्ममः ममकाररहितः, निरहङ्कारः अहङ्काररहितः, निरस्तोपाधिविक्लवः शरीरेन्द्रियादि-बाधारहितः सन्नपि अपि च देहस्थितः सन्नपि सदा योगतः शिवयोगसाधन द्वारा शिवं पश्यति।

**भोक्तृभोज्यपरित्यागात् प्रेरकस्य प्रसादतः।**
**भोक्तृताभावगलितः स्फुरत्यात्मा स्वभावतः।।२६।।**

भोक्तृभोज्यभावस्य परित्यागात् प्रेरकस्य शिवस्य प्रसादतः अनुग्रहात् च भोक्तृताभावगलितः भोक्तृताभावेन गलितः दूरीकृतः सन् आत्मा स्वभावतः एव स्फुरति प्रकाशते।

**सर्वेषां प्रेरकत्वेन शम्भुरन्तः स्थितः सदा।**
**तत्परिज्ञान-योगेन योगी नन्दति मुक्तवत्।।२७।।**

सर्वेषामपि प्राणिनां प्रेरकत्वेन शम्भुः सदा अन्तः हृदये स्थितः सन् प्रकाशते, तत्परिज्ञानयोगेन तस्य शिवस्य परिज्ञानस्य योगेन सम्बन्धेन योगी शिवयोगसम्पन्नः जीवात्मा मुक्तवत् नन्दति आनन्दमनुभवति।

*।।इति अन्तरात्मस्थलम्।।*

## (२०) परमात्मस्थलम्

**निर्धूते तत्प्रबोधेन मले संसारकारणे।**
**सामरस्यात् परात्मस्थात् परमात्मायमुच्यते।।२८।।**

संसारकारणे संसारस्य कारणीभूते मले मलत्रये अथवा अज्ञाने तत्प्रबोधेन तस्मिन् वर्तमानेन शिवाद्वैतज्ञानेन निर्धूते सति विनष्टे सति तदा परात्मस्थात् परमेश्वरे समरसीभावेन वर्तमानात् सामरस्यात् समरसभावात् परमात्मा इति अयम् आत्मा उच्यते।

**सर्वेषामात्मभेदानामुत्कृष्टत्वात् स्वतेजसा।**
**परमात्मा शिवः प्रोक्तः सर्वगोऽपि प्रकाशवान्।।२९।।**

स्वतेजसा स्वस्य उज्ज्वलेन प्रकाशेन सर्वेषामपि आत्मभेदानाम् उत्कृष्टत्वात् सर्वगः सन्नपि सर्वव्यापकोऽपि प्रकाशवान् सन् शिवः एव परमात्मा इति प्रोक्तः।

**ब्रह्माण्डबुद्बुदस्तोमा यस्य मायामहोदधौ।**
**उन्मज्जन्ति निमज्जन्ति परमात्मा स उच्यते।।३०।।**

ब्रह्माण्डबुद्बुदस्तोमाः ब्रह्माण्डानि एव बुद्बुदाः तेषां स्तोमाः समूहाः यस्य परमात्मनः मायामहोदधौ माया एव महोदधिः तस्मिन् मायारूपमहासागरे उन्मज्जन्ति निमज्जन्ति च सः परमात्मा इति उच्यते। अत्र रूपकालङ्कारः।

**यस्मिन् ज्योतिर्गणाः सर्वे स्फुलिङ्ग इव पावकात्।**
**उत्पत्य विलयं यान्ति तद्रूपं परमात्मनः।।३१।।**

यस्मिन् परमात्मनि सर्वे ज्योतिर्गणाः ज्योतिषां गणाः ग्रहनक्षत्रादयः, पावकात् अग्नेः सकाशात् स्फुलिङ्गाः इव अग्निकणाः इव उत्पत्य बहिरागत्य पुनः विलयं ऐक्यं यान्ति तथैव ज्योतिर्गणाः अपि उत्पत्य शिवस्य सकाशात् बहिः आगत्य पुनश्च तस्मिन् एव विलयं यान्ति तदेव परमात्मनः रूपम्। वाक्यार्थोपमालङ्कारः।

**यस्मिन् समस्त-वस्तूनि कल्लोला इव वारिधौ।**
**सम्भूय लयमायान्ति तद्रूपं परमात्मनः।।३२।।**

यस्मिन् परमात्मनि समस्तवस्तूनि समस्तानि वस्तूनि वारिधौ समुद्रे कल्लोलाः इव सम्भूय पुनश्च लयम् आयान्ति तदेव परमात्मनः रूपम्।

वाक्यार्थोपमालङ्कारः।

**निरस्तमलसम्बन्धं निःशेषजगदात्मकम्।**
**सर्व - तत्त्वोपरि प्रोक्तं स्वरूपं परमात्मनः।।३३।।**

निरस्तमलसम्बन्धं दूरीकृतमलत्रय-सम्बन्धं निःशेषजगदात्मकं निःशेष-जगत्स्वरूपकं सर्वतत्त्वोपरि सर्वेषां तत्त्वानाम् उपरि वर्तमानं तत्त्वातीतं च परमात्मनः स्वरूपं प्रोक्तम्।

**यथा व्याप्य जगत्सर्वं स्वभासा भाति भास्करः।**
**तथा स्वशक्तिभिर्व्याप्य परमात्मा प्रकाशते।।३४।।**

भास्करः सूर्यः यथा स्वभासा स्वस्य कान्त्या सर्वं जगत् व्याप्य आवृत्य भाति प्रकाशते, तथैव परमात्मा स्वशक्तिभिः धूमावतीत्यादि-शक्तिभिः जगत् सर्वं व्याप्य प्रकाशते। पञ्च शक्तयः - भूम्यां वर्तमाना धूमावती इत्यपरपर्याया तिरोधानशक्तिः, जले पुष्टिलक्षणा पालनशक्तिः, तेजसि विश्वप्रकाशकतालक्षणा सृष्टिशक्तिः, वायौ शोषकतालक्षणा संहारशक्तिः, नभसि व्यापकशिवैकीकरण-प्रवीणानुग्रहात्मिका विभुताशक्तिः।

विरूपाक्षपञ्चाशिकायामयमंशः एवं प्रोक्तः—

धूमावती पृथिव्यां ह्लादाप्सु शुचौ तु भास्वती प्रथते।
वायौ स्पन्दा विभ्वी नभसि व्याप्तं जगत् ताभिः॥' (का.२७)

'धूमावती तिरोधौ भास्वत्यवभासनेऽध्वनां शक्तिः।
क्षोभे स्पन्दा व्याप्तौ विभ्वी ह्लादा च पुष्टौ स्यात्॥' (का.२६) इति।

**विश्वतो भासमानोऽपि विश्वमायाविलक्षणः।**
**परमात्मा स्वयं ज्योतीरूपो जीवात्मनां भवेत्।।३५।।**

परमात्मा विश्वतः सर्वस्मादपि विश्वस्मात् भासमानः सन् अपि प्रकाशमानः सन्नपि, स्वयं विश्वमायाविलक्षणः विश्वस्य मायाया अपि विलक्षणः सन् जीवात्मनां संसारहेयबुद्धिसम्पन्नानां जीवात्मनां ज्योतीरूपः

सच्चिदानन्दरूपत्वात् परिशुद्धशिवज्ञानप्रकाशकः भवेत्।

*॥इति परमात्मस्थलम्॥*

## (३१) निर्देहागमस्थलम्

**देहिनोऽपि परात्मत्वभाविनो निरहङ्कृतेः।**
**निरस्तदेहधर्मस्य निर्देहागम उच्यते॥३६॥**

परात्मत्वभाविनः परमात्मस्वरूपी इत्यात्मकभावयुक्तस्य, निरहङ्कृतेः अहंकारशून्यस्य निरस्तदेहधर्मस्य दूरीकृतस्थूलत्वादिदेहधर्मवतः देहिनः अपि देहयुक्तस्यापि परशिवयोगिनः निर्देहागमः उच्यते विहितः।

**गलिते ममताहन्ते संसारभयकारणे।**
**पराहन्तां प्रविष्टस्य कुतो देहः? कुतो रतिः?॥३७॥**

संसारभयकारणे संसारभयस्य कारणीभूते ममताहन्ते ममता च अहन्ता च एतयोः समाहारः तस्मिन् ममताहन्ते ममताभावे अहन्ताभावे च गलिते सति नष्टे सति तदा पराहन्तां पराहन्तास्थितिं प्रविष्टस्य शिवयोगिनः देहः कुतः? रतिश्च प्रीतिश्च कुतः? देहभावोऽपि नास्ति, प्रीतिरपि नास्ति।

**केवले निष्प्रपञ्चौघे गम्भीरे चिन्महोदधौ।**
**निमग्नमानसो योगी कथं देहं विचिन्तयेत्?॥३८॥**

केवले निष्प्रपञ्चौघे निवृत्तचराचरप्रपञ्चरूपे अम्भसां रयवति, निवृत्त-चराचरप्रपञ्च - रूपजलप्रवाहरभसवत्यपि, गम्भीरे अगाधे चिन्महोदधौ शिवज्ञानरूपमहासमुद्रे निमग्नमानसः निमग्नं मानसं यस्य सः तादृशः योगी निर्देहागमवान् शिवयोगी देहं स्वशरीरं प्रति कथं वा विचिन्तयेत्? कदापि कुत्रचिदपि न चिन्तयति।

महति जलरभसयुते अंत्यन्तं गम्भीरे महोदधौ निमग्नः केवलं निमज्जनसुखमेव अनुभवन् वर्तते तथैव अपारे शिवज्ञाने निमग्नचेतसः योगिनः देहभ्रमः नास्ति। इति वाक्यार्थोपमालङ्कारः। गम्भीरे इति पदस्थेन श्लेषेण अयमुपमालङ्कारः अनुप्राणितः।

**अपरिच्छेद्यमात्मानं चिदम्बरमिति स्मरन्।**
**देहयोगेऽपि देहस्थैर्विकारैर्न विलिप्यते।।३९।।**

निर्देहागमयोगी तावत् आत्मानम् अपरिच्छेद्यं परिपूर्णं सन्तं चिदम्बरं च शिवज्ञानरूपवस्त्रेण आवृतमिति स्मरन् भावयन् सन् स्वस्मिन् देहयोगे सत्यपि देहस्थैः देहे वर्तमानैः कामक्रोधादिभिः विकारैः न विलिप्यते नैव सम्पर्कवान् भवति।

**अखण्डसंविदाकारमद्वितीयं सुखात्मकम्।**
**परमाकाशमात्मानं मन्वानः कुत्र मुह्यति?।।४०।।**

निर्देहागमवान् शिवयोगी स्वात्मानम् अखण्डसंविदाकारम् अखण्डज्ञान-स्वरूपकम् अद्वितीयम् सुखात्मकम् शिवानन्दरूपस्वरूपवन्तं, परमाकाशं परमाकाशशरीरवन्तं सन्तं मन्वानः कुत्र देहे मुह्यति? न कुत्रापि मुह्यति।

**उपाधिविहिता भेदा दृश्यन्ते चैकवस्तुनि।**
**इति यस्य मतिः सोऽयं कथं देहमितो भवेत्?।।४१।।**

एकवस्तुनि एकस्मिन्नेव वस्तुनि उपाधिविहिताः उपाधिना विहिताः आश्रयभेदेन युक्ताः भेदाः दृश्यन्त-इति यस्य शिवयोगिनः मतिः भवति सः अयं शिवयोगी कथं वा देहमितः देहे मितः अथवा देहेन मितः सीमितदेहवान् सन् भवेत्? नैव मितदेही स्यात्।

**भेदबुद्धिः समस्तानां परिच्छेदस्य कारणम्।**
**अभेदबुद्धौ जातायां परिच्छेदस्य का कथा?।।४२।।**

भेदबुद्धिः एव समस्तानां वस्तूनां परिच्छेदस्य भिन्नभिन्नतायाः कारणम्, परम् अभेदबुद्धौ जातायां सत्यां परिच्छेदस्य भिन्नतायाः का वा कथा? भिन्नत्वमेव नास्ति।

**शिवोऽहमिति यस्यास्ति भावना सर्वगामिनी।**
**तस्य देहेन सम्बन्धः कथं स्यादमितात्मनः?।।४३।।**

यस्य शिवयोगिनः सर्वगामिनी सर्वत्रगमनशीला सर्वव्यापकीभूता अहं शिवः इति भावना अस्ति अमितात्मनः अपरिमितात्मनः तस्य शिवयोगिनः

देहेन परिच्छिन्नेन शरीरेण सह सम्बन्धः सम्पर्कः कथं वा स्यात्? नैव स्यात्।

*॥इति निर्देहागमस्थलम्॥*

## (३२) निर्भावागमस्थलम्

**व्यतिरेकात् स्वरूपस्य भावान्तरनिराकृतेः।**
**भावो विकारनिर्मुक्तो निर्भावागम उच्यते॥४४॥**

स्वरूपस्य निर्देहस्वस्वरूपस्य व्यतिरेकात् व्यतिरिक्तत्वात् अर्थात् अहं भिन्नः, शिवोभिन्नः, जगत् भिन्नम् इति भेदभाव - विरहितत्वात् भावान्तरनिराकृतेः भावान्तरस्य निराकरणात् अर्थात् अहं भिन्नः इत्यादिभावान्तरनिराकरणात् अतएव विकारनिर्मुक्तः विकारेभ्यः निर्मुक्तः यः भावः सः निर्भावागमः इत्युच्यते।

**अहं ब्रह्मेति भावस्य वस्तुद्वयसमाश्रयः।**
**एकीभूतस्य चिद्व्योग्नि तदभावो विनिश्चितः॥४५॥**

अहं ब्रह्म इति भावस्य वस्तुद्वयसमाश्रयः वस्तुनः द्वयस्य समाश्रयः आवश्यकः-अहम् ब्रह्म इति, किन्तु चिद्व्योव्योम्नि चिदाकाशे महालिङ्गे एकीभूतस्य सामरस्यं प्राप्तस्य तदभावः तस्य वस्तुद्वयस्य अभावः विनिश्चितः दृढः।

**एकभावनिरूढस्य निष्कलङ्के चिदम्बरे।**
**क्व जातिवासनायोगः क्व देहित्वं परिभ्रमः?॥४६॥**

निष्कलङ्के कलङ्करहिते चिदम्बरे चिद्व्योम्नि एकभावनिरूढस्य एकभावेन रूढस्य परिपूर्णसमरसतया समासक्तस्य शिवयोगिनः जातिवासनायोगः जातिधर्माणां वर्ण - धर्माणाम् आश्रमधर्माणां च संस्कारविशेषाणां सम्बन्धः क्व? देहित्वं च क्व? परिभ्रमश्च संसारचक्रे परिभ्रमणं च क्व? सर्वम् अपि एतत् नैव सम्भवति।

**शून्ये चिदम्बरे स्थाने दूरे वाङ्मनसाध्वनः।**
**विलीनात्मा महायोगी केन किं वापि भावयेत्?॥४७॥**

वाङ्मानसाध्वनः वागध्वनः सकाशात् मानसाध्वनः सकाशात् दूरे अत्यन्तं दूरे वर्तमाने वाङ्मनसागोचरे शून्ये सर्वशून्ये चिदम्बरे स्थाने

विलीनात्मा तादात्म्यापन्नः शिवयोगी केन केन वा प्रकारेण, किं वा वस्तु भावयेत्? चिन्तयेत्? न केनापि प्रकारेण न किमपि वस्तु भावयति।

**अविशुद्धे विशुद्धे वा स्थले दीप्तिर्यथा रवेः।**
**पतत्येवं सदाद्वैती सर्वत्र समबुद्धिमान्।।४८।।**

रवेः दीप्तिः सूर्यस्य प्रकाशः यथा अविशुद्धे वा विशुद्धे वा स्थले पतति अपवित्रे वा पवित्रे वा स्थाने पतति तथैव अद्वैती केवलमद्वैतभाववान् शिवयोगी सदा सर्वत्र पवित्रात्मनि वा अपवित्रात्मनि वा सर्वत्र जीवलोके समवृत्तिमान् भवति।

**न बिभेति जरामृत्योर्न क्षुधाया वशं व्रजेत्।**
**परिपूर्णनिजानन्दं समास्वादन् महासुखी।।४९।।**

एतादृश-शिवाद्वैतभावसम्पन्नः शिवयोगी जरामृत्योः जरायाः मृत्योश्च न बिभेति, क्षुधायाः वशं च न व्रजेत्, किन्तु, अयं तावत् परिपूर्णनिजानन्दं परिपूर्णमात्मानन्दमेव सदा समास्वादन् सन् आस्वादनमनुभवन् सन् महासुखी सन्नेव सञ्चरति।

*।।इति निर्भावागमस्थलम्।।*

## (३३) नष्टागमस्थलम्

**भेदशून्ये महाबोधे ज्ञात्रादित्रयहीनकः।**
**ज्ञानस्य नष्टभावेन नष्टागम इहोच्यते।।५०।।**

भेदशून्ये द्वैतभावरहिते महाबोधे महति शिवज्ञाने ज्ञात्रादित्रयहीनकः ज्ञाता ज्ञानम् ज्ञेयमिति पदार्थत्रयस्य नाशात् शिवयोगी ज्ञानस्य स्वकीयभेदज्ञानस्यापि नष्टभावेन निर्भावागम-स्थलसम्पन्नस्य शिवयोगिनः विषये नष्टागमः इत्युच्यते।

**अद्वैतवासनाविष्टचेतसाम् परयोगिनाम्।**
**पश्यतामन्तरात्मानं ज्ञातृत्वं कथमन्यथा।।५१।।**

अद्वैतवासनाविष्टचेतसाम् - परिपूर्णाद्वैतविशिष्टसंस्कारेण परिपूर्णचित्तानाम् अन्तः हृदयमध्ये आत्मानं पश्यताम् स्वात्माभिन्नरूपिणं परमेश्वरमेव

अनुसन्धानेन ध्यानं कुर्वताम् परयोगिनां ज्ञातृत्वं तावत् अन्यथा प्रकारान्तरेण अपि कथं वा स्यात्? नैव स्यात्। सर्वं स्वस्वरूपेणैव पश्यन्ति।

**अकर्ताहमवेत्ताहमदेहोऽहं निरञ्जनः।**
**इति चिन्तयतः साक्षात् संविदेव प्रकाशते।।५२।।**

अहम् अकर्ता, अहम् अवेत्ता, अहम् अदेहः, अहं निरञ्जनः अञ्जनरहितः इत्यादिरूपवान् अस्मि इत्येवं रीत्या चिन्तयतः शिवयोगिनः साक्षात् संविद् एव त्रिपुटीमयप्रपञ्चस्य नाशादेव कारणात् विशिष्टं शिवाद्वैतज्ञानमेव प्रत्यक्षरूपेण प्रकाशते।

**निरस्तभेदजल्पस्य निरीहस्य प्रशाम्यतः।**
**स्वे महिम्नि विलीनस्य किमन्यज्ज्ञेयमुच्यते?।।५३।।**

निरस्तभेदजल्पस्य दूरीकृतभेदबोधकवाक्यस्य प्रशाम्यतः जितेन्द्रियस्य स्वे महिम्नि नैजे महिमस्थितौ विलीनस्य अतएव निरीहस्य आशादिरहितस्य शिवयोगिनः ज्ञेयं वस्तु अन्यत् किम् उच्यते? न किमपि ज्ञेयम्।

**एकीभूते निजाकारे संविदा निष्प्रपञ्चया।**
**केन किं वेदनीयं तद्वेत्ता कः परिभाष्यते?।।५४।।**

निजाकारे निजस्य आकारे स्वस्य स्वरूपे निष्प्रपञ्चया प्रपञ्चशून्यया संविदा शिवाद्वैत-ज्ञानेन एकीभूते सति सामरस्यं प्राप्ते सति, केन वा साधनेन? किं वा वेदनीयं वस्तु? तद्वेत्ता तस्य वेत्ता च कः? इति केन परिभाष्यते? न किमपि एतत्।

**महासत्ता महासंविद् विश्वरूपा प्रकाशते।**
**तद्विना नास्ति वस्त्वेकं भेदबुद्धिं विमुञ्चतः।।५५।।**

महासत्ता या महासंवित् महाज्ञानं विश्वरूपा सती एव प्रकाशते अतः भेदबुद्धिं विमुञ्चतः औपाधिकभेदबुद्धिरहितस्य शिवयोगिनः तद्विना तेन विना महासत्तास्फुरणात्मकचैतन्यरूपमहाज्ञानं विना एकमपि वस्तु अन्यत् नास्ति।

*।।इति नष्टागमस्थलम्।।*

## (३४) आदिप्रसादिस्थलम्

**सर्वाधिष्ठातृकः शम्भुरादिस्तस्य प्रसादतः।**
**आदिप्रसादीत्युक्तोऽयं निर्विकारपदे स्थितः।।५६।।**

सर्वाधिष्ठातृकः सर्वस्य विश्वस्य आधारभूमित्वात् विश्वस्य नियामकत्वाच्च सर्वविश्वाधिष्ठाता शम्भुः एव आदिः, तस्य प्रसादतः अनुग्रहात् निर्विकारपदे स्थितः विकाररहिते नष्टागमस्थलनाम्नि स्थाने स्थितः वर्तमानः अयं शिवयोगी आदिप्रसादी भवति।

**अनेकजन्मशुद्धस्य निरहङ्कारभाविनः।**
**अप्रपञ्चस्यादिदेवः प्रसीदति विमुक्तये।।५७।।**

अनेकजन्मशुद्धस्य अनेकेषु जन्मसु पुण्यादिभिः शुद्धस्य निरहङ्कारभाविनः अहङ्कारममकारादिशून्यस्य अप्रपञ्चस्य प्रापञ्चिक-भेदरहितस्य शिवयोगिनः आदिदेवः सदाशिवः विमुक्तये मोक्षसिद्ध्यर्थं प्रसीदति प्रसन्नो भवति।

**शिवप्रसादसम्पत्त्या शिवभावमुपेयुषि।**
**शिवादन्यज्जगज्जालं दृश्यते न च दृश्यते।।५८।।**

शिवप्रसादसम्पत्त्या शिवस्य प्रसादरूपायाः सम्पत्तेः प्राप्तिकारणात् शिवभावम् उपेयुषि प्राप्तवति शिवयोगिनि जगज्जालं जगतः जालं समूहः शिवात् अन्यत् इति यत् दृश्यते तत् जगज्जालं तु इदम् इत्याकारेण नैव दृश्यते।

**शम्भोः शिवप्रसादेन संसारच्छेदकारिणा।**
**मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः।।५९।।**

शम्भोः परमेश्वरस्य संसारच्छेदकारिणा संसारस्य छेदकारिणा संसारनाशस्य मूलकारणीभूतेन शिवप्रसादेन शिवेन मङ्गलकरेण प्रसादेन विवेकिनः नित्यानित्यपरिज्ञानवतः शिवज्ञानिनः मोहग्रन्थिम् अज्ञानरूपं ग्रन्थिं विनिर्भिद्य खण्डयत्विा मुक्तिं यान्ति मोक्षं प्राप्नुवन्ति।

**विना प्रसादमीशस्य संसारो न निवर्त्तते।**
**विना सूर्योदयं लोके कुतः स्यात् तमसो लयः?।।**

ईशस्य प्रसादं विना संसारः न निवर्तते नैव नश्यति, यथा च सूर्योदयं विना लोके तमसः लयः नाशः कुतः स्यात्? यथा सूर्योदयेन तमसः नाशः तथा शिवस्य प्रसादेन संसारस्य नाशः इति साधर्म्यमूलः उपमाध्वनिः। यथा सूर्योदयं विना तमसः नाशः न सम्भवति तथैव शिवस्य प्रसादं विना संसारनाशः न सम्भवति इति वैधर्म्यमूलः उपमाध्वनिः। उत्तरार्धः पूर्वार्धं समर्थयतीति अर्थान्तरन्यासः।

**सर्वानुग्राहकः शम्भुः केवलं कृपया प्रभुः।**
**मोचयेत् सकलान् जन्तून् न किञ्चिदिह कारणम्।।६१।।**

सर्वानुग्राहकः सन्नपि प्रभुः स्वतन्त्रः शम्भुः केवलं कृपया एव सकलान् जन्तून् प्राणिनः मोचयेत् पाशमुक्तान् कुर्यात्, इह अस्मिन् विषये किञ्चिदपि अन्यत् कारणं नास्ति।

*।।इति आदिप्रसादिस्थलम्।।*

## (३५) अन्त्यप्रसादिस्थलम्

**लयः सर्वपदार्थानामन्त्य इत्युच्यते बुधैः।**
**प्रसादोऽनुभवस्तस्य तद्वानन्त्यप्रसादवान्।।६२।।**

सर्वपदार्थानाम् सर्वेषामपि पदार्थानाम् लयः लयस्य आश्रयः शिवः एव अन्त्यः सर्वान्त्यः इत्युच्यते बुधैः शिवतत्त्वज्ञानविद्भिः। तस्य तादृश-सर्वान्त्यस्य शिवस्य अनुभवः एव साक्षात्काररूपप्रसादवान् आदिप्रसादी एव अन्त्यप्रसादवान् इति उच्यते।

**देवतिर्यङ् - मनुष्यादि-व्यवहारविकल्पना।**
**मायाकृता परे तत्त्वे तल्लये तत्क्षयो भवेत्।।६३।।**

देवतिर्यङ्मनुष्यादिव्यवहारविकल्पना एतादृशजन्मधारणरूपव्यवहारस्य कल्पना तावत् मायाकृता मायया कृता वर्तते, परं परे तत्त्वे परमेश्वररूपे परतत्त्वे तल्लये तस्याः मायायाः लये सति सद्यः तत्क्षयः तस्याः कल्पनायाः अपि क्षयः नाशः भवेत्।

**साक्षात्कृते परे तत्त्वे सच्चिदानन्दलक्षणे।**
**क्व पदार्थपरिज्ञानं कुतो ज्ञातृत्व-सम्भवः?।।६४।।**

सच्चिदानन्दलक्षणे परे तत्त्वे साक्षात्कृते सति तदा पदार्थपरिज्ञानं क्व? ज्ञातृत्व-सम्भवश्च कुतः? न कुत्रापि स्यात्।

**सुषुप्तस्य यथा वस्तु न किञ्चिदपि भासते।**
**तथा मुक्तस्य जीवस्य न किञ्चिद्वस्तु दृश्यते।।६५।।**

सुषुप्तस्य निद्रांगतस्य यथा किञ्चिदपि वस्तु न भासते न दृश्यते तथैव मुक्तस्य जीवन्मुक्तस्य जीवस्य आत्मनः किञ्चिदपि वस्तु न दृश्यते।

वाक्यार्थोपमालङ्कारः।

**यथाकाशमविच्छिन्नं निर्विकारं स्वरूपतः।**
**तथा मुक्तस्य जीवस्य स्वरूपमवशिष्यते।।६६।।**

यथा आकाशम् अविच्छिन्नं सर्वत्र व्यापकं, स्वरूपतः स्वाभाव्यात् निर्विकारं विकाररहितं वर्तते, तथैव मुक्तस्य जीवस्य केवलं स्वरूपमेव अवशिष्यते प्रकाशमानं वर्तते।

उपमालंकारः।

**न किंचिदपि मुक्तस्य दृश्यं कर्तव्यमेव वा।**
**सुखस्फूर्ति-स्वरूपेण निश्चला स्थितिरुच्यते।।६७।।**

मुक्तस्य जीवन्मुक्तस्य किंचिदपि दृश्यं वा कर्तव्यं वा नास्ति। किन्तु सुखस्फूर्ति-स्वरूपेण केवलं सुखस्फूर्तिरूपेण स्वरूपेण तस्य मुक्तस्य स्थितिः अवस्थितिः तावत् निश्चला स्थितिः इति उच्यते।

**शिवाद्वैत - परिज्ञान - शिथिलाशेषवस्तुनः।**
**केवलं संविदुल्लासदर्शिनः केन को भवेत्?।।६८।।**

शिवाद्वैतपरिज्ञानशिथिलाशेषवस्तुनः - शिवाद्वैतस्य परिज्ञानेन निवृत्तसकलभेद-युक्तवस्तु-जातस्य, अत एव केवलं संविदुल्लासदर्शिनः संविद्ज्ञानस्य विलासमेव पश्यतः शिवयोगिनः केन वा इन्द्रियव्यापारेण ज्ञानेन्द्रियकर्मेन्द्रियादि-सकलेन्द्रियव्यापारेण वा को वा प्रयोजनलेशः स्यात्? न किमपि।

*।।इति अन्त्यप्रसादिस्थलम्।।*

## (३६) सेव्यप्रसादिस्थलम्।।

**सेव्यो गुरुः समस्तानां शिव एव न संशयः।**
**प्रसादोऽस्य परानन्दप्रकाशः परिकीर्त्यते।।६९।।**

समस्तानां जगदादीनां कृते सेव्यः गुरुः इत्युक्ते शिवः एव इति न संशयः, अतः अस्य श्रीगुरुरूपशिवस्य प्रसादः एव परानन्दप्रकाशः परमशिवानन्दस्य प्रकाशकः इति परिकीर्त्यते।

**सेव्यो गुरुः स्मृतो यस्य प्रसादोऽनुभवो मतः।**
**तदेकावेशरूपेण तद्वान् सेव्यप्रसादवान्।।७०।।**

गुरुः एव यः शिवस्वरूपवान् स एव गुरुः सेव्यः इति स्मृतः, यस्य शिवस्वरूपिणः गुरोः अनुभवः उपदेशरूपः स एव प्रसादः इति मतः, तदेकावेशरूपेण तयोः गुरोः प्रसादस्य च यः एकादेशः एकीभावः तस्य समरसभावेन तद्वान् तादृशगुरुप्रसादवान् एव अन्त्यप्रसादी एव सेव्यप्रसादवान् इति कथ्यते।

**गुरुदेवः परं तत्त्वं परतत्त्वं गुरुः स्मृतः।**
**तदेकत्वानुभावेन न किञ्चिदवशिष्यते।।७१।।**

गुरुदेवः एव परं तत्त्वम्, पर - तत्त्वमेव गुरुः इति स्मृतः, तदेकत्वानुभावेन तयोः गुरुतत्त्वपरतत्त्वयोः निश्चितबुद्धेः अनुभावेन अनुसन्धानेन किञ्चिदपि न अवशिष्यते ज्ञातव्यं किमपि नास्ति एतद् द्वयं विना।

**अपरिच्छेद्यमात्मस्थमवाङ्मनसगोचरम् ।**
**आनन्दं पश्यतां पुंसां रतिरन्यत्र का भवेत्?।।७२।।**

अपरिच्छेद्यं परिच्छेदरहितम् आत्मस्थम् स्वात्मनि एव स्वस्वरूपतया अनुभवयोग्यत्वेन वर्तमानम् अवाङ्मनसगोचरम् वाङ्मनसोः अगोचरम् आनन्दं स्वस्वरूपात्मकम् परमानन्दम् पश्यतां स्वात्मन्येव अनुभवविषयीकुर्वताम् शिवयोगिनां पुंसां पुरुषश्रेष्ठानाम् अन्यत्र शिवानन्दानुभवादन्यत्र विषयेषु का वा रतिः आसक्तिः भवेत्? न कोऽपि अभिलाषः स्यात्।

**ज्ञानामृतेन तृप्तस्य किमन्यैर्भोज्यवस्तुभिः?।**
**ज्ञानादेव परानन्दं प्रकाशयति सच्छिवः।।७३।।**

ज्ञानामृतेन ज्ञानरूपेण अमृतेन-अमृतपानेन तृप्तस्य तृप्तिं प्राप्तस्य अन्यैः भोज्यवस्तुभिः किं प्रयोजनम्? यतः ज्ञानात् एव परानन्दं स्वस्वरूपात्मकात् शिवज्ञानादेव श्रेष्ठतमं परमानन्दं सच्छिवः स्वाभाविक-सच्चिदानन्दात्मकः शिवः एव प्रकाशयति इतरानपेक्षं यथा स्यात् तथा।

**मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा।**
**नित्यतृप्तस्य मुक्तस्य किमन्यैर्भोगसाधनैः?।।७४।।**

सच्चिदानन्दलक्षणा मुक्तिरेव परा उत्कृष्टा तृप्तिः, अतः एवं नित्यतृप्तस्य मुक्तस्य सर्वज्ञत्वाद्युपलक्षितनित्यतृप्तिमतः मुक्तस्य शिवयोगिनः अन्यैः मुक्तिभिन्नैः भोगसाधनैः वस्तुभिः किं प्रयोजनम्?

**न बाह्यं कर्म तस्यास्ति न चान्तर्नैव कुत्रचित्।**
**शिवैक्यज्ञानरूढस्य देहभ्रान्तिं विमुञ्चतः।।७५।।**

शिवैक्यज्ञानरूढस्य शिवैक्यज्ञानमारुह्य वर्तमानस्य अत एव देहभ्रान्तिं विमुञ्चतः तस्य सेव्यप्रसादिनः शिवयोगिनः बाह्यं कर्म पूजादिकं नास्ति अन्तः कर्म च ध्यानादिरूपमपि आन्तरिकं कर्म अपि कुत्रचिदपि नास्ति।

**न कर्मबन्धे न तपोविशेषे**
**न मन्त्रयोगाभ्यसने तथैव।**
**ध्याने न बोधे च 'तथात्मतत्त्वे**
**मनः प्रवृत्तिः परयोगभाजाम्।।७६।।**

परयोगभाजां सर्वोत्कृष्टं परशिवयोगं भजमानानाम् सेव्यप्रसादिनां शिवयोगिनां मनःप्रवृत्तिः मनसः प्रवृत्तिः मनोव्यापारस्तावत् कर्मबन्धे षट्कर्मबन्धत्रयरूपे हठयोगे न प्रवर्तते, तपोविशेषे योगानां मध्ये विशिष्टे राजयोगे न प्रवर्तते, तथैव मन्त्रयोगाभ्यसने अजपगायत्रीमन्त्ररूपस्य सोऽहम्भावरूपमन्त्रस्य योगस्य अभ्यासेऽपि न प्रवर्तते, अथवा ध्याने अनाहतब्रह्मध्यानरूपे लययोगेऽपि न प्रवर्तते, किन्तु तथात्मतत्त्वे तथाभूते हठयोग-राजयोग-योगाभ्यास-लययोगरूपयोगचतुष्टय-चैतन्यस्वरूपे आत्मतत्त्वरूपे

बोधे स्वस्वरूपज्ञाने एव केवलं प्रवर्तते, नेतरेषु व्यस्ततया।

अत्र प्रथमद्वितीयचतुर्थपादेषु उपेन्द्रवज्रावृत्तस्य लक्षणम्, तृतीय-पादे च इन्द्रवज्रावृत्तस्य लक्षणम्, इत्यतः अत्र उपजातिः छन्दः।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ प्राणलिङ्गिस्थलविषयनवविधलिङ्गप्रसङ्गो नाम ॥अष्टादशः परिच्छेदः॥*

# ।।एकोनविंशः परिच्छेदः।।

## ।।शरणस्थलम्।।

### ।।अगस्त्य उवाच।।

**स्थलभेदाः समाख्याताः प्राणलिङ्गिस्थलाश्रयाः।**
**कथय स्थलभेदं मे शरणस्थलसंश्रितम्।।१।।**

प्राणलिङ्गिस्थलाश्रयाः प्राणलिङ्गिस्थलमाश्रित्य वर्तमानाः स्थलभेदाः समाख्याताः, अथ च शरणस्थलमाश्रितं स्थलभेदं मे कथय।

### ।।श्रीरेणुक उवाच।।

**शरणस्थलमाश्रित्य स्थलद्वादशकं मया।**
**उच्यते नाम सर्वेषां स्थलानां शृणु तापस।।२।।**

हे तापस! शरणस्थलम् आश्रित्य विद्यमानं स्थलद्वादशकं, मया इदानीं सर्वेषां तेषां स्थलानां नाम उच्यते शृणु।

**दीक्षापादोदकं पूर्वं शिक्षापादोदकं ततः।**
**ज्ञानपादोदकं चाथ क्रियानिष्पत्तिकं ततः।।३।।**

**भावनिष्पत्तिकं चाथ ज्ञाननिष्पत्तिकं ततः।**
**पिण्डाकाशस्थलं चाथ बिन्द्वाकाशस्थलं ततः।।४।।**

**महाकाशस्थलं चाथ क्रियायाश्च प्रकाशनम्।**
**भावप्रकाशनं पश्चात् ततो ज्ञानप्रकाशनम्।।**
**स्वरूपं पृथगेतेषां कथयामि यथाक्रमम्।।५।।**

दीक्षापादोदकस्थलम्, शिक्षापादोदकस्थलम्, ज्ञानपादोदकस्थलम्, क्रियानिष्पत्तिस्थलम्, भावनिष्पत्तिस्थलम्, ज्ञाननिष्पत्तिस्थलम्, पिण्डाकाशस्थलम्, क्रियाप्रकाशस्थलम्, भावप्रकाशनस्थलम्, ज्ञानप्रकाशनस्थलम्- इत्येतेषां

लक्षणं क्रमशः कथयामि।

## (३७) दीक्षापादोदकस्थलम्

**दीक्षयापगतद्वैतं यज्ज्ञानं गुरुशिष्ययोः।**
**आनन्दस्यैक्यमेतेन दीक्षापादोदकं स्मृतम्।।६।।**

गुरुशिष्ययोः आनन्दस्य ऐक्यम्, अपिच, दीक्षया चित्क्रियादीक्षया अपगतद्वैतम् अपगतं द्वैतं यत्र तत् सत् ज्ञानं वर्तते एतेन ज्ञानेन दीक्षापादोदकम् इति स्मृतम्।

**अथवा पादशब्देन गुरुरेव निगद्यते।**
**शिष्यश्चोदकशब्देन तयोरैक्यं तु दीक्षया।।७।।**

अथवा पक्षान्तरेण कथने - पादशब्देन गुरुः एव निगद्यते, दीक्षया तयोः गुरुशिष्ययोः ऐक्यं तु दीक्षापादोदकम् इति कथ्यते।

**परमानन्द एवोक्तः पादशब्देन निर्मलः।**
**ज्ञानं चोदकशब्देन तयोरैक्यन्तु दीक्षया।।८।।**

पादशब्देन निर्मलः परिशुद्धः परमानन्दः एव उक्तः, उदकशब्देन च ज्ञानं उक्तम्, तयोः ज्ञानानन्दयोः गुरुशिष्ययोश्च ऐक्यं तु दीक्षया उक्तम्। एतदेव दीक्षापादोदकम्।

**परसंवित्प्रकाशात्मा परमानन्दभावनाम्।**
**अधिगम्य महायोगी न भेदं क्वापि पश्यति।।९।।**

महायोगी तत्पादोदकदीक्षासम्पन्नः अथवा दीक्षापादोदकस्थलसम्पन्नः शिवयोगी परसंवित्प्रकाशात्मा परब्रह्म - स्वरूपज्ञानप्रकाशवान् सन् परमानन्दभावनां परमानन्दस्य भावनाम् अधिगम्य प्राप्य भेदं नित्यपरिपूर्णज्ञानानन्दभेदं क्वापि कुत्रापि न पश्यति।

**देशकालाद्यवच्छेदविहीनं नित्यनिर्मलम्।**
**आनन्दं प्राप्य बोधेन नान्यत् काङ्क्षति संयमी।।१०।।**

संयमी शिवयोगी देशकालाद्यवच्छेदविहीनं देशकालादिषु अवच्छेदेन

विहीनं देशकालाकारादिषु विच्छेदरहितत्वेन वर्तमानम् नित्यनिर्मलम् नित्यं च निर्मलं च आनन्दं ब्रह्मानन्दं बोधेन परब्रह्मज्ञानस्वरूपेणैव प्राप्य अन्यत् किञ्चिदपि न काङ्क्षति अपेक्षते।

**ज्ञानामृतमपि स्वच्छं गुरुकारुण्यसम्भवम्।**
**आस्वाद्य रमते योगी संसारामयवर्जितः।।११।।**

गुरुकारुण्यसम्भवं गुरोः कारुण्येन सम्भवं स्वच्छम् अत्यन्तं परिशुद्धं ज्ञानामृतम् अपि ज्ञानमेव अमृतं तदपि ब्रह्मज्ञानामृतम् आस्वाद्य सम्यक् आस्वादनं कृत्वा योगी दीक्षापादोदकसम्पन्नः शिवयोगी संसारामयवर्जितः सन् संसारः एव आमयः तेन वर्जितः संसाररूपरोगेण निर्मुक्तः सन् भवरोगात् विमुक्तः सन् रमते स्वस्वरूपेण क्रीडते। ज्ञानामृतम् - इत्यत्र रूपकम्।

**रमते** – रमु - क्रीडायाम् - लट्।

*।।इति दीक्षापादोदकस्थलम्।।*

## (३८) शिक्षापादोदकस्थलम्

**गुरुशिष्यमयं ज्ञानं शिक्षायोगिनमीर्यते।**
**तयोः समरसत्वं हि शिक्षापादोदकं स्मृतम्।।१२।।**

या शिक्षा गुरुशिष्यमयं दीक्षापादोदकस्थलोक्तपादोदकशब्दवाच्ययोः गुरुशिष्ययोः तन्मयीभूतं ज्ञानं परब्रह्मणः ज्ञानं योगिनं तद्दीक्षापादोदकसम्पन्नं शिवयोगिनम् ईर्यते प्रेरयति योजयति वा तयोः तच्छिक्षाज्ञानयोः समरसत्वं हि सामरस्यमेव शिक्षापादोदकम् इति स्मृतम्।

**ईर्यते** – ईर-गतौ प्रेरणे च, कर्मणि लट्। आर्षः

**मायिताच्छास्त्रजलधेर्युक्तिमन्थानवैभवात् ।**
**गुरुणा लभ्यते बोधसुधा सुमनसां गणैः।।१३।।**

युक्तिमन्थानवैभवात् युक्तिः एव मन्थानः मन्थनदण्डः तस्य वैभवात् सामर्थ्यात्, मथितात् मथनात् कारणात् तर्कण-चिन्तन-परिशीलनादिद्वारा मथनात् कारणात् शास्त्रजलधेः शास्त्रमेव जलधिः तस्मात् सकाशात् गुरुणा शिक्षाचार्येण बोधसुधा-बोधः एव सुधा शिवाद्वैतात्मकं ज्ञानामृतं सुमनसां गणैः

दीक्षापादोदकस्वीकारेण शुद्धचित्तानां शिवयोगिनाम् गणैः समूहैः देवगणैश्च लभ्यते प्राप्यते।

यथा सुरगुरोः प्रेरणया समुद्रमथनात् देवैः सुधा लब्धा तथैव शिक्षागुरुणा कारणेन करणेन वा शिवयोगिनां समूहैः निगमागमादिशास्त्रचिन्तनरूप-मथनेन अमृतसदृशं शिवाद्वैत-ज्ञानं लब्धम् - इति उपमाध्वनिः। अयं च - गुरुणा; श्लेषानुप्राणितः उपमाध्वनिः। शास्त्रजलधिः, युक्तिमन्थानः, बोधसुधा-इत्यत्र रूपकम् - इत्येवमत्र श्लेष-रूपक-उपमाध्वनीनां साङ्कर्यात् सङ्करालङ्कारः।

**ज्ञानचन्द्रसमुद्भूतां परमानन्दचन्द्रिकाम्।**
**पश्यन्ति परमाकाशे मुक्तिरात्रौ महाधियः।।१४।।**

महाधियः - सूक्ष्मदृष्टियुक्तमहाशिवज्ञान-सम्पन्नाः शिवयोगिनः मुक्तिरात्रौ मुक्तिरेव रात्रिः तस्याम् परमुक्तिरूपायां गाढान्धकारयुक्तायां रात्रौ समये, परमाकाशे परब्रह्मणः सद्रूपे हृदयाकाशे, ज्ञानचन्द्रसमुद्भूतां ज्ञानमेव चन्द्रः तेन ज्ञानचन्द्रेण समुद्भूतां समुत्पन्नाम् चिज्ज्ञानरूपात् चन्द्रात् समुत्पन्नां परमानन्दचन्द्रिकां परमानन्दः एव चन्द्रिका ताम् परशिवानन्दरूपां चन्द्रिकां पश्यन्ति स्वस्वरूपेण परामर्शनं कृतवन्तः सन्तः परमशिवानन्दम् अनुभवन्ति।

ज्ञानचन्द्र - आनन्दचन्द्रिका - हृदयाकाश-मुक्तिरात्रिइत्यत्र रूपकम्। यथा ज्ञानिनः ज्यौतिषिकाः जनाः वा रात्रौ पूर्णचन्द्रस्य उदयेन समुत्पन्नां ज्योत्स्नां दृष्ट्वा परमानन्दतुन्दिलाः भवन्ति, तथैव महाशिवज्ञानसम्पन्नाः शिवयोगिनः स्वयं जीवन्मुक्ताः सन्तः स्वस्वहृदयेषु शिवज्ञानेन सम्प्राप्यमानं परमशिवानन्दम् अनुभवन्तः शिवानन्दानन्दिनः वर्तन्ते इति उपमाध्वनिः, अयं च रूपकानुप्राणितत्वात् सङ्करालङ्कारः।

**दृष्टे तस्मिन् परानन्दे देशकालादिवर्जिते।**
**द्रष्टव्यं विद्यते नान्यच्छ्रोतव्यं ज्ञेयमेव वा।।१५।।**

देशकालादिवर्जिते देशकालादि-रहिते तथैव शिवयोगिभिः अनुभूयमाने तस्मिन् परानन्दे दृष्टे सति स्वानुभवविषयीभूते सति, तेषां शिवयोगिनां

द्रष्टव्यमन्यत् चक्षुषा दर्शनीयमन्यत्किमपि वा न विद्यते अथवा ज्ञानेन ज्ञेयं ज्ञातुं योग्यं वा अन्यत्किमपि वस्तु न विद्यते, सर्वस्यापि वस्तुनः शिवानन्दाभिन्नत्वेनैव दर्शनीयत्वात् श्रोतव्यत्वात् ज्ञेयत्वाच्च।

**आत्मानन्देन तृप्तस्य का स्पृहा विषये सुखे?।**
**गङ्गाजलेन तृप्तस्य कूपतोये कुतो रतिः?।।१६।।**

आत्मानन्देन निजेन परमशिवानन्देन तृप्तस्य तृप्तिं प्राप्तवतः शिवयोगिनः विषये सुखे विषयसम्बन्धिनि सुखे का वा स्पृहा? न कापि स्पृहा। यतः, गङ्गाजलेन गङ्गानद्याः जलेन अर्थात् गङ्गायाः जलस्य पानेन तृप्तस्य आनन्दतुन्दिलस्य जनस्य कूपतोये कूपस्य तोये जले विषये रतिः आसक्तिः कुतः? कुतः स्यात्? न कुत्रापि सम्भवेत्। पूर्वार्धः विशेषवाक्यम् उत्तरार्धः सामान्यवाक्यम् अत्र उत्तरार्धः पूर्वार्धं समर्थयतीति अर्थान्तरन्यासः। यथा गङ्गाजलेन तृप्तस्य जनस्य कूपतोये आसक्तिः न जायते तथा आत्मानन्देन तृप्तस्य शिवयोगिनः विषयसुखे आसक्तिः न जायते इति उपमाध्वनिः।

**यस्मिन्नप्राप्तकल्लोले सुखसिन्धौ निमज्जति।**
**सामरस्यान्महायोगी तस्य सीमा कुतो भवेत्?।।१७।।**

अप्राप्तकल्लोले कल्लोलैः रहिते महद्भिः तरङ्गैः रहिते, अर्थात् सम्पूर्णतया निस्तरङ्गे यस्मिन् सुखसिन्धौ सुखमेव सिन्धुः तस्मिन्, यः महायोगी महाशिवयोगी सामरस्यात् समरसभावात् तदेकचित्तात् निमज्जति मज्जनं करोति, तस्य तादृशपरमानन्दे स्वयमानन्दी सन् शिवानन्दाभिन्नानन्दत्वम् अनुभवतः शिवयोगिनः तादृशस्य शिवानन्दानुभवस्य सीमा अन्तता कुतः भवेत्? नैव सीमा, तस्य अपरिच्छिन्नत्वामेयत्वानुपमत्वात्। अप्राप्तकल्लोल- इति पदेन रागद्वेषादयः, कामक्रोधलोभमोहमदमात्सर्यादयः आक्षिप्यन्ते। अतः रागद्वेषादिरहिते शिवानन्दसागरे निमज्जन् शिवयोगी केवलं शिवानन्दीभवति इति भावः व्यज्यते। यतः कल्लोलानां रागादीनां च सादृश्यप्रतीतिः अतः उपमाध्वनिः। सिन्धोः शिवानन्दस्य च अभेदप्रतीतेः रूपकध्वनिः।

समुद्रे निमज्जन् जनः यथा तन्मयतया सुखमनुभवति तथैव शिवयोगी शिवानन्दे अत्यन्तं लोलुपः भवतीति उपमाध्वनिः, एषां सङ्करः।

'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति व्यतिरेकलक्षणम्।

*।।इति शिक्षापादोदकस्थलम्।।*

## (३९) ज्ञानपादोदकस्थलम्

**तदैक्यसम्पदानन्दज्ञानं ज्ञानगुरुर्मतः।**
**तत्सामरस्यं शिष्यस्य ज्ञानपादोदकं विदुः।।१९।।**

आनन्दज्ञानम् - श्रुतिप्रसिद्धपादोदकशब्दवाच्यानन्दज्ञानमेव ज्ञानगुरुः इति मतः, तदैक्यसम्पदा तयोः आनन्दज्ञानयोः ऐक्यरूपया सम्पत्त्या यत् सामरस्यं तदेव शिष्यस्य शिक्षापादोदक-सम्पन्नस्य शिवयोगिनः ज्ञानपादोदकम् इति विदुः।

**अविद्याराहुनिर्मुक्तो ज्ञानचन्द्रः सुनिर्मलः।**
**प्रकाशते पराकाशे परानन्दमहाद्युतिः।।२०।।**

अविद्याराहुनिर्मुक्तः अविद्या एव राहुः तेन निर्मुक्तः ज्ञानचन्द्रः ज्ञानमेव चन्द्रः ज्ञानचन्द्रः सुनिर्मलः परिशुद्धः सन् परानन्दमहाद्युतिश्च सन् परानन्दः एव महाद्युतिः यस्य तादृशः सन् पराकाशे सर्वोत्कृष्टे हृदयाकाशे प्रकाशते राजते।

अविद्याराहुः, ज्ञानचन्द्रः, पराकाशे, परानन्दमहाद्युतिः-इत्यत्र रूपकम्। राहुणा निर्मुक्तः परिपूर्णः चन्द्रः महाद्युतिमान् सन् यथा आकाशे प्रकाशते तथैव अज्ञाननिर्मुक्तं सुनिर्मलं परानन्दवत् शिवज्ञानं हृन्मध्ये प्रकाशते इति उपमाध्वनिः। रूपकोपमयोः सङ्करः।

**अज्ञानमेघनिर्मुक्तः पूर्णज्ञानसुधाकरः।**
**आनन्दजलधेर्वृद्धिमनुपश्यन् विभासते।।२१।।**

अज्ञानमेघनिर्मुक्तः अहं न शिवः इत्यात्मकेन अज्ञानरूपेण मेघेन निर्मुक्तः, पूर्णज्ञानसुधाकरः परिपूर्ण-परशिवज्ञानरूपः चन्द्रः आनन्दजलधेः आनन्दरूपस्य जलधेः शिवानन्दरूपसमुद्रस्य वृद्धिं वर्धनम् अनुपश्यन् सन् विभासते प्रकाशते।

अज्ञानमेघः - ज्ञान - सुधाकरः आनन्दजलधिः इत्यत्र रूपकम्। यथा

मेघनिर्मुक्तः सुधाकरः समुद्रस्य वृद्धिं करोति तथैव अज्ञानरहितं परिशुद्धं शिवज्ञानं शिवानन्दं वर्धयति इति उपमाध्वनिः, उभयोः साङ्कर्यम्।

**ज्ञानचन्द्रोदये जाते ध्वस्तमोहतमोभराः।**
**पश्यन्ति परमां काष्ठां योगिनः सुखरूपिणीम्।।२२।।**

ज्ञानचन्द्रोदये शिवज्ञानरूपस्य चन्द्रस्य उदये सति जाते, तदा ध्वस्तमोहतमोभराः दूरीकृत-मोहरूपतमोभराः सन्तः योगिनः शिवयोगिनः सुखरूपिणीं परमां काष्ठां स्वस्वरूपस्थितेः पराकाष्ठतां पश्यन्ति परशिवानन्दस्य अन्तिमामेव स्थितिमनुभवन्तः सन्ति।

ज्ञानचन्द्रः - मोहतमः - इत्यत्र रूपकम्। चन्द्रोदयेन अन्धकारः यथा नश्यति तथैव शिवज्ञानोदये मोहनाशात् केवलं शिवानन्दसुखानुभूतिरेव भवति इति उपमाध्वनिः। रूपकोपमयोः साङ्कर्यम्।

**मायारजन्या विरमे बोधसूर्ये प्रकाशिते।**
**निरस्त–सर्वव्यापारश्चित्रं स्वपिति संयमी।।२३।।**

मायारजन्याः मायारूपायाः रजन्याः विरमे अवसाने समये बोधसूर्ये शिवज्ञानरूपे सूर्ये प्रकाशिते सति तदा संयमी शिवयोगी तावत् निरस्तसर्वव्यापारः सन् दूरीकृतस्वकीय-सकलव्यवहारवान् सन् स्वपिति निश्चिन्ततया निद्रां करोति शिवज्ञानामृतास्वादने तल्लीनो भवति, इति इदं चित्रम् विचित्रम्।

मायारजनी बोधसूर्यः - इत्यत्र रूपकम्।

निशायाः अवसाने जाते सति सूर्योदयः भवति, तदा सर्वः अपि जनः विनिद्रः सन् स्वस्वदैनन्दिन-व्यापारे उद्युक्तो भवति, किन्तु मायारूपिण्याः निशायाः अवसाने सन्दर्भे शिवज्ञानरूपस्य सूर्यस्य उदये जाते सति तदा संयमी शिवयोगी स्वकीयान् सर्वान् लोकव्यवहारान् परित्यज्य केवलं शिवानन्दानन्दलोलुपः सन् स्वपिति अर्थात् सुषुप्त्यवस्थायां यथा जीवात्मा सुखं स्वपिति तथैव योगी तावत् परमानन्दानुभवम् अनुभवन् निर्लिप्त इव तिष्ठति - इति उपमाध्वनिः। परमिदं वैधर्म्यमूलमिति वैलक्षण्यम्, सङ्करश्च। 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा

पश्यतो मुनेः।।'

इति भगवद्गीतोक्तिः अत्र अन्वेति।

**अनाद्यविद्याविच्छित्तिवेलायां परयोगिनः।**
**प्रकाशते परानन्दः प्रपञ्चेन विनाकृतः।।२४।।**

अनाद्यविद्याविच्छित्तिवेलायाम् अनाद्याः अविद्यायाः विच्छित्ति-समये नाशसमये परयोगिनः परम-शिवयोगिनः प्रपञ्चेन विनाकृतः प्रपञ्चसंसर्गभिन्नः कश्चन अलौकिकः परानन्दः परमशिवानन्दः एव केवलं प्रकाशते।

**नित्यानन्दे निजाकारे विमले परतेजसि।**
**विलीनचेतसां पुंसां कुतो विश्वविकल्पना।।२५।।**

नित्यानन्दे निजाकारे स्वस्वरूपात्मके विमले परिशुद्धे परतेजसि शिवज्ञानात्मकपरश्रेष्ठे तेजसि विलीनचेतसां लयीभूतचित्तानां पुंसां शिवयोगिरूपाणां सत्पुरुषाणाम् विश्वविकल्पना तु कुतः? कुत्र स्यात्? न कुत्रापि कदापि स्यात्।

**कुतो ब्रह्मा कुतो विष्णुः कुतो रुद्रः कुतो रविः?।**
**साक्षात्कृतपरानन्दज्योतिषः साम्यकल्पना।।२६।।**

ब्रह्मा कुतः? विष्णुः कुतः? रुद्रः कुतः? रविश्च कुतः? एतेनैव समानाः, यतः साक्षात्कृतपरानन्दज्योतिषःप्रत्यक्षीकृतपरमानन्दरूप-प्रकाशवतः शिवयोगिनः विषये एवं साम्यकल्पना कुतः? नैव साम्यं किञ्चित्।

**अपरोक्षपरानन्दविलासस्य महात्मनः।**
**ब्रह्मविष्ण्वादयो देवा विशेषाः सुखबिन्दवः।।२७।।**

अपरोक्षपरानन्दविलासस्य-प्रत्यक्षीकृत-परमानन्दवैभवयुक्तस्य महात्मनः ज्ञानपादोदक-समापन्नस्य शिवयोगिनः ब्रह्मविष्ण्वादयः देवाः विशेषाः परानन्दसुखापेक्षया अत्यल्पसुखविशिष्टत्वात् भिन्नाः सुखबिन्दवः बिन्दुसदृशाः अत्यल्पसुखिनः वर्तन्ते।

**यन्मात्रासहितं लोके वाञ्छन्ति विषयं नराः।**
**तदप्रमेयमानन्दं परमं को न वाञ्छति?।।२८।।**

नराः जनाः लोके यन्मात्रासहितं यावन्मात्रं चिदानन्दांशात्मकं विषयं वाञ्छन्तिअपेक्षन्ते तत् सुखम् अप्रमेयम् प्रमातुं न योग्यं परमं च आनन्दं सन्तं कः न वाञ्छति? सर्वोऽपि वाञ्छत्येव परानन्दः विषयज्ञानसुखलेशापेक्षया प्रमाणरहितः सीमारहितः अपरिमितपरमश्रेष्ठः ब्रह्मानन्दात्मकः शिवानन्दः।

*।।इति ज्ञानपादोदकस्थलम्।।*

## (४०) क्रियानिष्पत्तिस्थलम्

**परकाये क्रियापत्तिः कल्पितैव प्रकाशते।**
**रज्जौ भुजङ्गवद्यस्मात् क्रियानिष्पत्तिमानयम्।।२९।।**

परकाये परब्रह्मकायवति ज्ञानपादोदकसम्पन्ने शिवयोगिनि क्रियापत्तिः क्रियानिष्पत्तिः तावत् रज्जौ विषये भुजङ्गवत् सर्पज्ञानवत् यस्मात् कल्पिता सत्येव प्रकाशते तस्मादेव कारणात् अयं ज्ञानपादोदकसम्पन्नः एव शिवयोगी क्रियानिष्पत्तिमान् इति कथ्यते।

**ज्ञानिनां यानि कर्माणि तानि नो जन्महेतवः।**
**अग्निदग्धानि बीजानि यथा नाङ्कुरकारणम्।।३०।।**

अग्निदग्धानि अग्निना दग्धानि बीजानि यथा अङ्कुरस्य प्ररोहस्य न कारणं तथैव ज्ञानिनां यानि कर्माणि ज्ञानपादोदकस्थलभाजां कर्माणि यानि सन्ति तानि जन्महेतवः जन्मनः कारणानि न भवन्ति। (नो = न)

उत्तरार्धेन सामान्यवाक्येन पूर्वार्धस्य विशेषवाक्यस्य समर्थनात् अर्थान्तरन्यासालङ्कारः। यथा अग्निदग्धं बीजं नैव अङ्कुरायते तथैव ज्ञानिनां कर्माणि जन्मकारणानि न भवन्ति इति उपमाध्वनिः।

**कर्मणा किं कृतेनापि ज्ञानिनो निरहङ्कृतेः?।**
**विक्रिया प्रतिबिम्बस्था किं करोति हिमद्युतेः?।।३१।।**

निरहङ्कृतेः अहङ्कारशून्यस्य ज्ञानिनः शिवाद्वैतज्ञानसम्पन्नस्य कृतेन अपि आचरितेन अपि कर्मणा किम्? किं प्रयोजनम्?किमपि नास्ति प्रयोजनम्। यथा च - हिमद्युतेः चन्द्रस्य प्रतिबिम्बस्था प्रतिबिम्बे वर्तमाना विक्रिया विकारः तं किं करोति? न किमपि कर्तुं शक्नोति।

अत्रापि अर्थान्तरन्यासालङ्कारः। यथा चन्द्रबिम्बस्था विक्रिया अप्रयोजिका तथैव ज्ञानिना क्रियमाणं कर्म केवलं निष्प्रयोजकम् इति उपमाध्वनिः।

**चन्द्रस्य मेघसम्बन्धाद् यथा गमनकल्पना।**
**तथा देहस्य सम्बन्धादारोप्या स्यात् क्रियात्मनः।।३२।।**

मेघसम्बन्धात् चलतः मेघस्य सम्बन्धात् यथा गमनकल्पना चन्द्रस्य गमनंस्य कल्पना तथैव क्रियात्मनः चित्क्रियास्वरूपवतः शिवयोगिनः देहस्य सम्बन्धादेव आत्मन जीवात्मनः क्रिया आरोप्या स्यात्। वस्तुतः कर्म निष्प्रयोजकम्। वाक्यार्थोपमालङ्कारः।

**ज्ञानी कर्मनिरूढोऽपि लिप्यते न क्रियाफलैः।**
**घृतादिना यथा जिह्वा भोक्त्री चापि न लिप्यते।।३३।।**

ज्ञानी ज्ञानपादोदकसम्पन्नः शिवयोगी कर्मनिरूढः सन्नपि कर्मणि नितरां रूढः आसक्तः सन्नपि क्रियाफलैः क्रियाणां फलैः न लिप्यते। यथाच - जिह्वा घृतादिना भोक्त्री सती चापि अनुभवयित्री सत्यपि तैः पदार्थैः न लिप्यते। अत्रापि जिह्वा पदार्थैः न लिप्यते, तथैव ज्ञानी शिवयोगी कर्मासक्तः सन्नपि कर्मभिः नैव लिप्यते - इति उपमाध्वनिः।

**निरस्तोपाधिसम्बन्धे जीवे या या क्रियास्थितिः।**
**सा सा प्रतीतिमात्रेण निष्फला चात्र लीयते।।३४।।**

निरस्तोपाधिसम्बन्धे दूरीकृतमूलोपाधिरूपाहंकार-सम्बन्धे जीवे चिद्रूपे जीवन्मुक्ते जीवात्मनि या या क्रियास्थितिः क्रियायाः स्थितिः वर्तते सा सा क्रियास्थितिः केवलं प्रतीतिमात्रेण स्थित्वा निष्फला च सती अत्र अस्मिन्नेव स्वात्मनि लीयते लयं प्राप्नोति।

**गच्छंस्तिष्ठन् स्वपन् वापि न निष्कर्मास्ति कश्चन।**
**स्वभावो देहिनां कर्म ज्ञानिनां तत्तु निष्फलम्।।३५।।**

कश्चन यः कोऽपि जनः गच्छन् सन् तिष्ठन् सन् स्वपन् वा अपि सन् निष्कर्मा कर्माकरणशीलः नास्ति, कर्मशील एवास्ति, एवं देहिनां शरीरिणां कर्म स्वभावः, किन्तु ज्ञानिनां तु तत् कर्म निष्फलम् एवास्ति।

अत्र देहिनां ज्ञानिनां च वैलक्षण्यवर्णनात् व्यतिरेकालंकारः। अपि च 'स्वभावो देहिनां कर्म' इति पूर्वार्धं समर्थयतीति काव्यलिङ्गालङ्कारः। एवं व्यतिरेककाव्यलिङ्गयोः संसृष्टिः।

'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।

कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥' इति गीतोक्तिः।

**परिपूर्णमहानन्दभाविनः शुद्धचेतसः।**
**न भवेत् कर्मकार्पण्यं नानाभोगफलप्रदम्॥३६॥**

परिपूर्णमहानन्दभाविनः नित्यपरिपूर्णस्य परमशिवपरमानन्दस्य अनुभवं प्राप्तवान् एव सन् तस्य वर्तमानस्य शुद्धचेतसः निर्मलान्तःकरणस्य तस्य शिवयोगिनः नानाभोगफलप्रदं नानाविधानां वैषयिकाणां पापपुण्यादिरूपाणां कर्मणां फलदाने समर्थं कर्मकार्पण्यं कर्मणः कार्पण्यं पापपुण्यादि-कर्मणां पीडनं न भवेत् नैव स्यात्।

*॥इति क्रियानिष्पत्तिस्थलम्॥*

## (४१) भावनिष्पत्तिस्थलम्

**भावः प्रतीयमानोऽपि परकाये तु कल्पितः।**
**शुक्तो रजतवद् यस्माद् भावनिष्पत्तिमानयम्॥३७॥**

परकाये क्रियानिष्पत्तिमति चिद्रूपशरीरे प्रतीयमानः भावः अपि यस्मात् कारणात् शुक्तौ रजतवत् कल्पितः तस्मादेव अयं क्रियानिष्पत्तिमान् शिवयोगी तु भावनिष्पत्तिमान् इति कथितः। चिद्रूपशरीरात्मके शिवयोगिनि तावत् उत्पद्यमानाः भावाः नैव वास्तविकाः किन्तु शुक्तिरजतन्यायवत् आरोपिताः।

**भावेन नास्ति सम्बन्धः केवल-ज्ञानयोगिनः।**
**तथापि भावं कुर्वीत शिवे संसारमोचके॥३८॥**

केवलज्ञानयोगिनः केवलं शिवज्ञानयोगिनः यद्यपि भावेन सम्बन्धः नास्ति तथापि संसारमोचके संसारबन्धनमोचने समर्थवति शिवे विषये भावं कुर्वीत आचरेत्।

**परिपूर्ण-प्रबोधेऽपि भावं शम्भौ न वर्जयेत्।**
**भावो हि निहितस्तस्मिन् भवसागरतारकः।।३९।।**

परिपूर्णप्रबोधे परिपूर्ण-शिवानन्दस्वरूपात्मके शम्भौ परमेश्वरे विषये भावमपि न वर्जयेत् नैव त्यजेत्। यतः भावः हि मनोव्यापारविशेषस्तु तस्मिन् शिवे विषये निहितः संस्थापितः सन् भवसागरतारकः भवसागरोत्तारकः वर्तते हि, तस्मात् भावं नैव वर्जयेत्। अत्र उत्तरार्धः पूर्वार्धं समर्थयतीति काव्यलिङ्गालंकारः। भवसागरः इत्यत्र रूपकम्।

**निवर्त्य जन्मजं दुःखं भावः शैवो निवर्तते।**
**यथा काष्ठादिकं दग्ध्वा स्वयं शाम्यति पावकः।।४०।।**

जन्मजं दुःखं भवरोगरूपं निवर्त्य दूरीकृत्य शैवः भावः निवर्तते शान्तो भवति, यथा च पावकः काष्ठादिकं दग्ध्वा स्वयमेव शाम्यति। अत्र वाक्यार्थोपमालङ्कारः।

**प्रकाशिते शिवानन्दे तद्भावैः किं प्रयोजनम्?।**
**सिद्धे साध्ये चिरेणापि साधनैः किं प्रयोजनम्?।।४१।।**

भवरोगस्य निवृत्त्यनन्तरं शिवानन्दे नित्यब्रह्मानन्दे प्रकाशिते सति तद्भावैः तस्य भावैः शिवस्य भावैः किं प्रयोजनम्? न किमपि प्रयोजनम्। यथा च चिरेणापि बहुकालानन्तरं वापि साध्ये साधनीये कार्ये सिद्धे सति करगते सति साधनैः साधनभूतैः वस्तुभिः किं प्रयोजनम्? न किमपि प्रयोजनम्।

अत्रापि अर्थान्तरन्यासालङ्कारः। यथा साध्ये सिद्धे सति साधनं नापेक्ष्यते तथैव शिवानन्दे प्राप्ते सति भावः नापेक्ष्यते इति उपमाध्वनिः।

**एकीकृते शिवे भावे ज्ञानेन सह संयमी।**
**विस्मितात्मसमावेशः शिवभावे विभासते।।४२।।**

ज्ञानेन सह शिवज्ञानेन सह भावे शिवविषयकभावे शिवे एकीकृते सति तदा संयमी भावनिष्पत्तिमान् शिवयोगी विस्मितात्मसमावेशः आश्चर्यपरिपूर्णतया सङ्कल्पितस्य समावेशं प्राप्तस्य स्वस्वरूपस्य समावेशवान् सन् शिवभावे विभासते शिवोऽहमिति निरन्तरं प्रकाशते।

**न भावेन विना ज्ञानं न भावो ज्ञानमन्तरा।**
**मोक्षाय कारणं प्रोक्तं तस्मादुभयमाश्रयेत्।।४३।।**

भावेन विना ज्ञानं वृत्तिज्ञानं वा शिवज्ञानं वा न विद्यते, तथैव ज्ञानम् अन्तरा ज्ञानं विना भावः न विद्यते, अपि च उभयमपि मोक्षाय कारणं भवतीति प्रोक्तम् तस्मात् उभयमपि भावज्ञानद्वयमपि शिवयोगी मोक्षाय आश्रयेत्।

*।।इति भावनिष्पत्तिस्थलम्।।*

## (४२) ज्ञाननिष्पत्तिस्थलम्

**ज्ञानस्य व्यवहारेऽपि ज्ञेयाभावात् स्वभावतः।**
**स्वप्नवज्ज्ञान-निष्पत्त्या ज्ञाननिष्पन्न इत्यसौ।।४४।।**

ज्ञानस्य शिवज्ञानस्य व्यवहारे सत्यपि स्वभावतः ज्ञेयाभावात् ज्ञेयस्य वस्तुनः विषयस्य वा अभावात् असौ भावनिष्पन्नवान् शिवयोगी तावत् स्वप्नवत् ज्ञाननिष्पत्त्या ज्ञाननिष्पन्नः इति कथ्यते।

**स्वप्नजातं यथा ज्ञानं सह स्वार्थैर्निवर्तते।**
**तथात्मनि प्रकाशे तु ज्ञानं ज्ञेयं निवर्तते।।४५।।**

स्वप्नजातं ज्ञानं यथा स्वार्थैः सह स्वविषयैः सह निवर्तते नाशमाप्नोति तथैव आत्मनि प्रकाशे तु सति तदा जाग्रद्दशायाः ज्ञानेन सह ज्ञानं ज्ञेयम् इत्युभयमपि निवर्तते नाशम् एति। अत्र वाक्यार्थोपमालङ्कारः।

**परिपूर्णे महानन्दे परमाकाशलक्षणे।**
**शिवे विलीनचित्तस्य कुतो ज्ञेयान्तरे कथा?।।४६।।**

परिपूर्णे परिपूर्णरूपे महानन्दे शिवानन्दाख्ये महानन्दस्वरूपे, परमाकाशलक्षणे परमाकाशस्वरूपे शिवे परमेश्वरे विलीन-चित्तस्य-संलग्नमान-सिकस्थितेः शिवयोगिनः ज्ञेयान्तरे शिवं विना अन्यत्र ज्ञेयविषये कथा कुतः? नैवासक्तिः।

**अखण्डानन्द-संवित्तिस्वरूपं ब्रह्म केवलम्।**
**मिथ्या तदन्यदित्येषा स्थितिर्ज्ञानमिहोच्यते।।४७।।**

परशिवाख्यं ब्रह्म एव केवलम् अखण्डानन्द - संवित्तिस्वरूपं अखण्डानन्दात्मकम् अखण्डसंवित्त्यात्मकम् अथवा अखण्डज्ञानात्मकमेव वर्तते, तदन्यत् तस्मात् परशिवब्रह्मणः सकाशात् व्यतिरिक्तं सर्वमपि मिथ्या मृषा इति मिथ्यात्वेन जगज्जालमेतत् भासमानं वर्तते इत्येषा स्थितिः या सैव ज्ञानमिति इह उच्यते।

**सत्तात्मनानुवृत्तं यद्घटादिषु परं हि तत्।**
**व्यावर्तमाना मिथ्येति स्थितिर्ज्ञानमिहोच्यते।।४८।।**

सत्तात्मना सद्रूपब्रह्मणा परं परेषु भिन्नेषु घटादिषु (परं = परेषु) घटपटादिवस्तुषु अनुवृत्तं सत् अनुसृत्य वर्तमानं यत् नामरूपादिकं यद्वर्तते तत् हि सर्वं वस्तु मिथ्या इति ज्ञानेन व्यावर्तमाना निवार्यमाणा या स्थितिरस्ति सैव इह ज्ञानम् इत्युच्यते।

**अकारणमकार्यं यदशेषोपाधिवर्जितम्।**
**तद्ब्रह्म तदहञ्चेति निष्ठा ज्ञानमुदीर्यते।।४९।।**

अकारणम् अकार्यं कारणशून्यं कार्यशून्यं च यत्, अपि च अशेषोपाधिवर्जितं च यत् समस्तैरपि उपाधिभिः आश्रयवस्तुभिः रहितं च यत्, तत् ब्रह्म तदेव ब्रह्म नान्यत्, तत् अहं च-चिरात् कालादारभ्य इदमित्याकारेण भासमानं पाञ्चभौतिकं यत् अहम् इति वस्तु, एवमेव चराचरात्मकमपि विश्वम् - इति या निष्ठा तदेव ज्ञानमिति उदीर्यते कथ्यते। अर्थात् अहम् विश्वम् इत्येतत्सर्वमपि ब्रह्मैव इति ज्ञानदार्ढ्यमेव ज्ञानम्।

**ज्ञाताप्यहं ज्ञेयमिदमिति व्यवहृतिः कुतः?।**
**अभेदब्रह्मस्वारस्ये निरस्ताखिलवस्तुनि।।५०।।**

निरस्ताखिलवस्तुनि दूरीकृत-समस्तप्रापञ्चिक - वस्तु-जातात्मके, अभेदब्रह्मस्वारस्ये अभेदेन ब्रह्मणि सामरस्ये स्थिते सति, तदा अहमपि ज्ञाता, इदमपि ज्ञेयम् इति इत्यात्मिका व्यवहृतिः व्यवहारः कुतः स्यात्? न कुत्रापि स्यात्।

*।।इति ज्ञाननिष्पत्तिस्थलम्।।*

## (४३) पिण्डाकाशस्थलम्

**यथा पिण्डस्थ आकाशस्तथात्मा पूर्ण उच्यते।**
**एतदर्थविवेको यः पिण्डाकाशस्थलं विदुः।।५१।।**

यथा पिण्डस्थः पाञ्चभौतिके शरीरे वर्तमानः सन् आकाशः पूर्णः इति उच्यते तथैव आत्मा अपि पूर्णः इति उच्यते। एवं यस्य ज्ञाननिष्पत्तिसम्पन्नस्य शिवयोगिनः यः एतदर्थविवेकः एव तस्य शिवयोगिनः पिण्डाकाशस्थलम् इति विदुः जानन्ति।

**घटोपाधिर्यथाकाशः परिपूर्णः स्वरूपतः।**
**तथा पिण्डस्थितो ह्यात्मा परिपूर्णः प्रकाशते।।५२।।**

घटोपाधिः घटमाश्रित्य वर्तमानः आकाशः स्वरूपतः स्वस्य स्वरूपात् यथा परिपूर्णः वर्तते, तथैव पिण्डस्थितः शरीरमाश्रित्य वर्तमानः आत्मा हि परिपूर्णः सन्नेव प्रकाशते। वाक्यार्थोपमालङ्कारः।

**अन्तःस्थितं पराकाशं शिवमद्वैतलक्षणम्।**
**भावयेद्यः सुमनसा पिण्डाकाशः स उच्यते।।५३।।**

पराचिदाकाशस्वरूपम् अद्वैतलक्षणम् अद्वैत-स्वरूपकम् अद्वितीयं शिवं परमेश्वरं सुमनसा परिशुद्धेन निरालम्बेन वा मनसा यः भावयेत् ध्यायेत् स एव पिण्डाकाशः इत्युच्यते।

**शिवागारमिदं प्रोक्तं शरीरं बोधदीपितम्।**
**षट्त्रिंशत् तत्त्वघटितं सुमनः पद्मपीठकम्।।५४।।**

षट्त्रिंशत् तत्त्वघटितं शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वमयैः स्तम्भकुण्ड्यादिभिः निर्मितम् सुमनः पद्मपीठकं परिशुद्ध-हृत्कमलरूपपद्मपीठेन युक्तम् बोधदीपितं शिवज्ञानरूपदीपेन दीपितं प्रज्वालितं यत् एतादृशगुणयुक्तं शरीरमिदं तावत् शिवागारं शिवस्य वासगृहम् इति प्रोक्तम्।

**पराकाशस्वरूपेण प्रकाशः परमेश्वरः।**
**हृदाकाशगुहालीनो दृश्यतेऽन्तः शरीरिणाम्।।५५।।**

पराकाशस्वरूपेण श्रेष्ठतमचिदाकाशस्वरूपेण प्रकाशः प्रकाशमानः सन्

परमेश्वरः शरीरिणां मनुष्याणां हृदाकाश-गुहालीनः हृदयाकाशरूप-गुहामध्ये विलीनः सन् अन्तः योगिनाम् अन्तः योगिभिः स्वहृदयगुहायां दृश्यते अवलोक्यते ध्यानरूपेण चिन्त्यते।

**एतच्छिवपुरं प्रोक्तं सप्तधातुसमावृतम्।**
**अत्र हृत्पङ्कजं वेश्म सूक्ष्माम्बरमनोहरम्।।५६।।**

सप्तधातुसमावृतम् - रुधिरम्, मांसम्, मेदः, स्नायुः, अस्थि, मज्जा, शुक्रम् - इति सप्तधातुभिः समावृतम् एतत् शरीरमेव शिवपुरं शिवस्य पत्तनमिति प्रोक्तम्, अत्र हि शरीरे सूक्ष्माम्बरमनोहरं सूक्ष्मभूतेन अन्तराकाशेन सुन्दरं हृत्पङ्कजं हृदयकमलमेव वेश्म आवासस्थानम् इति प्रोक्तम्।

**तत्र सन्निहितं साक्षात् सच्चिदानन्दलक्षणम्।**
**नित्यसिद्धः प्रकाशात्मा जलस्थाकाशवच्छिवः।।५७।।**

तत्र हृत्कमले साक्षात् प्रत्यक्षस्वरूपकं सच्चिदानन्दलक्षणं सच्चिदानन्द-स्वरूपकं परब्रह्म सन्निहितं वर्तते। स एव नित्यसिद्धः प्रकाशात्मा प्रकाशस्वरूपकः शिवः जलस्थाकाशवत् जलस्य अन्तः प्रतिबिम्बरूपेण वर्तमानः आकाशः इव हृदयस्य मध्ये प्रकाशमानः सन् वर्तते।

शरीरे शिवपुरत्वसमारोपः, हृदि पङ्कजस्य समारोपःइत्यत्र रूपकम्। जलस्थाकाशवत् इत्यत्र उपमा, अपि च हृत्पङ्कजे वेश्मनः समारोपात् रूपकम्। उपमारूपकयोः संसृष्टिः।

**अन्तराकाशबिम्बस्थमशेषोपाधिवर्जितम् ।**
**घटाकाश इव च्छिन्नं भावयेच्चिन्मयं शिवम्।।५८।।**

अन्तराकाशबिम्बस्थम् विशालाकाशस्य प्रतिबिम्बभूते हृदयाकाशमध्ये वर्तमानम्, अशेषोपाधिवर्जितम् समस्तैरपि उपाधिभिः रहितम् घटाकाशः इव छिन्नं परिच्छिन्नरूपेण वर्तमानम् चिन्मयं चित्स्वरूपकं शिवं भावयेत् चिन्तयेत् ध्यायेत्। उपमालङ्कारः।

*।।इति पिण्डाकाशस्थलम्।।*

## (४४) बिन्द्वाकाशस्थलम्

**यथाकाशो विभुर्ज्ञेयः सर्वप्राण्युपरि स्थितः।**
**तथात्मेत्युपमानार्थं बिन्द्वाकाशस्थलं विदुः।।५९।।**

सर्वप्राण्युपरि सर्वेषां प्राणिनाम् उपरि स्थितः वर्तमानः आकाशः यथा विभुः सर्वव्यापकः इतिज्ञेयः तथैव अस्य पिण्डाकाशस्थलसम्पन्नस्य शिवयोगिनः आत्मा अपि सर्वप्राण्युपरि वर्तमानाकाशवत् विभुः सर्वव्यापकः सन् ज्ञेयः इति उपमानार्थमेव इत्यात्मक-तौलनिक-सादृश्यार्थमेव इदं बिन्द्वाकाशस्थलम् इति विदुः जानन्ति।

वाक्यार्थोपमालङ्कारः।

**यथैको वायुराख्यातः सर्वप्राणिगतो विभुः।**
**तथात्मा व्यापकः साक्षात् सर्वप्राणिगतः स्वयम्।।६०।।**

यथा सर्वप्राणिगतः सर्वेषु च प्राणिषु प्राणरूपेण वर्तमानः वायुः प्राणवायुः एकः सन्नपि विभुः सर्वव्यापकः इति आख्यातः उक्तः तथैव आत्मा अहमिति रूपेण साक्षात् स्वयमेव सर्वप्राणिगतः सन् व्यापकः सर्वव्यापकः इति आख्यातः समाख्यातः।

वाक्यार्थोपमालङ्कारः।

**यथा वह्निरमेयात्मा सर्वत्रैकोऽपि भासते।**
**तथा शम्भुः समस्तात्मा परिच्छेद-विवर्जितः।।६१।।**

यथा अमेयात्मा अपरिमित-स्वरूपवान् वह्निः अग्निः एकः सन्नपि सर्वत्र आसार-वैद्युत-पार्थिव-वाडव-कालाग्नि-इत्यादि-रूपेण विश्वव्यापकः सन् भासते प्रकाशते तथैव अमेयात्मा सर्वात्मा च शम्भुः परिच्छेदविवर्जितः सर्वत्र समस्तात्मा सर्वव्यापकः चिद्वह्निरूपः शम्भुः परमेश्वरः एक एव अपरिच्छिन्न-स्वरूपः सन् देव-दानव-मानव-तिर्यक् - स्थावरादि-रूप-चराचर-प्राणिषु अहमिति व्यापकत्वरूपेण व्यापकः सन् भासते विराजते। वाक्यार्थोपमालङ्कारः।

**सर्वेषां देहिनामन्तश्चित्ततोयं प्रकाशते।**
**तस्मिन् प्रतिफलत्यात्मा शिवो दर्पणवद्विभुः।।६२।।**

सर्वेषां देहिनामन्तः चित्ततोयं हृदयकमलम् दर्पणवत् प्रकाशते, तस्मिन् चित्तदर्पणे विभुः सर्वव्यापकः शिवः तावत् आत्मा सन् आत्मरूपेण प्रतिफलति प्रतिबिम्बत्वेन प्रकाशते।

**चित्ततोयं** – रूपकम्, दर्पणवत् - उपमा।

यथा देहिनां प्रतिबिम्बं दर्पणे दृश्यते तथैव चित्तदर्पणे शिवः आत्मरूपेण दृश्यते-इति उपमाध्वनिः।

**एको वशीकृतः संवित्प्रकाशात्मा परात्परः।**
**सर्वप्राणिगतो भाति तथापि विभुरुच्यते।।६३।।**

परात्परः विश्वोत्कृष्टः पराशक्त्यपेक्षया श्रेष्ठः संवित्प्रकाशात्मा चित्प्रकाशस्वरूपकः सन् अतएव वशीकृतः सन् परिमितस्वरूपवान् सन् भाति प्रकाशते, तथापि परिमितस्वरूपवान् सन्नपि स्वयं विभुः सर्वव्यापकः सर्वानुस्यूतत्वात् इत्युच्यते।

**एक एव यथा सूर्यस्तेजसा भाति सर्वगः।**
**तथात्मा शक्तिभेदेन शिवः सर्वगतो भवेत्।।६४।।**

यथा सूर्यः एकः एव सन् तेजसा स्वोष्ण-किरण-तेजः-पुञ्जेन सर्वगः सर्वत्र व्यापकत्व-रूपेण गमनशीलः सन् भाति प्रकाशते तथैव शिवः आत्मा शिवस्वरूपः आत्मा अपि शक्ति-भेदेन स्वकीयाभिः इच्छाज्ञान-क्रियादि-शक्तिभिः सर्वगतः सर्वव्यापकः भवेत्।

वाक्यार्थोपमालङ्कारः।

*।।इति बिन्द्वाकाशस्थलम्।।*

## (४५) महाकाशस्थलम्।।

**पिण्डाण्डस्थं यथाकाशं न भिन्नं तद्वदात्मनः।**
**अभिन्नः परमात्मेति महाकाशस्थलं विदुः।।६५।।**

पिण्डाण्डयोः स्थितम् पिण्डस्थम् अण्डस्थं च आकाशं यथा न भिन्नं वर्तते तद्वत् आत्मनः बिन्द्वाकाशसम्पन्नस्य शिवयोगिनः चैतन्यादपेक्षया परमात्मा अभिन्नः इति यत् अभिन्नत्वं तदेव महाकाशस्थलं विदुः।

**यथा न भिन्नमाकाशं घटेषु च मठेषु च।**
**तथाण्डेषु च पिण्डेषु स्थितो ह्यात्मा न भिद्यते।।६६।।**

घटेषु च मठेषु च वर्तमानमाकाशं यथा परस्परं न भिन्नं तथैव अण्डेषु च पिण्डेषु च स्थितः आत्मा न भिद्यते हि।

**अनिर्देश्यमनौपम्यमवाङ्मनसगोचरम् ।**
**सर्वतोमुखसम्पन्नं सत्तानन्दं चिदात्मकम्।।६७।।**

**कालातीतं कलातीतं क्रमयोगादिवर्जितम्।**
**स्वानुभूति-प्रमाणस्थं ज्योतिषामुदयस्थलम्।।६८।।**

**शिवाख्यं परमं ब्रह्म परमाकाशलक्षणम्।**
**लिङ्गमित्युच्यते सद्भिर्यद्विना न जगत्स्थितिः।।६९।।**

महालिङ्गमेव महाकाशमिति विवृणोति - आकाशशब्दः पुल्लिङ्गे नपुंसकलिङ्गे च वर्तते – 'पुंस्याकाशविहायसी' इत्यमरः।

अनिर्देश्यम्, अनौपम्यम्, निर्देशयितुं न शक्यम्, उपमारहितम्, अवाङ्मनसगोचरम् वाङ्मनसोः अगोचरम्, सर्वतोमुखसम्पन्नम्, सत्तानन्दात्मकम्, चिदात्मकम्, कालातीतम्-स्वानुभूतिप्रमाणस्थम्, सूर्यचन्द्रादिज्योतिषाम् उदयस्थानम्, परमाकाशस्वरूपकम् इत्येतादृशं शिवाख्यं परमं ब्रह्म सद्भिः लिङ्गम् इति उच्यते, एतद्विना जगतः स्थितिरेव नास्ति।

**परमाकाशमव्यक्तं प्रबोधानन्दलक्षणम्।**
**लिङ्गं ज्योतिर्मयं प्राहुर्लीयन्ते यत्र योगिनः।।७०।।**

यत्र महाकाशे योगिनः शिवयोगिनः लीयन्ते लयं प्राप्नुवन्ति तं परमाकाशं महाकाशमव्यक्तं मन्दभाग्यैः प्राप्तुमशक्यं प्रबोधानन्दलक्षणं शिवज्ञानानन्दस्वरूपकम् ज्योतिर्मयं ज्योतिः स्वरूपम् एव लिङ्गम् इति सन्तः प्राहुः।

**संविदेव पराकाष्ठा परमानन्दरूपिणी।**
**तामाहुः परमाकाशं मुनयो मुक्तसंशयाः।।७१।।**

परमानन्दरूपिणी संविन्नाम किल पराकाष्ठा भवति। एव चितिं मुक्तसंशयाः संशयरहिताः मुनयः परमाकाशम् इति आहुः।

**तरङ्गादि यथा सिन्धोः स्वरूपान्नातिरिच्यते।**
**तथा शिवाच्चिदाकाशाद् विश्वमेतन्न भिद्यते।।७२।।**

तरङ्गादि सिन्धोः समुद्रस्य स्वरूपात् सकाशात् यथा न अतिरिच्यते भिन्नं न भवति, तथैव चिदाकाशात् शिवात् चिदाकाशस्वरूपात् शिवात् एतत् विश्वं न भिद्यते न भिन्नं वर्तते। वाक्यार्थोपमालङ्कारः।

**यथा पुष्पपलाशादि वृक्षरूपान्न भिद्यते।**
**तथा शिवात् पराकाशाज्जगतो नास्ति भिन्नता।।७३।।**

पुष्पपलाशादि पुष्पं पलाशं पत्रम् इत्यादिकं यथा वृक्षरूपात् न भिद्यते तथैव पराकाशात् शिवात् जगतः प्रपञ्चस्य च भिन्नता नास्ति। वाक्यार्थोपमालङ्कारः।

**यथा ज्योतींषि भासन्ते भूताकाशे पृथक् पृथक्।**
**तथा भान्ति पराकाशे ब्रह्माण्डानि विशेषतः।।७४।।**

भूताकाशे महाकाशे ज्योतींषि नक्षत्राणि यथा पृथक् पृथक् भासन्ते तथैव पराकाशे पराकाशरूपे परात्मनि विशेषतः आधिक्येन ब्रह्माण्डानि भान्ति प्रकाशन्ते। वाक्यार्थोपमा।

**निरस्तोपाधि-सम्बन्धं निर्मलं संविदात्मकम्।**
**पराकाशं जगच्चित्रविलासालम्ब-भित्तिकम्।।७५।।**

निरस्तोपाधिसम्बन्धं उपाधिसम्बन्धरहितम्, निर्मलम् परिशुद्धम् संविदात्मकं संवित्स्वरूपकम् पराकाशं तावत् जगच्चित्र-विलासालम्ब-भित्तिकं-जगज्जालरूपस्य चित्र-विलासस्य भित्तिरूपमस्ति। जगच्चित्रविलास-इत्यत्र रूपकम्, भित्तिरिव भित्तिः इति उपमा, एवमुभयोः सङ्करः।।

*।।इति महाकाशस्थलम्।।*

## (४६) क्रियाप्रकाशस्थलम्

**शिवस्य परिपूर्णस्य चिदाकाशस्वरूपिणः।**
**आत्मत्वेनानुसन्धानात् क्रियाद्योतनवान् यमी।।७६।।**

चिदाकाशस्वरूपिणः चिदाकाशमहाकाशस्वरूपिणः परिपूर्णस्य शिवस्य आत्मत्वेन अनुसन्धानात् स्वात्मत्वेन स्वस्वरूपत्वेन अनुसन्धानात् ध्यानादि-स्वरूपानुसन्धानकरणात् यमी संयमी महाकाशस्वरूपवान् शिवयोगी क्रियाद्योतनवान् क्रियायाः द्योतनवान् क्रिया-प्रकाशस्थली इति कथ्यते।

**निष्कलङ्कचिदानन्दगगनोपमरूपिणः ।**
**शिवस्य परिपूर्णस्य वृत्तिश्चैतन्यरूपिणी।।७७।।**

निष्कलङ्कचिदानन्दगगनोपमरूपिणः निष्कलङ्कश्च असौ चिदानन्दश्च स एव गगनं तेन उपमा सदृशं रूपमस्य इति तस्य कलङ्करहितेन चिदानन्दरूपिणा गगनेन आकाशेन निष्कलङ्कचिदानन्दाकाशेन सह सदृशरूपवतः कलङ्करहितमहाकाशरूपवतः परिपूर्णस्य शिवस्य या वृत्तिः अहमस्मि इत्यादिरूपा क्रियारूपा या स्थितिः वर्तनम् सा तावत् चैतन्यरूपिणी शिववदेव चित्स्वरूपवती एव वर्तते। क्रियाविशिष्टज्ञानस्वरूपिणी एव वर्तते। चिदानन्दगगन-इत्यत्र रूपकम्, गगनोपम् - इत्यत्र उपमा, वृत्तौ चैतन्यरूपत्वसमारोपात् रूपकम् इति सङ्करालङ्कारः।

**निष्कलङ्के निराकारे नित्ये परमतेजसि।**
**विलीनचित्तवृत्तस्य तथा शक्तिः क्रियोच्यते।।७८।।**

निष्कलङ्के कलङ्करहिते निराकारे आकाररहिते नित्ये शाश्वतिके अविनाशिनि परमतेजसि परमं च तत् तेजश्च तस्मिन् परज्योतिःस्वरूपे परशिवतेजसि विलीन-चित्तवृत्तस्य विलीनं चित्तस्य वृत्तं यस्य तस्य संलग्नमनोव्यापारवतः शिवयोगिनः अनुसन्धानरूपा या क्रिया शक्तिः क्रियारूपिणी शक्तिः सा तावत् तथा तथारूपेण परशिवतेजःस्वरूपवती वर्तते इत्युच्यते।

**सर्वज्ञः सर्वकर्ता च सर्वगः परमेश्वरः।**
**तदैक्य-चिन्तया योगी तादृशात्मा प्रकाशते।।७९।।**

परमेश्वरः सर्वजगतां नियामकत्वात् परमेश्वरः स तु सर्वज्ञः सर्वं जानाति इति सर्वज्ञः, सर्वकर्ता सर्वं करोति इति सर्वकर्ता, सर्वगश्च सर्वत्र गच्छति इति सर्वगः-सर्वत्रगमनशीलः सर्वव्यापी च वर्तते इति ज्ञात्वा योगी

शिवयोगी तावत् तदैक्य-चिन्तया तस्मिन् ऐक्यं तदैक्यम् तस्य चिन्ता तया तस्मिन् परमेश्वरे समानसमरसभावेन वर्तमानस्य ऐक्यस्यैव चिन्तया ऐक्यरूपत्वध्यानेन योगी अपि स्वयं तादृशात्मा तादृशः आत्मा यस्य सः परमेश्वरसदृशस्वरूपवान् सन्नेव प्रकाशते।

**सर्वेन्द्रियाणां व्यापारे विद्यमानेऽपि संयमी।**
**प्रत्युन्मुखेन मनसा शिवं पश्यन् प्रमोदते।।८०।।**

सर्वेन्द्रियाणां सर्वाणि च तानि इन्द्रियाणि तेषाम् - सर्वेषां चक्षुरादि-ज्ञानेन्द्रियाणां व्यापारे दर्शनस्पर्शनादिरूपे व्यवहारे विद्यमाने सत्यपि संयमी जितेन्द्रियः शिवयोगी प्रत्युन्मुखेन उद्गतं मुखं यस्य तत् उन्मुखं प्रति उन्मुखं प्रत्युन्मुखं तेन पश्चिमचक्राभिमुखीभूतेन मनसा शिवं निरन्तरं पश्यन् अनुध्यायन् सन् प्रमोदते प्रकृष्ट-शिवानन्दानन्दी सन्नेव वर्तते। **प्रमोदते** – प्र+ मुद-हर्षे-लट्।

**कूटस्थमचलं प्राज्ञं गुणातीतं गुणोत्तरम्।**
**शिवतत्त्वं स्वरूपेण पश्यन् योगी प्रमोदते।।८१।।**

प्राज्ञं सर्वज्ञं कुशलिनम् गुणातीतं मायिक-सत्त्वादि-गुणशून्यं गुणान् अतीत्य वर्तमानम्, गुणोत्तरं गुणैः उत्तरम् ज्ञानवैराग्यादिगुणैः श्रेष्ठतमम्, कूटस्थं तुर्यसाक्षिकप्रत्यगात्मादि-संज्ञाविशिष्टम् अचलं निश्चलं शिवतत्त्वं स्वरूपेण स्वाभिन्नस्वरूपेण पश्यन् अनुसन्धानं कुर्वन् सन् योगी शिवयोगी प्रमोदते प्रकृष्टतया परमशिवानन्दे लोलुपो वर्तते।

**परात्मनि क्रिया सर्वा गन्धर्वनगरीमुखा।**
**प्रकाशत इति प्रोक्तं क्रियायास्तु प्रकाशनम्।।८२।।**

परात्मनि विषये परशिवस्वरूप-शिवयोगिविषये, सर्वा अपि क्रिया यतः यस्मात् कारणात् गन्धर्वनगरीमुखा व्योम्नि गन्धर्वनगर्याः मुखं यस्याः सा गन्धर्वनगरी-प्रारम्भः इव अर्थात् केवलं गन्धर्वनगरी इव प्रकाशते प्रकाशमाना वर्तते तस्मात् कारणात् क्रियायाः प्रकाशनं तु तथा इति प्रोक्तम्, यथा गन्धर्वनगरी केवलमस्थिरा तथैव शिवयोगिनि विषये सर्वा अपि क्रिया अस्थिरा एवेति क्रियाप्रकाशनस्थलमिति प्रोक्तम्।

*।।इति क्रियाप्रकाशस्थलम्।।*

## (४७) भावप्रकाशस्थलम्

**तरङ्गाद्या यथा सिन्धौ न भिद्यन्ते तथात्मनि।**
**भावो बुद्ध्यादयः सर्वे यत्तद् भावप्रकाशनम्।।८३।।**

तरङ्गाद्याः तरङ्गबुद्बुदफेनादयः सिन्धौ सागरे समुद्रस्थं-जले न भिद्यन्ते नैव भिन्नाः भवन्ति तथैव आत्मनि क्रियाप्रकाशसम्पन्ने शिवयोगिनि विषये बुद्ध्यादयः बुद्धिः इत्यादयः सर्वे भावः न भिद्यन्ते इति यत् तदेव भावप्रकाशनम् इति भवेत् तदेव भावप्रकाशनस्थलम्।

**शिव एव जगत्सर्वं शिवएवाहमित्यपि।**
**भावयन् परमो योगी भवदोषैर्न बाध्यते।।८४।।**

सर्वं जगदपि शिवः एव, अहमपि शिवः एव, इति भावयन् सन् परमः योगी परमशिवयोगी भवदोषैः सांसारिकादिदोषैः न बाध्यते नैव पीड्यतै नैव बाधितो भवति।

**शिवभावे स्थिरे जाते निर्लेपस्य महात्मनः।**
**ये ये भावाः समुत्पन्नास्ते ते शिवमयाः स्मृताः।।८५।।**

निर्लेपस्य महात्मनः विषयेषु निर्लिप्तस्य महाशिवयोगिनः शिवभावे स्थिरे जाते सति शिवभावे दृढत्वं प्राप्ते सति तस्य हृदये ये ये भावाः समुत्पन्नाः भवन्ति ते ते सर्वे अपि भावाः शिवमयाः एव इति स्मृताः कथिताः।

**अद्वितीय-शिवाकार-भावनाध्वस्त-कर्मणा ।**
**न किञ्चिद्भाव्यते साक्षात् शिवादन्यन्महात्मना।।८६।।**

गलिताज्ञानबन्धस्य अज्ञानस्य बन्धः अज्ञानबन्धः गलितः अज्ञानबन्धः यस्य तस्य अज्ञानबन्धनात् नितरां मुक्तस्य केवलात्मानुभाविनः केवलम् आत्मनः अनुभावः अस्मिन् अस्तीति तस्य केवलम् एकैकात्मानुभावं भावयतः शिवयोगिनः यत्र यत्र इन्द्रियासक्तिः भावनारूपा इन्द्रियाणाम् आसक्तिः सम्भवति यत्र तत्र सर्वत्र शिवात्मना भावनारूपा शिवात्मता एव अनुभवविषयीभवति।

**रागद्वेषादयोभावाः संसारक्लेशकारणम्।**
**तेषामुपरमो यत्र तत्र भावः शिवात्मकः।।८८।।**

रागद्वेषादयः रागःद्वेषः इत्यादयः ये भावाः सन्ति ते तु भावाः संसारक्लेशकारणं संसारक्लेशस्य संसारदुःखस्य कारणं भवन्ति, यदि च, यत्र यस्मिन् शिवयोगिनि तेषां रागद्वेषादिभावानाम् संसारकारणीभूतानाम् उपरमः नाशः दूरीकरणं वर्तते तत्र तस्मिन् शिवयोगिनि यः भावः अस्ति सः शिवात्मकः एव भवति।

**यथा सूर्यसमाक्रान्तौ न शक्नोति तमः सदा।**
**तथा प्रकाशमात्मानं नाविद्याक्रामति स्वयम्।।८९।।**

तमः अन्धकारः सूर्यसमाक्रान्तौ विषये सूर्यस्य समाक्रान्तिः तस्याः विषये सूर्यसमाक्रान्तिविषये सूर्यमावरितुं सदा सदाकाले यथा न शक्नोति नैव समर्थं भवति, तथा प्रकाशं स्वच्छप्रकाशरूपम् आत्मानं शिवयोगिनम् अविद्या अज्ञानरूपं तमः स्वयं न आक्रामति नैव आक्रमितुं शक्नोति।

**शक्नोति** – शक्लृ - शक्तौ, लट्।

**आक्रामति** – आ + क्रम - लट्।

**।।इति भावप्रकाशस्थलम्।।**

## (४८) ज्ञानप्रकाशस्थलम्

**मुख्यार्थेऽसम्भवे जाते लक्षणायोगसंश्रयात्।**
**तज्ज्ञानयोजनं यत्तदुक्तं ज्ञानप्रकाशनम्।।९०।।**

मुख्यार्थे मुख्यश्चासौ अर्थश्च तस्मिन् मुख्यार्थे वाच्यार्थे असम्भवे जाते सति अन्वयानुपपत्तौ सत्यां लक्षणायोगसंश्रयात् लक्षणायाः योगः तस्य संश्रयः तस्मात् लक्षणाव्यापार-प्राप्तस्यार्थस्य स्वीकारात् तज्ज्ञानयोजनं तयोः ज्ञानं तज्ज्ञानं तस्य योजनं तयोः अङ्गलिङ्गयोः ज्ञानद्वयस्य समानसमरसभावेन आयोजनं यदस्ति तत् तस्य भाव-प्रभाव-प्रकाशसम्पन्नस्य शिवयोगिनः ज्ञानप्रकाशनम् इत्युक्तम्।

शब्दस्य व्यापारः-द्विविधः अभिधा लक्षणा चेति। अभिधा एव मुख्यव्यापारः। मुख्य-व्यापारद्वारा यः अर्थः सम्भवति सः मुख्यार्थः। अस्य सङ्केतितार्थः इत्यपि अभिधानान्तरम्। सङ्केतो नाम 'अस्य शब्दस्य अयमर्थः'

इति ईश्वरसङ्कल्पः। वाक्यार्थे यदि अन्वयः अनुपपद्यते अन्वयस्य बाधः भवति सः मुख्यार्थ-बाधः। अनन्तरम् अर्थस्य अन्वयसिद्धये मुख्यार्थभिन्नः अन्यः अर्थः स्वीकर्तव्यः। तदा तस्मिन् शब्दे द्वितीयार्थप्रतीतौ यः व्यापारः प्रवर्तते सः लक्षणाव्यापारः, स च अर्थस्तु लक्ष्यार्थः।

उदाहरणार्थम् – 'गङ्गायां घोषः' इत्यत्र वाक्ये गङ्गाशब्दस्य प्रवाहः इत्यर्थः मुख्यः अथवा वाच्यः। किन्तु प्रवाहे घोषस्य असम्भवात् मुख्यार्थस्य बाधः। तदा घोषस्य उपस्थितिस्थिरीकरणार्थं तीररूपः अर्थः स्वीक्रियते। अयमेव लक्ष्यार्थः अत्र व्यापारस्तु लक्षणा। तदा गङ्गातीरे घोषः इति लक्ष्यार्थसंयोजनरूपः अन्वयोपपत्तिकः अर्थः।

एवमेव प्रकृते – अङ्गलिङ्गयोः सामरस्यविषये अस्य व्यापारद्वयस्य अर्थद्वयस्य च समन्वयः एवं संक्षिप्ततया अवगन्तव्यः – यथा च –

लिङ्गं सर्वज्ञत्व - सर्वकर्तृत्व - सर्वशक्तत्वविशिष्टम्, अङ्गं तु अल्पज्ञत्व - अल्पकर्तृत्व - अल्पशक्तत्वविशिष्टम्। स्थिते चैवं उभयोर्लिङ्गाङ्गयोः सामरस्यभावत्वं नैव सङ्गच्छते इति मुख्यार्थस्य बाधः। तदा सामरस्य-सिद्ध्यर्थम् उभयोः-समरसता आवश्यकी। सा च दीक्षया सङ्गच्छते। यथा अङ्गे लिङ्गस्य गुणानां संसर्गस्तु दीक्षा-शिक्षा-ज्ञानबोधादिद्वारा एव सम्भवनीयः। एवं रीत्या अङ्गे वर्तमानस्य नैजगुणरूपमुख्यार्थस्य बाधात् लिङ्गाङ्गयोः सामरस्यस्य अवश्यकर्तव्यत्वाच्च अङ्गे लिङ्गगुणानां समावेशस्तु लक्षणया एवेति वेदान्तिनामभिप्रायः। अतः अल्पज्ञत्व - अल्पकर्तृत्व - अल्पशक्तत्वरूपाणां गुणानां बाधात् सर्वज्ञत्व - सर्वकर्तृत्व - सर्वशक्तत्व रूपलिङ्गगुणानां आयोजनेनैव उभयोः समरसत्व-प्राप्तिरिति संक्षिप्तः अभिप्रायः।

एवं च लिङ्गाङ्गयोः भिन्न-भिन्न - शक्तिमत्त्वविशिष्टयोः सामरस्य-रूपमुख्यार्थस्य बाधात् अन्वयानुपपत्तौ जातायां सत्यां, लिङ्गगुणविशिष्टस्यैव अङ्गस्य लिङ्गे सामरस्यप्राप्तेः एव कारणात् लिङ्गगुणसम्पन्नेन अङ्गेन सामरस्यप्राप्तेः अर्हत्वाच्च, लिङ्गाङ्गयोः समानगुणविशिष्टत्वात् समानगुणस्य अवाप्तिः, तद्द्वारा उभयोः सामरस्य-ज्ञानस्य दृढता इत्यर्थस्य समन्वयः। एतादृशस्य उभयनिष्ठ-समानरसस्य ज्ञानयोजनमेव ज्ञानप्रकाशनम् - इति

संक्षेपः। अयमेव अभिप्रायः शिवाद्वैतदर्पणे एवं निरूपितः– 'अत्र तु सूक्ष्म-स्थूल-प्रपञ्चाकार-शक्तिविशिष्ट-चैतन्यैकत्वलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्, तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोध परिहारासम्भवात् अजहल्लक्षणा न संगच्छते। तस्माज्जहदजहल्लक्षणयैव महावाक्यार्थबोधः। तथा च गुरुचरणैः –

'एकात्मकत्वाज्जहती न सम्भवेत्
तथाऽजहल्लक्षणताविरोधतः।
सोऽयं पदार्थाविव भागलक्षणा
युज्येत तत्त्वम्पदयोरदोषतः।।'

इति महावाक्यार्थ-बोधने जहदजहल्लक्षणैव स्वीकृता।' इति चतुर्थ-परिच्छेदे समन्वयः कृतः।

विषयस्यास्य विवरणस्य बहुविस्तृत्वात् अत्रैव विरम्यते।

**मुक्तस्य ज्ञानसम्बन्धो ज्ञेयाभावः स्वभावतः।**
**उपाधिसहितं ज्ञानं न भेदमतिवर्तते।।९१।।**

मुक्तस्य परमुक्तस्य ज्ञानस्य सम्बन्धः ज्ञानसम्बन्धः लक्षणार्थकस्य ज्ञानस्य सम्बन्धः तावत् स्वभावतः स्वभावादेव ज्ञेयाभावः ज्ञेयस्य अभावः आत्माश्रयादिदोषराहित्येन ज्ञेयशून्यः अथवा वेद्यशून्यः भवति। किन्तु उपाधिसहितम् उपाधिना सहितं ज्ञानं तावत् अर्थात् मुख्यार्थभूतलिङ्गाङ्गोपाधिविशिष्टं ज्ञानं तु तस्य परमुक्तस्य भेदं न अतिवर्तते भेदमतिक्रम्य न वर्तते, अर्थात् उपाधिनाशेनैव ज्ञानसामरस्यं भेदसत्त्वात्।

**ज्ञानमित्युच्यते सद्भिः परिच्छेदोऽपि वस्तुनः।**
**परात्मन्यपरिच्छेदे कुतो ज्ञानस्य सम्भवः।।९२।।**

वस्तुतः लिङ्गाङ्गरूपवस्तुनः परिच्छेदः अपि परिच्छिन्नत्वमपि खण्डित्वं वापि ज्ञानं द्वैतज्ञानमिति सद्भिः समीचीनविद्वद्भिः उच्यते। किन्तु अपरिच्छेदे अखण्डिते परात्मनि निरुपाधिके महाचैतन्ये ज्ञानस्य द्वैतज्ञानस्य सम्भवः कुतः? द्वैतज्ञानस्य सम्भवः एव नास्ति।

**ज्ञानस्याविषये तत्त्वे शिवाख्ये चित्सुखात्मनि।**
**आत्मैकत्वानुसन्धानं ज्ञानमित्युच्यते बुधैः।।९३।।**

ज्ञानस्य स्वप्रकाशत्वात् स्वातिरिक्तस्य संविदन्तरस्य अविषये अगोचरे अथवा अविषयगोचरीभूते चित्सुखात्मनि चिदानन्दस्वरूपे शिवाख्ये तत्त्वे तत्त्वभूते वस्तुनि आत्मैकत्वानुसन्धानम् आत्मनः ऐकत्वम् आत्मैकत्वम् तस्य आत्मैकत्वस्य अनुसन्धानम् स्वात्मनः एकत्वस्य अनुसन्धानं तावत् ज्ञानम् इति बुधैः उच्यते। ज्ञानस्यैव केवलं विषयीभूते शिवतत्त्वे आत्मैकत्वस्य अनुसन्धानमेव ज्ञानमिति भावः।

**अपरिच्छिन्नमानन्दं सत्ताकारं जगन्मयम्।**
**ब्रह्मेति लक्षणं ज्ञानं ब्रह्मज्ञानमिहोच्यते।।९४।।**

अपरिच्छिन्नं परिच्छिन्नरहितम् अखण्डम् आनन्दम् आनन्दस्वरूपं सत्ताकारं सतः भावः सत्ता सत्ता एव आकारः यस्य तत् सत्ताकारात्मकम् जगन्मयं जगत्स्वरूपात्मकं ब्रह्म इति लक्षणं लक्षणात्मकं यत् ज्ञानं तदेव इह ब्रह्मज्ञानम् - इत्युच्यते।

**ब्रह्मज्ञाने समुत्पन्ने विश्वोपाधिविवर्जिते।**
**सर्वं संविन्मयं भाति तदन्यन्नैव दृश्यते।।९५।।**

विश्वोपाधिविवर्जिते विश्वस्य उपाधिः विश्वोपाधिः तेन विवर्जितं यत् तस्मिन् समस्तेन विश्वोपाधिना शून्ये ब्रह्मज्ञाने ब्रह्मणः ज्ञाने समुत्पन्ने सति, सर्वं विश्वमपि संविन्मयमेव चिच्छक्ति-मयत्वेनैव भाति प्रकाशते, किन्तु तदन्यत् तस्मात् अन्यत् शिवशक्तिद्वयात् अन्यत् शिवशक्त्योः अविनाभावरूपत्वात् तदन्यत् ब्रह्मातिरिक्तं वस्तु नैव दृश्यते।

**तस्मादद्वैत विज्ञानमपवर्गस्य कारणम्।**
**भावयन् सततं योगी संसारेण न लिप्यते।।९६।।**

तस्मात् कारणात् अपवर्गस्य लिङ्गाङ्ग-सामरस्यरूपमोक्षस्य कारणं तु अद्वैत-विज्ञानम् अद्वैतभावस्य परिज्ञानमेवास्ति इति सततं निरन्तरं भावयन् योगी शिवयोगसम्पन्नः संसारेण न लिप्यते संसारलेपसम्पर्क-रहितः सन्नेव भवति। शिवाद्वैतविज्ञानमेव मोक्षकारणमिति भावयतः नैव संसारसम्बन्धः।

**नित्ये निर्मलसत्त्वयोगिषु परे निर्वासने निष्कले**
**सर्वातीतपदे चराचरमये सत्तात्मनि ज्योतिषि।**

**संविद्व्योम्नि शिवे विलीनहृदयस्तद्भेदवैमुख्यतः**
**साक्षात्सर्वगतो विभाति विगलद्विश्वः स्वयं संयमी।।९७।।**

नित्ये शाश्वतिके निर्मलसत्त्वयोगिषु निर्मलं च तत् सत्त्वं च निर्मलसत्त्वं तस्य योगः अस्ति येषु तेषु परिशुद्ध-सत्त्वगुण-वत्सु योगिषु मध्ये परे प्रधानत्वेन श्रेष्ठत्वेन वर्तमाने, निर्वासने वेद्यस्य वस्तुनः वासनालेशेनापि रहिते, निष्कले कलारहिते निरवयवे, सर्वातीतपदे सर्वैः अतीतं पदं यस्य तस्मिन् सर्वमपि उत्तीर्य उत्कृष्ट-स्थानवर्तिनि, चराचरमये चराचरप्रपञ्चस्य निमित्तोपादानकारणीभूते चित्क्रियालक्षणे चिदम्बर-शक्तिस्वरूपे, सत्तात्मनि पारमार्थिक-सत्तास्वरूपवति, ज्योतिषि प्रकाशविशेषविशिष्टे ज्योतिर्वस्तुनि भासमाने शिवे, संविद्व्योम्नि संविदाकाशरूपपरशिवे विलीनहृदयः विलीनं हृदयं यस्य सः अविनाभावेन संसक्तहृदयः सन् तद्भेदवैमुख्यतः तस्मिन् भेदः तद्भेदः तत्र वैमुख्यात् शिवेन साकं भेदभावस्य नितरां रहितत्वात् कारणात् सर्वगतः विश्वव्यापकत्वेन सर्वत्र सच्चरणशीलः सन् संयमी जितेन्द्रियः शिवयोगी विगलद्विश्वः सन् विगलत् विश्वं येन सः दूरीकृतविश्वभेदविभवः सन् सोयं साक्षात् प्रत्यक्षरूपेण विभाति विशेषतया प्रकाशते। शिवयोगी शिवाद्वैतभावनापरिपूर्ण - हृदयः सन् सर्वत्र शिवस्वरूपमेव भावयन् स्वच्छन्दतया लोकोद्धारार्थं सञ्चरन् वर्तते।

*इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना*
*रेणुकाचार्येण विरचिते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ*
*शरणस्थलविषयद्वादशविधलिङ्गप्रसङ्गो नाम*
*।।एकोनविंशः परिच्छेदः।।*



# ।।विंशः परिच्छेदः।।

## ।।ऐक्यस्थलम्।।

### ।।अगस्त्य उवाच।।

**स्थलभेदास्त्वया प्रोक्ताः शरणस्थलसंश्रिताः।**
**ऐक्य-स्थलगतान् ब्रूहि स्थलभेदान् गणेन्द्र मे।।१।।**

हे गणेन्द्र! त्वया शरणस्थलसंश्रिताः शरणस्थलम् आश्रित्य वर्तमानाः स्थलभेदाः स्थलस्य अवान्तरभेदाः प्रोक्ताः, इदानीं ऐक्यस्थलगतान् ऐक्यस्थलमाश्रित्य वर्तमानान् स्थलभेदान् स्थलस्य अवान्तरभेदान् मे ब्रूहि कथय। **ब्रूहि** – ब्रूञ् – व्यक्तायां वाचि, लोट्।

### ।।श्रीरेणुक उवाच।।

**स्थलानां नवकं चैक्यस्थलेऽस्मिन् परिकीर्त्यते।**
**ऐक्यस्थले स्थलानां तन्नवकं परिकीर्त्यते।।२।।**

**तत्स्वीकृतप्रसादैक्य-स्थलमादौ प्रकीर्तितम्।**
**शिष्टौदनस्थलं चाथ चराचरलयस्थलम्।।३।।**

**भाण्डस्थलं ततः प्रोक्तं भाजनस्थलमुत्तमम्।**
**अङ्गालेपस्थलं पश्चात् स्वपराज्ञास्थलं ततः।।४।।**

**भावाभावविनाशं च ज्ञानशून्यस्थलं ततः।**
**तदेषां क्रमशो वक्ष्ये शृणु तापस लक्षणम्।।५।।**

स्वीकृतप्रसादैक्यस्थलम्, शिष्टौदनस्थलम्, चराचरलयस्थलम्, भाण्डस्थलम्, भाजनस्थलम्, अङ्गालेपस्थलम्, स्वपराज्ञस्थलम्, भावाभाव-लयस्थलम्, ज्ञानशून्यस्थलम् - इति नवानाम् अवान्तरस्थलानां लक्षणं क्रमशः कथ्यते, हे तापस! शृणु।

## (४९) स्वीकृतप्रसादिस्थलम्

**मुख्यार्थो लक्ष्यार्थश्च यत्र नास्ति चिदात्मनि।**
**विशृङ्खलतया तस्य प्रसादः स्वीकृतो भवेत्।।६।।**

चिदात्मनि चिदानन्दात्मके ज्ञानप्रकाशसम्पन्ने यत्र शिवयोगिनि, मुख्यार्थः जीवेश्वरयोः वियोगरूपः भेदरूपः मुख्यार्थः नास्ति, तथैव लक्षणार्थश्च निरुपाधिकयोः शिवात्मनोः तयोः नित्यः अवियोगरूपः अद्वैतरूपःलक्षणार्थश्च लक्षणया अवगम्यार्थः लक्ष्यार्थश्च नास्ति, तस्य तादृशोभयार्थरहितस्य शिव - योगिनः विशृङ्खलतया निर्गतशृङ्खलत्वेन निरङ्कुशत्वेन यः प्रसादः शिवस्य पूर्णज्ञानप्रसादः स्वीकृतः अङ्गीकृतः भवेत् सः स्वीकृतप्रसादः इति व्यपदिश्यते।।

**मातृमेय-प्रमाणादिव्यवहारे विहारिणीम्।**
**संवित्साक्षात्कृतिं लब्ध्वा योगी स्वात्मनि तिष्ठति।।७।।**

मातृमेय-प्रमाणादिव्यवहारे प्रमाता, प्रमेयम्, प्रमाणम्-इत्यादिरूपे व्यवहारे विहारिणीम् रममाणां संवित्साक्षात्कृतिं संविदः साक्षात्कृतिं पूर्णचिज्ज्ञानस्य साक्षात्कारं लब्ध्वा सम्प्राप्य योगी सम्यग् ज्ञान-प्रकाशसम्पन्नः शिवयोगी स्वात्मनि स्वीकृतप्रसादवति स्वस्वरूपे तिष्ठति शिवानन्दानन्दी सन् वर्तते।

**अद्वैत - बोधनिर्धूतभेदावेशस्य योगिनः।**
**साक्षात्कृत-महासंवित्प्रकाशस्य क्व बन्धनम्?।।८।।**

अद्वैतबोधनिर्धूतभेदावेशस्य अद्वैतस्य बोधः अद्वैतबोधः तेन अद्वैतबोधेन निर्धूतः भेदस्य आवेशः येन सः तस्य परिपूर्णशिवाद्वैतज्ञानेन सम्पूर्णतया दूरीकृतः अङ्गलिङ्गरूपयोः जीवेश्वरयोः भेदस्य आवेशः येन तादृशस्य योगिनः, अपि च साक्षात्कृतमहासंवित्प्रकाशस्य महासंविदः प्रकाशः साक्षात्कृतः येन सः तस्य प्रत्यक्षीकृत-निर्मलचित्प्रकाशस्य योगिनः शिवयोगिनः तावत् बन्धनं तमोमायामोहविद्यानृतात्मिकारूपमायाप्रपञ्चस्य अविद्यास्मितारागद्वेषाभिनिवेशरूपपञ्चक्लेशादिकस्य च कारणीभूतं यत् सांसारिकं बन्धनं तत् क्व? कुत्रापि कदापि नैव सम्भवति।

**चिदात्मनि शिवे न्यस्तं जगदेतच्चराचरम्।**
**ज्ञायते तन्मयं सर्वमग्नौ काष्ठादिकं यथा।।९।।**

अग्नौ न्यस्तं निक्षिप्तं काष्ठादिकं यथा तन्मयं तदग्निमयमेव ज्ञायते तथैव चिदात्मनि शिवे न्यस्तं निक्षिप्तं समरसं प्राप्तं चराचरं जगत् एतत् चराचरात्मकमेतत् सर्वमपि जगत् तन्मयं शिवमयमेव ज्ञायते दृश्यते। उपमालङ्कारः।

**न भाति पृथ्वी न जलं भाति न तेजो नैव मारुतः।**
**नाकाशो न परं तत्त्वं शिवे दृष्टे चिदात्मनि।।१०।।**

चिदात्मनि चिदानन्दस्वरूपे शिवे दृष्टे सति साक्षात्काररूपेण शिवानन्दानुभवविषयीभूते सति तदा पृथिवी भिन्ना न भाति, जलं भिन्नं न भाति, तेजः भिन्नं न भाति, मारुतः भिन्नः न भाति, आकाशः भिन्नः न भाति, अपि च परं तत्त्वं अपि भिन्नं न भाति, सर्वस्यापि तत्कारणीभूत-शिवात्मकत्वात्।

**ज्योतिर्लिङ्गे चिदाकारे ज्वलत्यन्तर्निरन्तरम्।**
**विलीनं निखिलं तत्त्वं पश्यन् योगी न लिप्यते।।११।।**

अन्तः हृदयाष्टदलकमलमध्ये निरन्तरम् अविरलं यथा स्यात् तथा चिदाकारे चिद्रूपे ज्योतिर्लिङ्गे ज्योतिःस्वरूपे महालिङ्गे ज्वलति सति प्रकाशमाने सति, तस्मिन् ज्योतिःस्वरूपे महालिङ्गे योगी शिवयोगी निखिलं तत्त्वं शिवादिभूम्यन्तं समस्तमपि तत्त्वजातं विलीनं सत् लयीभूतं सत् पश्यन् सन् अनुभवविषयीकुर्वन् सन् न लिप्यते, तनुकरणभुवनभोगात्मक-षट्त्रिंशत् तत्त्वैः न लिप्तो भवति।

**अन्तर्मुखेन मनसा स्वात्मज्योतिषि चिन्मये।**
**सर्वानप्यर्थविषयान् जुह्वन् योगी प्रमोदते।।१२।।**

अन्तर्मुखेन मनसा हृदन्तर्लीनेन मनसा चिन्मये स्वात्मज्योतिषि स्वस्वरूपवह्निवत् प्रकाशरूपे ज्योतिर्लिंगे सर्वानपि अर्थविषयान् समस्तानपि पदार्थान् तद्विषयांश्च जुह्वन् होमकार्यवत् तादात्म्येन समर्पयन् योगी शिवयोगी प्रमोदते प्रकृष्टतया शिवानन्दानन्दी भवति। यथा कश्चन ऋत्विक् होमद्रव्याणि

अग्नौ जुहोति तथैव शिवयोगी स्वात्मज्योतिषि सर्वान् पदार्थान् विषयादीन् हत्वा प्रमोदते। अत्र वाक्यार्थोपमालङ्कारः।

**सच्चिदानन्दजलधौ शिवे स्वात्मनि निर्मलः।**
**समर्प्य सकलान् भुङ्क्ते विषयान् तत्प्रसादतः।।१३।।**

निर्मलः परिशुद्धमनस्कः सन् शिवयोगी सच्चिदानन्दजलधौ सच्चिदानन्दाः एव जलधिः यस्य तस्मिन् अथवा सच्चिदानन्दानाम् आश्रयीभूतत्वात् समुद्ररूपे स्वात्मनि स्वप्रकाशात्मनि शिवे सकलान् विषयान् समस्तानपि ज्ञानेन्द्रियाद्रिसम्बन्धिनः शब्दादिपदार्थान् समर्प्य अर्पयित्वा तत्प्रसादतः तत्प्रसादरूपेण तत्प्रसादजातं भुङ्क्ते आस्वादयन् आनन्दीभवति। आनन्दजलधिः इत्यत्र रूपकम्।

*।।इति स्वीकृतप्रसादिस्थलम्।।*

## (५०) शिष्टौदनस्थलम्

**प्रकाशते या सर्वेषां माया सैवौदनाकृतिः।**
**लीयते तत्र चिल्लिङ्गे शिष्टं तत्परिकीर्तितम्।।१४।।**

या माया अधोमाया या अपि च या माया सर्वेषां सर्वत्र इति यावत् प्रकाशते सा एव ओदनाकृतिः ओदनमेव आकृतिः यस्याः सा ओदनाकृतिः इति व्यवह्रियते। तदेव कलादिक्षित्यन्तत्रिंशत् तत्त्वात्मकमायातत्त्वमेव यत्र चिल्लिङ्गे ज्ञानलिङ्गे लीयते लीनतां प्राप्नोति तदेव तत्र स्वीकृतप्रसादिविषये शिष्टम् शिष्टौदनम् इति परिकीर्तितम्।

सर्वप्रकाशिकी माया एव ओदनस्वरूपिणी, एतादृशी माया यत्र चिच्छक्तिविशिष्टमहालिङ्गे लीयते, तत् तादृशमहालिङ्गस्वरूपमेव शिष्टं शिष्टौदनमिति कथ्यते।

**जगदङ्गे परिग्रस्ते मायापाशविजृम्भिते।**
**स्वात्मज्योतिषि बोधेन तदेकमवशिष्यते।।१५।।**

मायापाशविजृम्भिते मायायाः पाशेन विजृम्भिते कलादिक्षित्यन्तत्रिंशत् तत्त्वात्मक-मायापाशबिद्धे-जगदङ्गे जगत् एव अङ्गं यस्य तस्मिन्

विश्वशरीरवति स्वात्मज्योतिषि स्वस्वरूपज्ञानज्योतिषि स्वस्वरूपज्ञाने बोधेन स्वात्मज्ञानेन परिग्रस्ते सति समाक्रान्ते सति तत् तन्मायातत्त्वम् एकमेव अवशिष्यते स्वस्वरूपप्रकाशे अवशिष्यते।

**अखण्डसच्चिदानन्दपरब्रह्मस्वरूपिणः ।**
**जीवन्मुक्तस्य धीरस्य माया कैङ्कर्यवादिनी।।१६।।**

अखण्डसच्चिदानन्दपरब्रह्मरूपिणः अखण्डः सच्चिदानन्दः यस्मिन् तत् अखण्डसच्चिदानन्दं तत् च परब्रह्म च तदेव स्वरूपं यस्य तस्य अविच्छिन्नसच्चिदानन्दात्मकपरब्रह्मस्वरूपिणः जीवन्मुक्तस्य धीरस्य जितेन्द्रियस्य शिवयोगिनः विषये तावत् माया केवलं कैङ्कर्यवादिनी कैङ्कर्यं वादयति इति दासीभावं कथयन्ती सती वर्तते दासीभावमापन्ना सती सेवते।

**विश्वसम्मोहिनी माया बहुशक्तिनिरङ्कुशा।**
**शिवैकत्वमुपेतस्य न पुरः स्थातुमीहते।।१७।।**

विश्वसम्मोहिनी विश्वं सम्मोहयति इति - विश्वस्य मोहकारिणी मोहसम्पादिका या माया सा बहुशक्तिनिरङ्कुशा बहुशक्तिभिः स्वकीयाभिः बहुविधाभिः शक्तिभिः कारणात् अङ्कुशरहिता सत्यपि शिवैकत्वम् शिवेन सह शिवेन वा एकत्वं समानसमरसभावम् उपेतस्य प्राप्तस्य शिवयोगिनः पुरः अग्रभागे पुरोभागे स्थातुं मोहकत्वरूपेण स्थातुं न ईहते न इच्छति नैव समर्था वर्तते।

**ईहते** – ईह-चेष्टायाम्, लट्।

**ज्योतिर्लिङ्गे चिदाकारे निमग्नेन महात्मना।**
**भुज्यमाना यथायोगं नश्यन्ति विषयाः स्वतः।।१८।।**

चिदाकारे चित्स्वरूपके ज्योतिर्लिङ्गे शिवलिङ्गे निमग्नेन लीनमनस्केन महात्मना शिवयोगिना यथायोगं योगमनुसृत्य यथास्यात् तथा सन्दर्भानुसारम् अथवा योगमनतिक्रम्य यथा स्यात् तथा यथायोगम् प्राप्तसमयानुसारेण भुज्यमानाः सन्तः विषयाः शब्दादिविषयाः स्वतः एव स्वयमेव नश्यन्ति नाशं प्राप्नुवन्ति, न किमपि अन्यथा कर्तुं समर्थाः, प्रत्युत तस्मिन्नेव शिवयोगिनि लीनत्वमेव प्राप्नुवन्ति।

**शब्दादयोऽपि विषया भुज्यमानास्तदिन्द्रियैः।**
**आत्मन्येव विलीयन्ते सरितः सागरे यथा।।१९।।**

शब्दादयः अपि विषयाः शब्दस्पर्शादिपञ्चविषयाः तदिन्द्रियैः तेषां तेषाम् इन्द्रियैः द्वारा भुज्यमानाः सन्तः अनुभूयमानाः उपभुज्यमानाः सन्तः सागरे समुद्रे यथा सरितः नद्यः स्वस्वभावतया विलीयन्ते लयमैक्यं प्राप्नुवन्ति तथैव तेऽपि सर्वे विषयाः आत्मन्येव अन्ते सहजतया स्वात्मनि स्वरूपेणैव विलीयन्ते विलयं ऐक्यं प्राप्नुवन्ति।

उपमालङ्कारः।

**अर्थजातमशेषं तु ग्रसन् योगी प्रशाम्यति।**
**स्वात्मनैवास्थितो भानुस्तेजोजालमशेषतः।।२०।।**

तेजोजालं तेजसां जालं स्वकीयकिरणसमूहं स्वात्मना एव स्वस्वरूपेणैव अशेषतः निःशेषं यथा स्यात् तथा ग्रसन् सन् उपसंहरन् सन् आस्थितः प्रकाशमानः सन् वर्तमानः भानुरिव सूर्यइव योगी शिवयोगी अर्थजातं तु पदार्थसमूहं तावत् अशेषं निःशेषं यथा स्यात् तथा अशेषतः ग्रसन् सन् स्वस्वरूपेण अनुभवविषयीकुर्वन् सन् स्वात्मना एव आस्थितः स्वस्वरूपेणैव शिवानन्दानन्दरूपेण वर्तमानः सन् प्रशाम्यति प्रशान्तचित्तः स्वस्थो वर्तते।

अत्र वाक्यार्थोपमालङ्कारः।

*।।इति शिष्टौदनस्थलम्।।*

## (५१) चराचरलयस्थलम्

**लिङ्गैक्ये तु समापन्ने चरणाचरणे गते।**
**निर्देही स भवेद्योगी चराचरविनाशकः।।२१।।**

चरणाचरणे चरणं च अचरणं च चरणाचरणे चरणं नाम सञ्चरणशीलता, अचरणं नाम सञ्चरणाशीलता, चरणाचरणयोः समाहारः चरणाचरणे चरणशीलस्य जगतः अचरणशीलस्यं च जगतः इत्युभयस्य जगतः गते व्यवहारे लिङ्गैक्ये महालिङ्गमध्ये तादात्म्ये तु समापन्ने सति प्राप्ते सति सः योगी

शिष्टौदनसम्पन्नः शिवयोगी तावत् निर्देही निर्गतः देहः यस्मिन् सः देहरहितः सन् भूत्वा चराचरविनाशकः जङ्गमस्थावरात्मक प्रपञ्चगतमलत्रयादि-शक्ति-विनाशकः सन् अत एव चराचरलयस्थानवान् भवेत्।

**अनाद्यविद्यामूला हि प्रतीतिर्जगतामियम्।**
**स्वात्मैकबोधात् तन्नाशे कुतो विश्वप्रकाशनम्?।।२२।।**

जगताम् इयं प्रतीतिः ईदृशी प्रतीतिः तावत् अनाद्यविद्यामूला अनादिः अविद्या एव मूलं यस्याः अनादिरूपया अविद्यया शक्त्या कल्पिता माया एव मूलं कारणं यस्याः तादृशी मूलकारणवती हि वर्तते, एतादृशी जगत्प्रतीतिः वर्तते, स्थिते चैवम् स्वात्मैकबोधात् स्वयम् आत्मा एव इति स्वात्मप्रधानीभूतं यत् ज्ञानं तस्य ज्ञानस्य बोधात् परिज्ञानात् तन्नाशे सति तादृशायाः तस्याः जगत्प्रतीतेः नाशे सति अथवा तादृशमलत्रयशक्तिनाशे सति विश्वप्रकाशनं विश्वस्य प्रकाशनं तावत् अनाद्यविद्यामूलजगत्प्रतीतिस्तु कुतः? कुत्र वा सम्भवेत्? न कुत्रापि सम्भवति।

**यथा मेघाः समुद्भूता विलीयन्ते नभःस्थले।**
**तथात्मनि विलीयन्ते विषयाः स्वानुभाविनः।।२३।।**

यथा मेघाः नभः स्थले आकाशे समुद्भूताः सन्तः पुनश्च नभः स्थले विलीयन्ते तथैव स्वानुभाविनः स्वस्वरूपानुभाविनः शिवयोगिनः विषयाः शब्दादिविषयाः आत्मनि स्वकीये चैतन्ये समुद्भूताः सन्तः पुनश्च आत्मन्येव विलीयन्ते।

वाक्यार्थोपमालङ्कारः।

**स्वप्ने दृष्टं यथा वस्तु प्रबोधे लयमश्नुते।**
**तथा सांसारिकं सर्वमात्मज्ञाने विनश्यति।।२४।।**

स्वप्ने दृष्टं वस्तु प्रबोधे सति जाग्रदवस्थायां सत्यां यथा लयम् अश्नुते अदृश्यत्वं प्राप्नोति तथैव सांसारिकं वस्तुजातं सर्वमपि आत्मज्ञाने प्राप्ते सति विनश्यति नष्टं भवति। वाक्यार्थोपमालङ्कारः।

**जाग्रत् – स्वप्नसुषुप्तिभ्यः परावस्थामुपेयुषः।**
**किं वा प्रमाणं? किं ज्ञेयं? किं वा ज्ञानस्य साधनम्?।।२५।।**

जाग्रत्स्वप्नसुषुप्तिभ्यः जाग्रत् च स्वप्नश्च सुषुप्तिश्च जाग्रत्स्वप्नसुषुप्तयः ताभ्यः जाग्रदवस्थायाः स्वप्नावस्थायाः सुषुप्त्यवस्थायाश्च अपेक्षया परावस्थाम् उपेयुषः तनुत्रयाश्रित-जाग्रत्-स्वप्नसुषुप्त्यवस्थातीतबोधात् सुलभ-सर्वोत्कृष्ट-तुरीयावस्थाम् प्राप्तस्य शिवयोगिनः किं वा प्रमाणमावश्यकम्? किं वाज्ञेयं वर्तते? ज्ञानस्य साधनं वा किं स्यात्? त्रिपुटीमयप्रपञ्चोत्तीर्णत्वात् कस्यापि आवश्यकत्वं दर्शनाद्यनुभवादिकं वा न स्यात्।

अवस्थाः तावत् - जाग्रदवस्था, स्वप्नावस्था, सुषुप्त्यवस्था, तुर्यावस्था, तुर्यातीतावस्था चेति पञ्च। तुर्यावस्था अथवा तुर्यातीतावस्था शिवयोगिनः परावस्था इति अत्र सूचिता। त्रिपुटित्वं तु ज्ञाता, ज्ञेयम्, ज्ञानञ्च।

**तुर्यातीतपदं यत्तद् दूरं वाङ्मनसाध्वनः।**
**अनुप्रविश्य तद्योगी न मुदो विश्वमीक्षते।।२६।।**

यत् तुर्यातीतपदं वर्तते, तत् वाङ्मनसाध्वनः, वाक् च मनश्च वाङ्मनसी तयोः अध्वनः वाचः अध्वनः मनसश्च अध्वनः दूरम् अर्थात् स्तुतेः ध्यानस्य च अविषयं वर्तते यत् तादृशं तुर्यातीतस्थानम् अनुप्रविश्य प्रवेशं कृत्वा तद्योगी तादृशतुर्यस्थानसम्पन्नवान् सम्पन्नवान् शिवयोगी तावत् भूयः पुनः पुनः विश्वं जगत् न ईक्षते नैव पश्यति।

**नान्यत् पश्यति योगीन्द्रो नान्यज्जानाति किञ्चन।**
**नान्यच्छृणोति सन्दृष्टे चिदानन्दमये शिवे।।२७।।**

चिदानन्दमये चिदानन्दात्मके शिवे परमेश्वरे संदृष्टे सति प्रत्यक्षीकृते सति योगीन्द्रः योगिश्रेष्ठः निजस्वरूपस्थः सन् अन्यत् स्वातिरिक्तम् अन्यत् रूपादिकं न पश्यति, तादृशं किञ्चन अन्यद्वस्तु न जानाति, अन्यत्किमपि शब्दादिकं नैव शृणोति।

**असदेव जगत्सर्वं सदिव प्रतिभासते।**
**ज्ञाते शिवे तदज्ञानं स्वरूपमुपपद्यते।।२८।।**

सर्वमपि जगत् असत् एव सत् शिवातिरिक्तं यत् शिवाज्ञानात् पूर्वं प्रतिभासते स्म, तथैव सदिव च प्रतिभासते स्म तत् तावत् अज्ञानम् यत् तत् शिवे ज्ञाते सति सच्चिदानन्द-स्वरूप-परशिवे साक्षात्कृते सति तदा नष्टं सत्

केवलं स्वरूपं कारणीभूतचिच्छक्तिस्वरूपमेव उपपद्यते प्राप्नोति।

*॥इति चराचरलयस्थलम्॥*

## (५२) भाण्डस्थलम्

**ब्रह्माण्डशतकोटीनां सर्गस्थितिलयान् प्रति।**
**स्थानभूतो विमर्शो यस्तद्भाण्डस्थलमुच्यते॥२९॥**

ब्रह्माण्डशतकोटीनां शतकोटिसंख्याकानां ब्रह्माण्डानामपि सर्गस्थितिलयान् सृष्टिस्थितिलयान् प्रति स्थानभूतः प्रधानाधारभूतः यः विमर्शः अस्ति अस्य चराचरमलविनाशकस्य शिवयोगिनः शब्दब्रह्मविचारविमर्शः अर्थात् शब्दब्रह्मविचाररूपपरिज्ञानं वर्तते तदेव भाण्डस्थलम् इत्युच्यते।

**विमर्शाख्या पराशक्तिर्विश्वोद्भासनकारिणी।**
**साक्षिणी सर्वभूतानां समिन्धे सर्वतोमुखी॥३०॥**

विमर्शाख्या पराशक्तिः षडध्वस्फाररूपशब्दार्थविचारपरत्वेन विमर्शाख्या पराशक्तिः शुद्धमाया विश्वोद्भासनकारिणी विश्वस्य उद्भासनकारिणी स्वकार्यरूपैः ज्ञानादिभिः विश्वप्रकाशिनी सती सर्वभूतानां सर्वेषां भूतानां सर्वेषामपि तत्त्वानां साक्षिणी साक्षीभूता सती सर्वतोमुखी च सती समिन्धे सम्यगेव प्रकाशते।

**समिन्धे**– सम् + ञिइन्धी - दीप्तौ, लट्।

इन्धे इन्धाते इन्धते - इत्यादि।

**विश्वं यत्र लयं याति विभात्यात्मा चिदाकृतिः।**
**सदानन्दमयः साक्षात् सा विमर्शमयी कला॥३१॥**

यत्र विमर्शमय्यां कलायां विश्वं लयं याति लयं गच्छति यत्र च चिदाकृतिः आत्मा सच्चिदानन्दात्मकः सदानन्दमयश्च आत्मा परमात्मा विभाति साक्षादेव प्रकाशते, सा विमर्शमयी कला विमर्शशक्तिरस्ति।

**पराहन्तासमावेश-परिपूर्ण – विमर्शवान्।**
**सर्वज्ञः सर्वगः साक्षी सर्वकर्ता महेश्वरः॥३२॥**

पराहन्ता-समावेश-परिपूर्ण-विमर्शवान् - पराहन्तायाः समावेशेन परिपूर्णं यः विमर्शः अस्ति यस्मिन् तादृशः शिवजीवयोः साधारणीभूतस्य पराहन्तारूपस्य आत्मतत्त्वस्य समावेशेन परिपूर्ण-विमर्शवान् सन् महेश्वरः परमेश्वरः स्वयं सर्वज्ञः, सर्वगः, साक्षी सर्वकर्मसाक्षी सर्वकर्ता च वर्तते।

**विश्वाधारमहासंवित्प्रकाशपरिपूरितम् ।**
**पराहन्तामयं प्राहुर्विमर्शं परमात्मनः।।३३।।**

परमात्मनः परमेश्वरस्य विमर्शं विमर्शनामकं ज्ञानविशेषम् विश्वाधार महासंवित्प्रकाशपरिपूरितं विश्वरूपायाः अविद्यालक्षणायाः अधोमयायाः आधारभूतम् परसंविद्रूपस्य शिवस्य यः महासंवित्प्रकाशः तेन परिपूर्णम् सन्तं, पराहंन्तामयं विश्वस्य सकलस्य पूर्ण-जीवनभूतपराहन्तामयोर्ध्वमायारूपं च सन्तं प्राहुः शिवाद्वैत-विद्या-पारङ्गताः कथयन्ति।

**विमर्शभाण्डविन्यस्तविश्वतत्त्वविजृम्भणः ।**
**अनन्यमुखसम्प्रेक्षी मुक्तः स्वात्मनि तिष्ठति।।३४।।**

मुक्तः मायापाशपटलनिर्मुक्तः शिवयोगी विमर्शभाण्डविन्यस्त-विश्व-तत्त्वविजृम्भणः सन् विमर्शः एव भाण्डं तस्मिन् विन्यस्तं विश्वमेव तत्त्वं तेन यद् विजृम्भणं यस्य सः विमर्शरूपे भाण्डे विन्यस्तेन निक्षिप्तेन शक्त्यादिपृथिव्यन्त-समस्तविश्वरूपतत्त्वेन विजृम्भमाणः सन् अनन्यमुखसम्प्रेक्षी अन्यमुखसम्प्रेक्षणे अन्यवस्तुदर्शनविषये नितराम् अनासक्तः सन् केवलं स्वात्मनि एव तिष्ठति स्वस्मिन्नेव स्वस्वरूपमेव अन्तर्मुखः सन् अवलोकयन् आनन्दीवर्तते।

यथोक्तं कालिदासेन तपोमग्नशिवविषये— 'आत्मानमात्मन्यव लोकयन्तं त्रियम्बकं संयमिनं ददर्श' इति एतदर्थोऽत्र मननीयः।

विमर्शभाण्डम् - इत्यत्र रूपकम्।

*।।इति भाण्डस्थलम्।।*

## (५३) भाजनस्थलम्

**समस्तजगदण्डानां सर्गस्थित्यन्तकारणम्।**
**विमर्शो भासते यत्र तद्भाजनमिहोच्यते।।३५।।**

समस्तजगदण्डानां समस्तानि जगन्ति एव अण्डानि तेषां सर्वेषां भुवनाण्डानां सर्गस्थित्यन्तकारणं सृष्टिस्थितिलयरूपकार्याणां कारणरूपं यः विमर्शः विन्दुपरनामकः विमर्शः यत्र यस्यां तिरोधानरूप-शिवसमवेतशक्तौ भासते प्रकाशते तत् तच्छक्तिस्वरूपमेव इह भाण्डस्थलसम्पन्न-शिवयोगिविषये भाजनम् इत्युच्यते।

**विमर्शाख्या पराशक्तिर्विश्ववैचित्र्यकारिणी।**
**यस्मिन् प्रतिष्ठिता ब्रह्म तदिदं विश्वभाजनम्।।३६।।**

विश्ववैचित्र्यकारिणी विश्वस्य वैचित्र्यकरणे शीलवती चित्रविचित्ररूपस्य विश्वस्य सृष्टिकरणे सामर्थ्यवती या विमर्शाख्या परा शक्तिः यस्मिन् तिरोभावशक्तेः दृक्क्रियास्वरूपे ब्रह्मणि प्रतिष्ठिता वर्तते तदिदं तादृशमेव ब्रह्म विश्वभाजनम् इति कथ्यते।

**अन्तःकरणरूपेण जगदङ्कुररूपतः।**
**यस्मिन् विभाति चिच्छक्तिर्ब्रह्मभूतः स उच्यते।।३७।।**

या चिच्छक्तिः स्थूलवेद्यतिरोभावरूपा समवेतशक्तिः जगदङ्कुररूपतः जगत् एव अङ्कुरः तस्य रूपात् जगद्रूपस्य अङ्कुरस्य कारणीभूतत्वात् अन्तः करणरूपेण अन्तःकरणरूपमूलाहङ्काररूपेण यस्मिन् परब्रह्मणि परबिन्दौ विभाति प्रकाशते सः विमर्शाख्य-परबिन्दुरेव ब्रह्मभूतः परब्रह्माख्यः परशिवः इत्युच्यते।

**यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।**
**तथा शक्तिर्विमर्शाख्या प्रकारे ब्रह्मणि स्थिरा।।३८।।**

विश्ववस्तुप्रकाशिनी विश्वस्य वस्तूनि प्रकाशयति इति विश्वस्मिन् वर्तमानानि वस्तूनि प्रकाशयति इति प्रकाशिनी ज्योत्स्ना कौमुदी यथा चन्द्रे स्थिरा वर्तते तथैव विश्ववस्तु-प्रकाशिनी विमर्शाख्या परा शक्तिः ब्रह्मणि प्रकारे परब्रह्मस्वरूपे परशिवे स्थिरा सती स्थिर - रूपेण वर्तमाना सती सर्ववस्तुप्रकाशिनी वर्तते। यथा चन्द्रं विना ज्योत्स्ना न तिष्ठति तथा ब्रह्म विना विमर्शशक्तिः न तिष्ठति इति वाक्यार्थोपमालङ्कारः। चन्द्रचन्द्रिकयोरिव शक्तिब्रह्मणोः अविनाभावत्वम्। यथोक्तं महाकविना कालिदासेन शिवपार्वत्योः

अविनाभावत्वे विषये—

'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।' इति।

**अकारः शिव आख्यातो हकारः शक्तिरुच्यते।**
**शिवशक्तिमयं ब्रह्म स्थितमेकमहं पदे।।३९।।**

अहम् पदस्थः अकारः शिवः इत्याख्यातः, हकारस्तु शक्तिः इत्युच्यते, एवं शिवशक्तिमयं यत् ब्रह्म तत् एकमेव सत् अहम् इति पदे स्थितमस्ति। अकारहकारयोः समायोगः प्रथमाविभक्त्येकवचनान्तत्वेन अहमिति भावः।

**अहन्तां परमां प्राप्य शिवशक्तिमयीं स्थिराम्।**
**ब्रह्मभूयङ्गतो योगी विश्वात्मा प्रतिभासते।।४०।।**

परमां श्रेष्ठतमां परमोत्कृष्टां शिवशक्तिमयीं शिवशक्त्यात्मिकां स्थिरां च अहन्ताम् अहमः भावः अहम् इत्यस्य भावः अहन्ता ताम् प्राप्य स्वात्माभेदेन स्थिरां ज्ञात्वा ब्रह्मभूयङ्गतः ब्रह्मस्वरूपं प्राप्तवान् सन् योगी शिवयोगी विश्वात्मा सन् विश्वस्वरूपकः सन् प्रतिभासते प्रकाशते।

**वृक्षस्थ पत्रपुष्पादि वटबीजस्थितं यथा।**
**तथा हृदयबीजस्थ विश्वमेतत् परात्मनः।।४१।।**

वृक्षस्थ वृक्षे विद्यमानं पत्रपुष्पादि पत्र-शाखापुष्पादिकं यथा वटबीजस्थितं वटबीजे स्थितं वटवृक्षस्य पत्रशाखापुष्पादिकं यथा वटबीजस्य अन्तः अङ्कुररूपेण अन्तःस्थं वर्तते तथैव परात्मनः परब्रह्म-स्वरूपस्य भाजनस्थलसम्पन्नस्य शिवयोगिनः हृदयबीजस्थं हृदयरूपे बीजे तिष्ठत् सत् एतत् विश्वं तादात्म्येन वर्तते। वाक्यार्थोपमालङ्कारः।

*।।इति भाजनस्थलम्।।*

## (५४) अङ्गलेपस्थलम्

**दिक्कालाद्यनवच्छिन्नं चिदानन्दमयं जगत्।**
**यस्य रूपमिदं ख्यातं सोऽङ्गलेप इहोच्यते।।४२।।**

दिक्कालाद्यनवच्छिन्नं दिग्देशकालत्रयेऽपि अनवच्छिन्नं परिच्छेदरहितं चिदानन्दमयं चिदानन्दस्वरूपं महत् बृहत् च इदं प्रादुर्भूतहक्क्रियारूपं यस्य तिरोभावभाजनसम्पन्नस्य शिवयोगिनः रूपं स्वरूपं इतियत् ख्यातं प्रख्यातं वर्तते सः तद्भाजनस्थलसम्पन्नः शिवयोगी इह अङ्गलेपः इति अङ्गकर्मलेपरहितः इति उच्यते।

**समस्तजगदात्मपि संविद्रूपो महामतिः।**
**लिप्यते नैव संसारैर्यथा धूमादिभिर्नभः।।४३।।**

महामतिः महाधीमान् शिवयोगी तावत् समस्तजगदात्मा अपि सकल-जगतः चैतन्यात्मकः सन्नपि, अपि च संविद्रूपः सन् चिद्रूपः सन्, धूमादिभिः धूममेघादिभिः नभः गगनं यथा नैव लिप्यते तथैव संसारैः संसारसम्बन्धिपापादिकर्मभिः नैव लिप्यते। उपमालङ्कारः।

**न विधिर्न निषेधश्च न विकल्पो न वासना।**
**केवलं चित्स्वरूपस्य गलितप्राकृतात्मनः।।४४।।**

गलितप्राकृतात्मनः दूरीकृत - प्राकृतकर्मसम्बन्धिस्वरूपवतः केवलं चित्स्वरूपस्य चिद्रूपविशिष्टस्य शिवयोगिनः तावत् विधिः विध्युक्तकर्माचरणं न भवति, निषेधः निधिध्यमानकर्माचरणमपि न भवति, विकल्पः एतदस्ति एतन्नास्ति इत्यात्मक-सङ्कल्पविकल्पादिकमपि न वर्तते, अपि च वासना तेषां सङ्कल्पविकल्पानां वासनापि न भवति।

**घटादिषु पृथग्भूतं यथाकाशं न भिद्यते।**
**तथोपाधिगतं ब्रह्म नानारूपं न भिद्यते।।४५।।**

घटादिषु घटमठादिषु पृथग्भूतं प्रत्येकं प्रत्येकं वर्तमानं सदपि यथा आकाशम् आकाशतत्त्वं न भिद्यते भिन्नत्वेन न दृश्यते तथैव उपाधिगतम् उपाधिषु गतं वर्तमानम् देवदानवमानवतिर्यगित्याद्युपाधिगतं ब्रह्म नानारूपं सदपि नानरूपादिभेदेन नानारूपं सदपि न भिद्यते भिन्नत्वेन न दृश्यते। वाक्यार्थोपमालङ्कारः।

**अनश्वरमनिर्देश्यं यथा व्योम प्रकाशते।**
**तथा ब्रह्मापि चैतन्यमत्र वैशेषिकी कला।।४६।।**

व्योम आकाशतत्त्वं यथा अनश्वरं नाशरहितम् अनिर्देश्यम् निर्देशयितुं न शक्यं अनुपमं सत् यत् प्रकाशते तथा ब्रह्म अपि अनश्वरम् अनिर्देश्यं च सत् वर्तते, किन्तु अत्र ब्रह्मणि यत् चैतन्यं वर्तते दृक्क्रियारूपं तदेव वैशेषिकीकला जडभूतभूताकाशाद्यपेक्षया विशेषीभूता कला इति चिदाकाशरूपं ब्रह्म। वाक्यार्थोपमालङ्कारः।

**न देवत्वं न मानुष्यं न तिर्यक्त्वं न चान्यथा।**
**सर्वाकारत्वमाख्यातं जीवन्मुक्तस्य योगिनः।।४७।।**

जीवन्मुक्तस्य योगिनः शिवयोगिनः कर्मपाशादि-रहितत्वात् देवत्वं पुण्यकर्मादिभिः सिद्धं देवत्वं नास्ति, मानुष्यं मनुष्यस्य सम्बन्धि पुण्यपापकर्ममिश्रित - कर्मोद्भूतमानुष्यमपि नास्ति, तिर्यक्त्वं केवल पापकर्मजन्यतिर्यक् प्राणित्वमपि नास्ति, अन्यथा चापि एतद्व्यतिरेकेण मायागर्भे मलादिमूर्छितत्वेन विद्यमानत्वमपि नास्ति, किन्तु सर्वत्र सर्वाकारत्वमेव परिपूर्णचिदाकाशत्वमेव आख्यातं प्रोक्तम्।

*।।इत्यङ्गलेपस्थलम्।।*

## (५५) स्वपराज्ञस्थलम्

**अप्रमेये चिदाकारे ब्रह्मण्यद्वैतवैभवे।**
**विलीनः किं नु जानाति स्वात्मानं परमेव वा?।।४८।।**

अप्रमेये अपरिमिते परिमितिरहिते चिदाकारे स्फुरणरूपे अद्वैतवैभवे अद्वैतरूपवैभवयुक्ते स्वगत सजातीयविजातीयभेदरहिते ब्रह्मणि परब्रह्मणि विलीनः सामरस्यं प्राप्तः अङ्गालेपः शिवयोगी स्वात्मानं वा परमेव वा किं नु जानाति? तथा नैव जानाति।

**यत्र नास्ति भिदा योगादहं त्वमिति विभ्रमः।**
**न संयोगो वियोगश्च न ज्ञेयज्ञातृकल्पना।।४९।।**

यत्र यस्मिन् अद्वैतवैभववति परब्रह्मणि योगात् समानसमरसयोगात् कारणात् अहम् त्वम् इत्यात्मकः भिदा भेदेन विभ्रमः भेदमूलकः भ्रान्तिर्नास्ति, संयोगश्च नास्ति वियोगश्च नास्ति ज्ञेयज्ञातृकल्पना ज्ञेयकल्पना वा ज्ञातृकल्पना

अपि नास्ति।

**देशकालानवच्छिन्नतेजो-रूप - समाश्रयात्।**
**स्वपरज्ञानविरहात् स्वपराज्ञस्थलं विदुः।।५४।।**

देशकालानवच्छिन्नतेजोरूपसमाश्रयात् देशकालादिपरिच्छेदशून्यस्य ब्रह्मतेजः स्वरूपस्य समाश्रयणात् कारणात् अपि च स्वपरज्ञानविरहात् इदं स्वकीयम् इदं परकीयम् इत्याद्यात्मकज्ञानशून्यत्वाद् एव कारणाच्च स्वपराज्ञस्थलम् इति विदुः जानन्ति।

*।।इति स्वपराज्ञस्थलम्।।*

## (५६) भावाभावलयस्थलम्

**त्वन्ताहन्ताविनिर्मुक्ते शून्यकल्पे चिदम्बरे।**
**एकीभूतस्य सिद्धस्य भावाभावकथा कुतः?।।५५।।**

त्वन्ताहन्ताविनिर्मुक्ते तव इति भावः त्वन्ता अहमिति भावः अहमः भावो वा अहन्ता इत्येताभ्यां त्वन्ताहन्ताभ्यां विनिर्मुक्ते रहिते शून्यकल्पे शून्यसदृशे चिदम्बरे चिदाकाशात्मके परब्रह्मणि एकीभूतस्य एकरसीभूतस्य स्वपरज्ञानशून्यस्य सिद्धस्य च शिवयोगिनः भावाभावकथा भावाभावयोः कथाप्रसङ्गः तावत् कुतः? नैवास्ति।

**अहम्भावस्य शून्यत्वादभावस्य तथात्मनः।**
**भावाभावविनिर्मुक्तो जीवन्मुक्तः प्रकाशते।।५६।।**

अहम्भावस्य शून्यत्वात् तथा आत्मनश्च अभावस्य शून्यत्वात् अहं भवामि इति भावज्ञानस्य अहं न भवामि इत्यभावज्ञानस्यापि शून्यत्वात् जीवन्मुक्तः स्वरज्ञानशून्यः शिवयोगी भावाभावविनिर्मुक्तः सन् अहमिति परिच्छिन्नदेहाहम्भावः आत्मा नास्ति इति अभावः एवंरूपभावाभावाभ्यां शून्यः सन् स्वस्वरूपेण प्रकाशते प्रकाशमानो वर्तते।

**सुखदुःखादिभावेषु नाभावो भाव एव वा।**
**विद्यते चित्स्वरूपस्य निर्लेपस्य महात्मनः।।५७।।**

चित्स्वरूपस्य चित्स्वरूपात्मकस्य निर्लेपस्य अहंकारादिलेपरहितस्य महात्मनः महापुरुषस्य शिवयोगिनः सुख-दुखादिभावेषु विषये अभावः वा भावः एव वा न विद्यते।

**यस्मिन् ज्योतिषि चिद्रूपे दृश्यते नैव किञ्चन।**
**सद्रूपं नाप्यसद्रूपं भावाभावं विमुञ्चतः।।५८।।**

चिद्रूपे चित्स्वरूपके यस्मिन् ज्योतिषि प्रकाशरूपे परशिवे भावाभावं भावाभावद्वयमपि विमुञ्चतः त्यक्तवतः शिवयोगिनः तस्मिन् चिद्रूपे सद्रूपं वा असद्रूपं वा किञ्चन नैव दृश्यते। अथवा भावाभावं विमुञ्चतः शिवयोगिनः चिद्रूपे यस्मिन् ज्योतिषि तस्मिन्नेव ज्योतिषि सद्रूपं वा असद्रूपं वापि किञ्चन नैव दृश्यते।

**प्रतीयमानौ विद्येते भावाभावौ न कुत्रचित्।**
**लिङ्गैक्ये सति यत्तस्मात् भावाभावलयस्थलम्।।५९।।**

लिङ्गैक्ये सति शिवलिङ्गे एकरसीभूतमहाशिवयोगिनि सति तस्य विषये यत् यस्मात् कारणात् भावाभावौ कुत्रचिदपि प्रतीयमानौ सन्तौ प्रकाशमानौ सन्तौ न विद्येते नैव भवतः तस्मादेव कारणात् तत् स्थलं भावाभावलयस्थलमिति कथितमस्ति।

*।।इति भावाभावलयस्थलम्।।*

## (५७) ज्ञानशून्यस्थलम्

**परापरसमापेक्षभावाभावविवेचनम् ।**
**ज्ञानं ब्रह्मणि तन्नास्ति ज्ञानशून्यस्थलं विदुः।।६०।।**

ब्रह्मणि परब्रह्मस्वरूपे भावाभावलयसम्पन्ने शिवयोगिनि यत् यस्मात् कारणात् परापरसमापेक्षभावाभावविवेचनं परापरज्ञानयोः यः समापेक्षः अभिलाषः तेन युक्तं यत् भावाभावयोः विवेचनरूपं ज्ञानं नास्ति तत् तस्मात् कारणात् ज्ञानशून्यस्थलम् इति विदुः जानन्ति।

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते।।६१।।**

जले न्यस्तं निक्षिप्तं जलमिव वह्नौ अर्पितः वह्निरिव परे ब्रह्मणि लीनात्मा परब्रह्मस्वरूपमहालिङ्गे लयीभूतभावाभावप्रयत्नवान् शिवयोगी विभागेन भेदभावेन न दृश्यते तादृशज्ञानशून्यत्वात्। उपमालङ्कारः।

**सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते।**
**ज्ञात्रादिव्यवहारोत्थं कुतो ज्ञानं विभाव्यते?।।६२।।**

भेदशङ्काविवर्जिते दूरीकृतभेदसंशयात्मके सर्वात्मनि सकल-चराचरप्रपञ्च-स्वरूपके परे तत्त्वे ज्ञात्रादिव्यवहारीत्यं ज्ञाताज्ञेयम् इत्यादि रूपेण व्यवहारेण सम्प्राप्तं ज्ञानं तावत् भेदज्ञानं तावत् कुतः हेतोः विभाव्यते? न कुतोऽपि भावयितुं शक्यते।

**निर्विकारं निराकारं नित्यं सीमाविवर्जितम्।**
**व्योमवत् परमं ब्रह्म निर्विकल्पतया स्थितम्।।६३।।**

निर्विकारं विकाररहितं निराकारम् आकाररहितं नित्यं शाश्वतिकं सीमाविवर्जितं सीमारहितं परमंब्रह्म परब्रह्म व्योमवत् आकाशवत् निर्विकल्पतया विकल्परहिततया स्थितं वर्तते। अत एव—

**न पृथ्व्यादीनि भूतानि न ग्रहा नैव तारकाः।**
**न देवान मनुष्याश्च न तिर्यञ्चो न चापरे।।६४।।**

भिन्नतया प्रतीयमानानि पृथ्व्यादीनि पृथिव्यादीनि भूतानि पञ्च भूतानि अथवा पृथिव्यादीनि षट्त्रिंशत्तत्त्वानि न भवन्ति, ग्रहाः वा न तारकाश्च नैव सन्ति देवाः अपि न मनुष्याश्च नैव भवन्ति तिर्यञ्चोऽपि न अपरे केचन अपि न भवन्ति।

**तस्मिन् केवलचिन्मात्रसत्तानन्दैकलक्षणे।**
**त्वन्ताहन्तादिसंरूढं विज्ञानं केन भाव्यते?।।६५।।**

केवलचिन्मात्र-सत्तानन्दैकलक्षणे केवल-सच्चिदानन्दस्वरूपके तस्मिन् परब्रह्मणि त्वन्ताहन्तादिसंरूढं त्वन्ता अहन्ता इत्यात्मक-व्यवहारेण युक्तं विज्ञानं केन वा भाव्यते? न केनापि भाव्यते।

**ज्ञेयाभावाद्विशेषेण शून्यकल्पं विभाव्यते।**
**ज्ञातृज्ञेयादिभिः शून्यं शून्यं ज्ञानादिभिर्गुणैः।।६६।।**

ज्ञेयाभावात् ज्ञेयरूपस्य सकलस्यापि वस्तुनः अभावात् विशेषेण विशेषाकारेण आधिक्येन केवलं शून्यकल्पं ज्ञानं शून्यसदृशं ज्ञानं विभाव्यते परिभाव्यते। तस्मात् ज्ञातृज्ञेयादिभिः शून्यं ज्ञातृज्ञानेन ज्ञेयज्ञानेन च शून्यम् अपि च ज्ञानादिभिश्च गुणैः ज्ञानम् इच्छा इत्यादिभिश्च गुणैः शून्यम्–

**आदावन्ते च मध्ये च शून्यं सर्वत्र सर्वदा।**
**द्वितीयेन पदार्थेन शून्यं शून्यं विभाव्यते।।६७।।**

आदौ शून्यम् अन्ते च शून्यं मध्ये च शून्यम् सर्वत्र शून्यं सर्वदा शून्यं द्वितीयेन पदार्थेन च शून्यम् इत्येवं, तस्मात्, शून्यं शून्यज्ञानमेव केवलं विभाव्यते।

**शून्यज्ञानादिसङ्कल्पे शून्यसर्वार्थसाधने।**
**ज्योतिर्लिङ्गे चिदाकारे स्वप्रकाशे निरुत्तरे।।**
**एकीभावमुपेतस्य कथं ज्ञानस्य सम्भवः?।।६८।।**

शून्यज्ञानादिसंकल्पे इच्छाज्ञान-सङ्कल्पादिभिः शून्यवति शून्यसर्वार्थसाधने सर्वार्थ-साधनैः शून्यवति च चिदाकारे निरुत्तरे स्वस्मात् उत्तररहिते अद्वितीये स्वप्रकाशे स्वयं प्रकाशवति ज्योतिर्लिङ्गे ज्योतिः स्वरूपे परमशिवलिङ्गे एकीभावम् उपेतस्य समान-समरसभावं प्राप्तस्य शिवयोगिनः ज्ञानस्य सम्भवः कथं स्यात्? वृत्ति-ज्ञानादेः आविर्भावः कथं वा स्यात्? न कदापि कथञ्चिदपि स्यात्।

**यस्य कार्यदशा नास्ति कारणत्वमथापि वा।**
**शेषत्वं नैव शेषित्वं स मुक्तः पर उच्यते।।७०।।**

यस्य तत्त्वातीतस्य स्वस्वरूपसम्पन्नस्य शिवयोगिनः कार्यदशा कार्यावस्था नास्ति अथापि वा कारणत्वमपि च नास्ति, यस्य च शेषत्वम् अवशेषत्वम् जीवभावत्वं च नैव, शेषित्वं च शेषवत्वंच शिवभावत्वं च नैवास्ति, तादृशः सः मुक्तः सन् परः नित्य परिपूर्णः सच्चिदानन्दस्वरूपः एव इत्युच्यते।

*।।इति ज्ञानशून्यस्थलम्।।*

## ।।अथ उपदेशोपसंहारवर्णनम्।।

**एतावदुक्त्वा परमप्रबोधम्**
**अद्वैतमानन्द - शिवप्रकाशम्।**
**देव्यै पुरा भाषितमीश्वरेण**
**तूष्णीमभूद् ध्यानपरो गणेन्द्रः।।७१।।**

गणेन्द्रः श्रीरेणुकगणेश्वरः, पुरा देव्यै पार्वत्यै ईश्वरेण परमेश्वरेण भाषितम् उपदिष्टम् आनन्दशिवप्रकाशम् आनन्दस्य शिवस्य च प्रकाशकम् अद्वैतम् शिवाद्वैतरूपं परमप्रबोधम् स्वस्वरूपपरम - प्रकाशकज्ञानोपदेशम् एतद्वीरशैव - शास्त्रम् एतावदुक्त्वा पिण्डादि - ज्ञानशून्यान्तम् एकोत्तर शतस्थलपर्यन्तं यावत् उक्त्वा उपदिश्य, ध्यानपरः सन् स्वस्वरूपानुसन्धानासक्तः सन् तूष्णीम् अभूत् मौनमवलम्ब्य अवर्तत।

अत्र इन्द्रवज्रावृत्तम् - लक्षणं तु–'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति।

**एवमुक्त्वा समासीनं शिवयोगपरायणम्।**
**रेणुकं तं समालोक्य बभासे प्राञ्जलिर्मुनिः।।७२।।**

एवम् शिवाद्वैत सम्बन्धि एकोत्तरशतस्थलात्मकं वीरशैवशास्त्रमुपदिश्य उक्त्वा समासीनं मौनमवलम्ब्य वर्तमानं शिवयोगपरायणं शिवयोगनिष्ठागरिष्ठम् तं रेणुकं श्रीरेणकगणाधीश्वरं समालोक्य दृष्ट्वा मुनिः महर्षिः अगस्त्यः प्राञ्जलिः सन् बभाषे एवं प्रार्थयामास।

### ।।अगस्त्य उवाच।।

**शिवयोगविशेषज्ञ शिवज्ञानमहोदधे।**
**समस्तवेदशास्त्रादिव्यवहार - धुरन्धर!।।७३।।**

भोः शिवयोगविशेषज्ञ शिवध्यान-योगविशेषज्ञ, शिवज्ञानमहोदधे शिवज्ञानस्य महासमुद्रसदृश, समस्तवेदशास्त्रादिव्यवहार - धुरन्धर, समस्तवेदागमोपनिषत्स्मृति-पुराण-शास्त्रादिव्यवहारपरिज्ञानपरमकुशल!

**आलोकमात्रनिर्धूत - सर्वसंसारबन्धन!।**
**स्वच्छन्दचरितोल्लास स्वप्रकाशात्मवच्छिव!।।७४।।**

आलोकमात्रनिर्धूत - सर्वसंसारबन्धन-केवलं दर्शनेनैव दूरीकृत-समस्त-जन संसारबन्धन, स्वच्छन्दचरितोल्लास स्वेच्छानुसारम् आचरणकरणेन उल्लासितचित्त, स्वप्रकाशात्मवत् स्वस्य प्रकाशेन आत्मवत् वर्तित्वात् चैतन्यवत् शिवस्वरूप,

**अवतीर्णमिदं शास्त्रमनवद्यं त्वदाननात्।**
**श्रुत्वा मे मोदते चित्तं ज्योतिः पश्ये शिवाभिधम्।।७५।।**

त्वदाननात् तव मुखात् आविर्भूतम् उपदिष्टम् अनवद्यं दोषरहितं श्रेष्ठं निर्मलं च इदं शास्त्रं वीरशैवशास्त्रम् श्रुत्वा आकर्ण्य मे चित्तं मोदते आनन्दि वर्तते, अपि च शिवाभिधं शिवनामकं ज्योतिः शिवप्रकाशं पश्ये पश्यन् अस्मि।

पश्ये – दृशिर् - प्रेक्षणे, आत्मनेपदमार्षम्।

**अद्य मे सफलं जन्म गतो मे चित्तविभ्रमः।**
**सञ्जाता पाशविच्छित्तिस्तपांसि फलितानि मे।।७६।।**

अद्य मे जन्म सफलं जातम्, मे चित्त-विभ्रमः चित्तभ्रान्तिः गतः नष्टः अभवत्, मे पाशविच्छित्तिः संसारबन्धननाशः सञ्जाता सम्प्राप्ता, मे तपांसि च अद्य फलितानि सफलानि अभवन्।

**इदानीमेव मे जातं मुनिराजोत्तमोत्तमम्।**
**इतः परं मया नास्ति सदृशो भुवनत्रये।।७७।।**

मे इदानीमेव मुनिराजोत्तमोत्तमं मुनिराजश्रेष्ठत्वम् जातम्, इतः परम् अद्यारभ्य भुवनत्रये मया सदृशः मुनिश्रेष्ठः नास्ति।

**शास्त्रं तव मुखोद्गीर्णं शिवाद्वैतपरम्परम्।**
**मां विना कस्य लोकेषु श्रोतुमस्ति तपः शुभम्।।७८।।**

तव मुखोद्गीर्णं मुखात् आगतम् शिवाद्वैतपरम्परम् शिवाद्वैतपरम्परादुक्तम् शास्त्रं वीरशैव-शास्त्रम् श्रोतं श्रवणं कर्तुं लोकेषु मां विना कस्य मदन्यस्य कस्य शुभं तपः अस्ति? मां विना न कस्याप्यस्ति।

**तपसां परिपाकेन शङ्करस्य प्रसादतः।**
**आगतस्त्वं महाभाग मां कृतार्थयितुं गिरा।।७९।।**

मम तपसां परिपाकेन शंकरस्य प्रसादतश्च हे महाभाग! महात्मन्! गिरा शिवसिद्धान्तोपदेशरूपगिरा मां कृतार्थयितुं कृतार्थं कर्तुम् आगतोऽसि।

**इति स्तुवन्तं विनयादगस्त्यं मुनिपुंगवम्।**
**आलोक्य करुणादृष्ट्या बभाषे स गणेश्वरः।।८०।।**

इति एवं रूपेण विनयात् स्तुवन्तं स्तोत्रं कुर्वन्तम् मुनिपुङ्गवम् अगस्त्यं मुनिश्रेष्ठमगस्त्यम् करुणादृष्ट्या करुणया दृष्ट्या आलोक्य सः गणेश्वरः एवं बभाषे अवोचत्।

**बभाषे** – भाष्-व्यक्तायां वाचि, लिट्।

**।।श्रीरेणुक उवाच।।**

**अगस्त्य मुनिशार्दूल तपःसिद्धमनोरथ!।**
**त्वां विना शिवशास्त्रस्य कः श्रोतुमधिकारवान्?।।८१।।**

हे तपःसिद्धमनोरथ! मुनिशार्दूल! अगस्त्य त्वां विना शिवशास्त्रस्य शिवशास्त्रम् (कर्मणि षष्ठी) श्रोतुं कः अधिकारवान्? त्वमेव नान्यः।

**पात्रं शिवप्रसादस्य भवानेको न चापरः।**
**इति निश्चित्य कथितं मया ते तन्त्रमीदृशम्।।८२।।**

शिवप्रसादस्य शिवानुग्रहस्य भवान् एक एव पात्रं योग्यं स्थानम्, न च अपरः पात्रम् इति निश्चित्य एव ते मया ईदृशं तन्त्रं वीरशैवतन्त्रम् कथितम्।

**स्थाप्यतां सर्वलोकेषु तन्त्रमेतत् त्वया मुने।**
**ईदृशं शिवबोधस्य साधनं नास्ति कुत्रचित्।।८३।।**

हे मुने एतत् तन्त्रं त्वया सर्वलोकेषु स्थाप्यताम्, यतः शिवबोधस्य शिवज्ञानबोधनार्थम् ईदृशं साधनम् कुत्रचिदपि नास्ति।

**रहस्यमेतत् सर्वज्ञः सर्वानुग्राहकः शिवः।**
**अवादीत् सर्वलोकानां सिद्धये पार्वतीपतिः।।८४।।**

सर्वज्ञः सर्वानुग्राहकः पार्वतीपतिः शिवः सर्वलोकानां सिद्धये भोग-मोक्षादिसिद्ध्यर्थम् एतद्रहस्यम् अवादीत् एतद् वीरशैवशास्त्ररहस्यं प्रोक्तवान्।

**तदिदं शिवसिद्धान्तसाराणामुत्तमोत्तमम्।**
**वेदवेदान्तसर्वस्वं विद्याचारप्रवर्तकम्।।८५।।**

तदिदं तादृशमिदं वीरशैवषट्-स्थलशिवयोग-मार्ग-प्रतिपादकं शास्त्रं शिवसिद्धान्तसाराणाम् कामिकादिवातुलान्ताष्टाविंशतिदिव्यागमानां शिव-सिद्धान्त-प्रतिपादकानाम् साराणां मध्ये उत्तमोत्तमम् वेदवेदान्त-सर्वस्वं वेदानामपि च वेदान्तानामुपनिषदां सर्वस्वं, विद्याचारप्रवर्तकं विद्यायाः आचारस्य प्रवर्तकं ज्ञानस्य क्रियायाश्च प्रकाशकं च वर्तते।

**वीरमाहेश्वरग्राह्यं शिवाद्वैतप्रकाशकम्।**
**परीक्षितेभ्यो दातव्यं शिष्येभ्यो नान्यथा क्वचित्।।८६।।**

वीरमाहेश्वरग्राह्यम् वीरमाहेश्वरैः ग्राह्यमङ्गीकरणीयम् शिवाद्वैतप्रकाशकं शिवाद्वैतस्य च प्रकाशकम्, प्रतिपादकमिदं शास्त्रं परीक्षितेभ्यः एव शिष्येभ्यः दातव्यम् उपदेष्टव्यम् तेषामेव अधिकारित्वात्, किन्तु अन्यथा अनधिकारिभ्यः क्वचिदपि न दातव्यम्।

**एतच्छ्रवणमात्रेण सर्वेषां पापसंक्षयः।**
**अवतीर्णं मया भूमौ शास्त्रस्यास्य प्रवृत्तये।**
**प्रवर्तय शिवाद्वैतं त्वमपि ज्ञानमीदृशम्।।८७।।**

एतच्छ्रवणमात्रेण एतस्य शिवाद्वैतशास्त्रस्य श्रवणमात्रेण सर्वेषां पापसंक्षयः पापानां नाशः भवति। अस्य शास्त्रस्य प्रवृत्तये प्रचारार्थं मया भूमौ अवतीर्णम्, अतः त्वमपि ईदृशं शिवाद्वैतज्ञानं प्रवर्तय प्रचारय।

*इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण*
*विरचिते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ*
*शिवैक्यस्थलविषयनवविधलिङ्गप्रसङ्गो नाम*
*।।विंशः परिच्छेदः।।*



# ।।एकविंशः परिच्छेदः।।

## ।।विभीषणाभीष्टवरप्रदानम्।।

**इत्युक्त्वा पश्यतस्तस्य पुरस्तादेव रेणुकः ।**
**अन्तर्दधे महादेवं चिन्नयन्नन्तरात्मना।।१।।**

रेणुकः श्रीरेणुकगणाधीश्वरः इति उक्त्वा तस्य पुरस्तात् एव तस्य अग्रभागे एव तस्य पश्यतः सतः अन्तरात्मना हृदयकमलेन महादेवं चिन्तयन् ध्यायन् अन्तर्दधे अन्तरभूत्।

तस्य पश्यतः सतः - सत् षष्ठीप्रयोगः।

**अन्तर्दधे–** अन्तः + डु - धाञ् - धारणपोषणयोः, लिट्।

दधे दधाते दधिरे - इत्यादि।

**य इदं शिवसिद्धान्तं वीरशैवमतं परम्।**
**शृणोति शुद्धमनसा स याति परमां गतिम्।।२।।**

यः पुरुषः वीरशैवमतं वीरशैवसिद्धान्तोक्तम् अङ्गलिङ्गषट्स्थलरूपं वीरशैवधर्मनिर्णयसम्मतं परं सर्वोत्कृष्टम् इदं शिव - सिद्धान्तं श्रुत्यागमादिसम्मतमिमं शिवसिद्धान्तं शुद्धमनसा शुद्धं च तत् मनश्च शुद्धमनः तेन शुद्धमनसा निर्मलचित्तेन शृणोति श्रवणं करोति सः परमां गतिं मोक्षं याति प्राप्नोति।

**स्वच्छन्दाचाररसिकः स्वेच्छानिर्मलविग्रहः।**
**आससाद पुरीं लङ्कां रेणुको गणनायकः।।३।।**

स्वच्छाचार-रसिकः स्वच्छन्दश्च असौ आचारश्च स्वच्छन्दाचारः तस्मिन् रसिकः निर्मले स्वकीयाचारे निरन्तरमासक्तवान् स्वेच्छानिर्मलविग्रहः स्वेच्छया स्वीकृतः निर्मलश्चासौ विग्रहश्च येन सः स्वेच्छानिर्मलविग्रहः ज्योतिर्लिङ्गात् उद्भूतत्वात् स्वेच्छया परिशुद्धशरीरवान् सन् रेणुकः गणनायकः लङ्कापुरीम् आससाद लङ्कापुरीमागतवान्।

**आससाद –** आ+षद्लृ - विशरणगत्यवसादनेषु - लिट्, ससाद सेदतुः सेदुः इत्यादि।

**तमागतं महाभागं सर्वागमविशारदम्।**
**विभीषणः समालोक्य गेहं प्रावेशयन्निजम्।।४।।**

सर्वागमविशारदं कामिकादिवातुलान्तानां सर्वेषां दिव्यागमानां विशारदं कुशलं महाभागं श्रेष्ठं महात्मानम् आगतं सन्तं तं गणेश्वरं विभीषणः समालोक्य निजं गेहं स्वकीयं राजगृहं प्रावेशयत् प्रवेशं कारयामास।

**प्रावेशयत् –** प्र + विश् - प्रवेशने, णिचि, लङ् - अवेशयत् इत्यादि।

**भद्रासने निजे रम्ये निवेश्य गणनायकम्।**
**अर्घ्यपाद्यादिभिः सर्वैरुपचारैरपूजयत्।।५।।**

निजे स्वकीये रम्ये मनोहरे भद्रासने सिंहासने गणनायकं रेणुकगणाधीश्वरं निवेश्य उपवेशयित्वा अर्घ्यपाद्यादिभिः सर्वैः उपचारैः अपूजयत् पूजयामास।

**अपूजयत् –** पूज - पूजायाम्, लङ् - अपूजयत् इत्यादि।

**पूजितेन प्रसन्नेन रेणुकेन निरूपितः।**
**निषसाद तदभ्याशे स निजासनमाश्रितः।।६।।**

विभीषणेन विधिवत् पूजितेन पूजां स्वीकृतेन अतएव प्रसन्नेन प्रशान्त-चित्तयुक्तेन रेणुकेन निरूपितः आज्ञप्तः सः विभीषणः तदभ्याशे तस्य अभ्याशे समीपे निजासनं निजं स्वकीयम् आसनं सिंहासनम् आश्रितः सन् निषसाद उपविष्टवान्।

**निषसाद–** षद् लृ - विसरणगत्यवसादनेषु - नि - षद्लृ - लिट्

**आबभाषे गणेन्द्रं तं कृताञ्जलि-विभीषणः।**
**मानुषाकारसम्पन्नं साक्षाच्छिवमिवापरम्।।७।।**

विभीषणः मानुषाकारसम्पन्नं मानुषस्य आकारेण सम्पन्नं युक्तम् साक्षात्

अपरं शिवमिव वर्तमानं प्रत्यक्षीभूत - द्वितीयशङ्करमिव वर्तमानं धृतमनुष्याकारवन्तम् अपरं शिवमिव वर्तमानं तं गणेन्द्रं कृताञ्जलि यथा स्यात् तथा कृतः अञ्जलिः येन यस्मिन् कर्मणि तद्यथा स्यात् तथा अञ्जलिबद्धः सन् बद्धाञ्जलिः यत् आबभाषे एवं प्रार्थयामास विज्ञापयामास।

**आबभाषे** – आ+भाष - व्यक्तायां वाचि, लिट् -

आबभाषे आबभाषाते आबभाषिरे इत्यादि।

**रेणुक त्वां गणाधीश शिवज्ञानपरायण।**
**अवतीर्णं महीमेनामिति सम्यक् श्रुतं मया।।८।।**

अये शिवज्ञानपरायण शिवज्ञानकुशलगणाधीश श्रीरेणुक! एनां महीं भूमिं अवतीर्णं अवतारं कृतवन्तं सन्तं त्वाम् इति मया सम्यक् लोकवार्तामुखेन अवगतम्।

**मद्भाग्यगौरवादद्य समायास्त्वं पुरीमिमाम्।**
**कथं भाग्यविहीनानां सुलभाः स्युर्भवादृशाः?।।९।।**

मद्भाग्यगौरवात् मम भाग्यं मद्भाग्यं तस्य गौरवं मद्भाग्यगौरवं तस्मात् मद्भाग्यगौरवात् मदीयमहत्तरभाग्यवशात् एव अद्य इमां पुरीं त्वं समायाः आगतवान्, यतः, भाग्यविहीनानां भाग्यरहितानां भवादृशः भवत्सदृशाः भवता सदृशाः भवादृशाः महात्मानः कथं वा सुलभाः स्युः? नैव सुलभाः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः। समायाः – सम् + अय-गतौ, आशीर्लिङ् - आयात् आयास्ताम् आयासुः। आयाः आयास्तम् आयास्त। आयासम् आयास्व आयास्म।

**मत्समो नास्ति लोकेषु भाग्यातिशयवत्तया।**
**यस्य गेहं स्वयं प्राप्तो भवान् साक्षान्महेश्वरः।।१०।।**

साक्षात् महेश्वरः प्रत्यक्षपरमेश्वरः भवान् यस्य मम गेहं राजगृहम् स्वयमेव अप्रेरणया यस्मात् प्राप्तः अस्ति, 'भवद्योगे न मध्यमः' इति अस्ति इति प्रथमपुरुषत्वम्, तस्मात् भाग्यातिशयवत्तया भाग्यस्य अतिशयः भाग्यातिशयः सः अस्ति अस्मिन् इति भाग्यातिशयवान् तस्य भावः भाग्यातिशयवत्ता तया भाग्यातिशयवत्तया अतिशयभाग्यवशात् हेतोः लोकेषु

मत्समः मया समः मत्समः मम समानः नास्ति कोऽपि मां विना।

**कृतार्था मे पुरी ह्येषा कृतार्थो राक्षसान्वयः।**
**जीवितं च कृतार्थं मे यस्य त्वं दृष्टिगोचरः।।११।।**

एषा मे पुरी कृतार्था हि कृतः अर्थः यया सा कृतार्था कृतकृत्या अस्ति, मे राक्षसान्वयः राक्षसानाम् अन्वयः राक्षसान्वयः अस्माकं राक्षसवंशः कृतार्थः कृतः अर्थः येन सः कृतकृत्यः वर्तते, मे जीवितं च कृतार्थं कृतः अर्थः येन तत् कृतकृत्यमस्ति, यस्य मम दृष्टिगोचरः दृष्टौ गोचरः त्वम् असि, त्वदागमनेन मदीयं सर्वमपि कृतार्थमस्ति।

**इति ब्रुवाणं कल्याणं राक्षसेन्द्र गणेश्वरः।**
**बभाषे सस्मितो वाणीं विश्वोल्लासकरीं शुभाम्।।१२।।**

इति एवं रीत्या कल्याणं यथा स्यात् तथा मङ्गलप्रदत्वेन ब्रुवाणं कथयन्तं राक्षसेन्द्रं राक्षसश्रेष्ठं दृष्ट्वा गणेश्वरः सस्मितः स्मितेन सह वर्तते इति सस्मितः मन्दस्मितयुक्तः सन् विश्वासोल्लासकरीं विश्वासश्च उल्लासश्च विश्वासोल्लासौ तौ कर्तुं शीलमस्ति अस्याः इति विश्वासोल्लासकरी तादृशीं शुभां मङ्गलाधायकीं वाणीं तं प्रति बभाषे उक्तवान्।

**विभीषण महाभाग जाने त्वां धर्मकोविदम्।**
**त्वां विना कस्य लोकेषु जायते भक्तिरीदृशी?।।१३।।**

भोः महाभाग महाभाग्यशील विभीषण त्वां धर्मकोविदं धर्मे कोविदः धर्मकोविदः तं धर्मकोविदं धर्माचारप्रवीणन्तं सन्तं जाने जानामि। यतः, लोकेषु त्वां विना कस्य पुरुषस्य ईदृशी अनुपमा भक्तिः जायते सम्भवति? नैव इतरस्य सम्भवति।

**समस्तशास्त्रसारज्ञं सर्वधर्मपरायणम्।**
**अध्यात्मविद्यानिरतमाहुस्त्वां राक्षसेश्वर!।।१४।।**

भोः राक्षसेश्वर विभीषण! त्वां समस्त-शास्त्रसारज्ञं समस्तानां शास्त्राणां सारं जानाति इति तादृशं समस्तनिगमागमपुराणशास्त्रादीनां सारज्ञानवन्तं सन्तं सर्वधर्मपरायणं सर्वेषु धर्मेषु परायणं सर्वेषामपि शिवधर्माणां पारं गतवन्तं सन्तम् अध्यात्मविद्यानिरतम् आत्मानमधिश्रित्य अध्यात्म तस्य विद्यायां

सदाकालं निरतं च सन्तं निरन्तरम् अध्यात्मविद्यानुभवे निरतं सन्तम् आहुः लोकाः कथयन्ति।

**त्वदीयधर्म-सम्पत्तिं श्रुत्वाहं विस्मिताशयः।**
**व्रजन् कैलासमचलं त्वदन्तिकमुपागतः।।१५।।**

त्वदीयधर्मसम्पत्तिं धर्मस्य सम्पत्तिः धर्मसम्पत्तिः तव इयं त्वदीया त्वदीया धर्मसम्पत्तिः त्वदीयधर्मसम्पत्तिः तां भवदीय शिवधर्मसम्पद्वैभवं श्रुत्वा अहं विस्मिताशयः सन् विस्मितः आशयः यस्य सः तादृशः सन् कैलासम् अचलं कैलासपर्वतं प्रति व्रजन् गच्छन् सन् मार्गमध्ये त्वदन्तिकं तव अन्तिकं तव समीपम् उपागतः अस्मि।

**प्रीतोऽस्मि तव चारित्रैः शोभनैर्लोकविश्रुतैः।**
**दास्यामि ते वरं साक्षात् प्रार्थयस्व यथेप्सितम्।।१६।।**

लोकविश्रुतैः लोके प्रख्यातैः शोभनैः मङ्गलात्मकैः तव चारित्रैः आचरणैः प्रीतः अस्मि सन्तुष्टोऽस्मि, अतः ते साक्षादेव वरं दास्यामि यथेप्सितम् ईप्सितमनतिक्रम्य यथा स्यात् तथा तव इष्टानुसारं प्रार्थयस्व प्रार्थय।

**प्रार्थयस्व** – प्र+अर्थ - उपयाच्ञायाम् - लोट् - प्रार्थयताम् इत्यादि।

**इति प्रसादसुमुखे भाषमाणे गणेश्वरे।**
**प्रणम्य परया प्रीत्या व्याजहार विभीषणः।।१७।।**

इति एवंरीत्या प्रसादसुमुखे सुष्ठु मुखं सुमुखं प्रसादेन सुमुखं यस्य तस्मिन् प्रसादसुमुखे अनुग्रहपूर्णत्वात् शोभनमुखयुक्तवति गणेश्वरे रेणुकगणाधीश्वरे भाषमाणे सति विभीषणः परया प्रीत्या परमप्रीत्या प्रणम्य प्रणामं कृत्वा एवं व्याजहार अवोचत्।

**व्याजहार** – वि+आ+हृञ् - हरणे, लिट् जहार जह्रतुः इत्यादि।

**आगमानुग्रहादेव भवतः शिवयोगिनः।**
**दुर्लभाः सर्वलोकानां समपद्यन्त सम्पदः।।१८।।**

शिवयोगिनः शिवयोगसम्पन्नस्य भवतः तव पूज्यस्य आगमानुग्रहादेव

आगमः एव अनुग्रहः आगमानुग्रहः तस्मादेव आगमनरूपानुग्रहादेव दुर्लभाः अपि सर्वलोकानामपि सम्पदः विभवाः समपद्यन्त सम्प्राप्ताः।

**समपद्यन्त –** सम् + पद-गतौ, लङ् - अपद्यत, अपद्येताम् - इत्यादि

**तथापि प्रार्थनीयं मे किञ्चिदस्ति गणेश्वर।**
**सुकृते परिपक्वे हि स्वयं सिद्ध्यति वाञ्छितम्।।१९।।**

तथापि यस्मात् भवदागमनादेव मे सम्पदभिवृद्धिः सम्पन्ना अस्ति तथापि हे गणेश्वर मे प्रार्थनीयं किञ्चिदस्ति, यतः, सुकृते पुण्यकर्मणि परिपक्वे जाते सति वाञ्छितं तावत् स्वयमेव सिद्ध्यति हि! अत्रापि सामान्यवाक्येन उत्तरार्धेन विशेषवाक्यस्य पूर्वार्धस्य समर्थनात् अर्थान्तरन्यासालङ्कारः।

**सिद्ध्यति** – सिध् - संसिद्धौ - लट्।

**रावणो हि मम भ्राता माहेश्वरशिखामणिः।**
**अदृष्टशत्रुसम्बाधं शशास हि जगत्त्रयम्।।२०।।**

माहेश्वरशिखामाणिः परमश्रेष्ठमाहेश्वरः मम भ्राता रावणः हि अदृष्टशत्रुसम्बाधं यथा स्यात् तथा शत्रोः सम्बाधः शत्रुसम्बाधः नदृष्टः शत्रुसम्बाधः यथास्यात् तथा अदृष्टशत्रुसम्बाधं शत्रुरहितत्वेन अजातशत्रुः सन् जगत्त्रयं जगतां त्रयं शशास हि पालयति स्म किल। **शशास**-शासु अनुशिष्टौ, लिट्, शशास शशासतुः शशासुः इत्यादि। महेश्वरस्य इमे माहेश्वराः, तेषु शिखामणिः इव शिखामणिः माहेश्वर-शिखामणिः।

**यस्य प्रतापमतुलं सोढुमक्षमशक्तयः।**
**इन्द्रादयः सुराः सर्वे राज्यलक्ष्म्या वियोजिताः।।२१।।**

यस्य रावणस्य अतुलम् असमानं प्रतापं पराक्रमं सोढुम् अक्षमशक्तयः क्षमाशक्तिः येषां ते क्षमशक्तयः न क्षमशक्तयः अक्षमशक्तयः असमर्थाः सन्तः इन्द्रादयः सर्वे सुराः देवाः राज्यलक्ष्म्या स्वकीयया राज्यलक्ष्म्या वियोजिताः दूरीकृताः युद्धं कृत्वा येन पराजिताः सः रावणः शशास हि।

**स तु कालवशेनेव स्वचारित्रविपर्ययात्।**
**रणे विष्णववतारेण रामेण निहतोऽभवत्।।२२।।**

सः तु रावणः तादृशः रावणः तु कालवशेन इव कालवशात् इव यमस्य वशात् इव च स्वचारित्रविपर्ययात् स्वस्य चारित्रस्य विपर्ययात् च कारणात् स्वकीयदुराचारात् कारणात् रणे युद्धे विष्ण्वतारेण विष्णोः अवतारः यः सः विष्णववतारः तेन विष्णववतारेण विष्णोः अवतारः यः सः विष्णववतारः तेन विष्णववतारेण विष्णोः अवताररूपवता रामेण निहतः अभवत्।

**स तु रामशराविद्धः कण्ठस्खलित-जीवितः।**
**अवशिष्टं समालोक्य मामवादीत् सुदुःखितः।।२३।।**

रामशराविद्धः रामस्य शरेण आविद्धः रामशराविद्धः सन् रामस्य शरेण आघातितः सन् अतएव कण्ठस्खलित-जीवितः कण्ठे स्खलितं जीवितं यस्य तादृशः सन् कण्ठस्खलितजीवितः सन् कण्ठे निरुद्धप्राणः सन् अवशिष्टं अस्मत्कुले अवशिष्टं मां समालोक्य सुदुःखितः सन् मां प्रति एवम् अवादीत् उक्तवान्। **अवादीत्**-वद-व्यक्तायां वाचि, लुङ्, अवादीत् अवादिष्टाम् अवादिषुः इत्यादि।

**विभीषण विशेषज्ञ महाबुद्धे सुधार्मिक।**
**अवशिष्टोऽसि वंशस्य रक्षसां भाग्यगौरवात्।।२४।।**

हे विशेषज्ञ विशेषं जानाति इति विशेषज्ञः तत्सम्बुद्धौ, विशेषज्ञानिन्,महाबुद्धे महतीबुद्धिः यस्य सः तत्सम्बुद्धौ महाबुद्धे, सुधार्मिक सुष्टु धार्मिकः सुधार्मिकः तत्सम्बुद्धौ सुधार्मिक। रक्षसां वंशस्य राक्षसवंशस्य भाग्यगौरवात् भाग्यस्य गौरवं भाग्यगौरवं तस्मात् भाग्यगौरवात् अधिकादृष्टवशात् त्वमेक एव अवशिष्टः असि।

**वयमज्ञानसम्पन्ना महत्सु द्रोहकारिणः।**
**ईदृशीं तु गतिं प्राप्तादुस्तरा हि विधिस्थितिः।।२५।।**

अज्ञानसम्पन्नाः अज्ञानेन सम्पन्नाः अज्ञानयुक्ताः सन्तः अत एव महत्सु विषये द्रोहकारिणः सन्तः द्रोहं कृतवन्तः सन्तः वयम् ईदृशीं गतिं स्थितिं प्राप्ताः भवामः। युक्तमेतत्, यतः विधिस्थितिः विधेः स्थितिः दुस्तरा हि दुःखेन तर्तुं योग्या दुस्तरा खलु वर्तते। अतएव वयमीदृशीं गतिं प्राप्ताः। अत्र काव्यलिङ्गालङ्कारः। एतादृशगतिप्राप्तौ विधिस्थितिः दुस्तरा इति समर्थनात्।

**नवकं लिङ्गकोटीनां प्रतिष्ठाप्यमिह स्थले।**
**इति सङ्कल्पितं पूर्वं मया तदवशिष्यते।।२६।।**

इह स्थले अस्माकमस्मिन् लङ्कानगरस्थले लिङ्गकोटीनां नवकं नवकोटिसंख्याकलिङ्गानां प्रतिष्ठाप्यम्, प्रतिष्ठा कर्तव्या इति पूर्वं मया सङ्कल्पितमासीत् इदानीं तत् कार्यम् अवशिष्यते अवशिष्टमस्ति।

**कोटिषट्कं तु लिङ्गानां मया साधु प्रतिष्ठितम्।**
**कोटित्रयं तु लिङ्गानां स्थापनीयमतस्त्वया।।२७।।**

इतः पूर्वं मया लिङ्गानां कोटिषट्कं साधु सुष्ठुतया प्रतिष्ठितम्, परं लिङ्गानां कोटित्रयं तु अतः अस्मात् कारणात् त्वया स्थापनीयम् वर्तते।

**इति तस्य वचः श्रुत्वा दीनबुद्धेर्मरिष्यतः।**
**तथा साधु करोमीति प्रतिज्ञातं मया तथा।।२८।।**

दीनबुद्धेः दैन्यबुद्धियुक्तस्य मरिष्यतः मरणमुखे वर्तमानस्य इति इत्यात्मकं वचः श्रुत्वा तथा तथैव साधु यथा स्यात् तथा करोमि इति मया तथा एवं प्रतिज्ञातं प्रतिज्ञा कृता।

**युगपच्छिवलिङ्गानां कोटित्रयमनुत्तमम्।**
**प्रतिष्ठाप्यं यथाशास्त्रमिति मे निश्चयोऽभवत्।।२९।।**

अनुत्तमम् उत्तमं न विद्यते यस्मात् तत् अनुत्तमम् अत्यन्तं श्रेष्ठतमं शिवलिङ्गानां कोटित्रयं युगपदेव एककालमेव यथाशास्त्रं शास्त्रम् अनतिक्रम्य यथा स्यात् तथा शास्त्रोक्तानुसारं प्रतिष्ठाप्यं प्रतिष्ठापनीयम् इति मे निश्चयः अभवत्।

**लिङ्गकोटित्रयस्येह युगपत् स्थापनाविधौ।**
**अविदन्नेकमाचार्यमहमेवमव – स्थितः।।३०।।**

इह अस्मिन् नगरे लिङ्गकोटित्रयस्य लिङ्गानां कोटित्रयस्य युगपदेव एककालमेव स्थापनाविधौ विधिवत् स्थापनकार्ये एकं एकैकं प्रधानं च आचार्यम् अविदन् अजानन् अहम् एवम् अवस्थितः अस्मि।

**शिवशास्त्रविशेषज्ञ शिवज्ञाननिधिर्भवान्।**
**आचार्यभावमासाद्य मम पूरय वाञ्छितम्।।३१।।**

भोः शिवशास्त्रविशेषज्ञ शिवशास्त्रस्य विशेषं जानातीति तत्सम्बुद्धौ शिवशास्त्रविशेषज्ञ शिवशास्त्रज्ञानपारङ्गत भवान् शिवज्ञाननिधिः शिवस्य ज्ञानं शिवज्ञानं तस्य निधिः इव निधिः शिवज्ञाननिधिः शिवज्ञानस्य प्रधाननिक्षेपः इव वर्तते, अतः त्वम् आचार्यभावम् आसाद्य प्रधानाचार्यः भूत्वा मम वाञ्छितम् इष्टार्थं पूरय पूर्णं कुरु।

**तस्येतिवचनं श्रुत्वा राक्षसेन्द्रस्य धीमतः।**
**तथेति प्रतिशुश्राव सर्वज्ञो गणनायकः।।३२।।**

धीमतः राक्षसेन्द्रस्य तस्य इति एवंरूपं वचनं श्रुत्वा सर्वज्ञः गणनायकः तथा इति तथैव करिष्यामि इति प्रतिशुश्राव प्रतिज्ञामकरोत्।

**प्रतिशुश्राव–** प्रति+श्रु-श्रवणे, लिट्,

शुश्राव शुश्रुवतुः शुश्रुवुः - इत्यादि।

**तत्र सन्तुष्टचित्तस्य पौलस्त्यस्येष्टसिद्धये।**
**कोटित्रयं तु लिङ्गानां यथाशास्त्रं यथाविधि।।**
**त्रिकोट्याचार्यरूपेण स्थापितं तेन तत्क्षणे।।३३।।**

तत्र तादृशप्रतिष्ठापनविषये सन्तुष्टचित्तस्य सन्तुष्टं चित्तं यस्य सः तस्य सन्तुष्टमानसस्य पौलस्त्यस्य पुलस्त्यस्य वंशे भवः पौलस्त्यः तस्य पौलस्त्यस्य पुलस्त्यब्रह्मणः वंशे जातस्य विभीषणस्य पुलस्त्यब्रह्मणः पुत्रस्य विभीषणस्य इष्टसिद्धये इष्टसिद्ध्यर्थं लिङ्गानां कोटित्रयं तु यथाशास्त्रं शास्त्रमनतिक्रम्य यथास्यात् तथा यथाशास्त्रम् शास्त्रपूर्वकम् यथाविधि विधिमनतिक्रम्य यथा स्यात् तथा यथाविधि विधिपूर्वकम् तेन रेणुकगणाधीश्वरेण तत्क्षणे तस्मिन्नेव क्षणे त्रिकोट्याचार्यरूपेण कोटित्रयाचार्यरूपं धृत्वा स्थापितमभवत्।

**तादृशं तस्य माहात्म्यं समालोक्य विभीषणः।**
**प्रणनाम मुहुर्भक्त्या पादयोस्तस्य विस्मितः।।३४।।**

विभीषणः तस्य रेणुकगणाधीश्वरस्य तादृशमद्भुतं माहात्म्यं समालोक्य दृष्ट्वा विस्मितः सन् आश्चर्यचकितः सन् भक्त्या तस्य पादयोः मुहुः पौनः पुन्येन प्रणनाम् नमस्कारमकरोत्।

**प्रणनाम** – प्र+णम् - प्रह्वत्वे, लिट्

प्रणनाम प्रणेमतुः प्रणेमुः इत्यादि।

**प्रणतं विनयोपेतं प्रहृष्टं राक्षसेश्वरम्।**
**अनुगृह्य स्वमाहात्म्याद् रेणुकोऽन्तर्हितोऽभवत्।।३५।।**

प्रहृष्टं प्रकर्षेण सन्तुष्टं विनयोपेतं विनयान्वितं प्रणतं च नमस्कारं कृतवन्तं राक्षसेश्वरं विभीषणं स्वमाहात्म्यात् स्वस्य माहात्म्यात् अनुगृह्य एव-मनुग्रहं कृत्वा रेणुकः गणनायकः अन्तर्हितः अन्तर्भूतः अभवत्।

**अभवत्** – भू - लङ्।

**विभीषणोऽपि हृष्टात्मा रेणुकस्य प्रसादतः।**
**शिवभक्तिरसासक्तः स्थिरराज्यमपालयत्।।३६।।**

हृष्टात्मा सन्तुष्टात्मा विभीषणः अपि रेणुकस्य प्रसादतः प्रसादात् अनुग्रहात् शिवभक्तिरसासक्तः सन् शिवस्य भक्तिः शिवभक्तिः शिवभक्तेः रसे आसक्तः सन् शिवभक्तिरसम् आस्वादयन् सन् स्थिरराज्यं स्थिरं यथा स्यात् तथा राज्यम् अपालयत् पालयामास।

**रेणुकोऽपि महातेजाः सञ्चरन् क्षितिमण्डले।**
**प्रच्छन्नश्च प्रकाशश्च परमाद्वैतभावितः।।३७।।**

महातेजाः महत् तेजः यस्य सः महातेजाः महातेजस्वी रेणुकः अपि क्षितिमण्डले भूमण्डले प्रच्छन्नः च सन् प्रकाशः च सन् परमाद्वैतभावितश्च सन् परमं च तत् अद्वैतं च परमाद्वैतं तेन भावितः पूर्णमनस्कः सन् सञ्चरन् च सन्।

**काश्चित् दृष्टिनिपातेन करुणारसवर्षिणा।**
**अपरानुपदेशेन शिवाद्वैताभिमर्शिना।।३८।।**

करुणारसवर्षिणा करुणायाः रसं वर्षयतीति करुणारसवर्षी तेन करुणारसवर्षिणा कारुण्यरसपरिपूर्णेन दृष्टिनिपातेन दृष्टेः निपातेन दृष्टिप्रसारेण

कांश्चित् जनान् कृतार्थयन् अपरान् च जनान् शिवाद्वैताभिमर्शिन शिवाद्वैतम् अभिमर्शयति इति शिवाद्वैताभिमर्शी तेन शिवाद्वैताभिमर्शिना शिवाद्वैतविद्याप्रकाशकेन उपदेशेन कृतार्थयन् सन्।

**अन्यांश्च सहवासेन समस्तमलहारिणा।**
**कृतार्थयन् जनान् सर्वान् कृतिनः पक्वकर्मिणः।।३९।।**

समस्त-मलहारिणा समस्तं मलं हरति इति समस्तमलहारी तेन समस्तमलहारिणा समस्त-दोषनिर्मूलन-शक्तिमता सहवासेन अन्यान् जनान् कृतार्थयन् अपि च पक्वकर्मिणः परिपक्वमलमायापाशवतः अपि च कृतिनः सकलकलाकुशलान् च सर्वान् जनान् कृतार्थयन् सन्।

**दर्शयित्वा निजाधिक्यं शिवदर्शनलालसः।**
**खण्डयित्वा दुराचारान् पाषण्डान् भिन्नदर्शनान्।।४०।।**

शिवदर्शनलालसः शिवस्य दर्शनं शिवदर्शनं तत्र लालसः शिवदर्शनलालसः शिवदर्शनस्य शिवसिद्धान्तस्य विषये आसक्तः सन् श्रीरेणुकगणाधीशः निजाधिक्यं नानाविधचित्रविचित्रनिजमाहात्म्यं दर्शयित्वा, भिन्नदर्शनान् वैष्णवादिभिन्नसमयनिष्ठान् पाषण्डान् शङ्खचक्रादिनानालाञ्छनयुक्तान् 'पाखण्डाः सर्वलिङ्गिनः' इत्यमरः, अतएव दुराचारात् दुष्टाचारवतः खण्डयित्वा।

**यन्त्रमन्त्रकलासिद्धान् विमतान् सिद्धमण्डलान्।**
**विजित्य स्वप्रभावेण स्थापयित्वा शिवागमान्।।**
**आजगाम निजावासं कोल्लिपाक्यभिधं पुरम्।।४१।।**

यन्त्रमन्त्रादिचतुःषष्टिकला सिद्धियुक्तान् विमतान् भिन्नमतान् सिद्धमण्डलान् कापालिकादिसिद्धसमूहान् अर्थात् गोरक्षादिनवकोटिसिद्धान् स्वप्रभावेण स्वसामर्थ्येन विजित्य शिवागमान् कामिकाद्यागमादिषु प्रणीतान् शिवसिद्धान्तान् स्थापयित्वा निजावासं निजस्य आवासः निजावासः तं निजावासं निजोत्पत्तिस्थानं नाम्ना कोल्लिपाक्यभिधं पुरं कोल्लिपाकी इति अभिधा यस्य तत् कोल्लिपाक्यभिधं पुरं नगरमेव आजगाम आगतवान्।

**आजगाम** – आ+गम्लृ-गतौ लिट्। जगाम – आजगाम - 'उपसर्गेण

धात्वर्थः बलादन्यत्र नीयते' इति नियमः।

**तत्र सम्भावितः सर्वैर्जनैः शिवपरायणैः।**
**सोमनाथाभिधानस्य शिवस्य प्राप मन्दिरम्।।४२।।**

तत्र नगरे शिवपरायणैः शिवपूजादिनिष्ठैः सर्वैः जनैः सम्भावितः सत्कृतः सन् सोमनाथाभिधानस्य सोमनाथः इति अभिधानं यस्य तस्य सोमनाथाभिधानस्य सोमनाथनामकस्य शिवस्य मन्दिरम् आलयं प्राप प्राप्तवान्।

**प्राप** – प्र+आप्ऌ - व्याप्तौ - लिट्, प्राप प्रापतुः प्रापुः इत्यादि।

**पश्यतां तत्र सर्वेषां भक्तानां शिवयोगिनाम्।**
**तन्वानो विस्मयं भावैस्तुष्टाव परमेश्वरम्।।४३।।**

तत्र शिवालये शिवयोगिनां शिवयोगनिष्ठानां सर्वेषां भक्तानां पश्यतां सताम् (सत् षष्ठीप्रयोगः), सर्वेषां विस्मयं तन्वानः तनोति इति तन्वानः सम्पादयन् विस्तारयन् भावैः शिवभक्तिभावैः परमेश्वरं तुष्टाव स्तोत्रं कृतवान्।

**तुष्टाव** – ष्टुञ् - स्तुतौ, लिट्, तुष्टाव तुष्टुवतुः तुष्टुवुः इत्यादि।

**देवदेव जगन्नाथ जगत्कारणकारण।**
**ब्रह्मविष्णु - सुराधीशवन्द्यमानपदाम्बुज।।४४।।**

हे देवदेव! देवानामपि देवः तत्सम्बुद्धौ देवदेव! जगन्नाथ जगतामधीश, जगत्कारणकारण जगतः कारणं जगत्कारणं तस्यापि कारणं जगत्कारणकारण (सम्बुद्धिः) जगतां कारणीभूताः ये बिन्दुमायादयः तेषामपि कारणीभूत ब्रह्मविष्णुसुराधीशवन्द्यमानपदाम्बुज-ब्रह्मा विष्णुः सुराधीशः इत्येतैः ब्रह्मा च विष्णुश्च सुराधीशश्च ब्रह्मविष्णुसुराधीशाः तैः वन्द्यमाने पादौ एव अम्बुजे यस्य तत्सम्बुद्धौ ब्रह्मविष्णुसुराधीशवन्द्यमानपदाम्बुज (सम्बुद्धिः) - ब्रह्मादिदेवैः नमस्कृतपादयुगल,

**संसारनाटकभ्रान्तिकला - निर्वहणप्रद।**
**समस्तवेदवेदान्तपरिबोधितवैभव ।।४५।।**

संसारनाटकभ्रान्ति-कला-निर्वहणप्रद, संसारः एव नाटकं संसारनाटकं

तस्य या भ्रान्तिः सा एव कला संसारनाटक-भ्रान्तिकला तस्याः निर्वहणं प्रददाति इति तत्सम्बुद्धौ संसारनाटकभ्रान्तिकलानिर्वहणप्रद संसारनाटक-रूपभ्रमपूर्णकलाप्रदर्शन - समर्थ, समस्तवेदवेदान्तपरिबोधितवैभव समस्ताः वेदाश्च समस्तानि वेदान्तानि च समस्तवेदवदान्तानि तैः परिबोधितं वैभवं यस्य तत्सम्बुद्धौ समस्तवेदवेदान्तपरिबोधितवैभव - समस्तैः वेदैः समस्तैः वेदान्तैः अधिकतया प्रकाशितवैभवसम्पन्न।

**संसारवैद्य सर्वज्ञ सर्वशक्तिनिरङ्कुश।**
**सच्चिदानन्दसर्वस्व परमाकाशविग्रह।।४६।।**

संसारवैद्य संसारस्य वैद्यः तत्सम्बुद्धौ संसारवैद्य सर्वज्ञ सर्वशक्तिनिरङ्कुश सर्वासां शक्तीनां निरङ्कुशः तत्सम्बुद्धौ सर्वशक्तिनिरङ्कुश सर्वासामपि शक्तीनाम् अङ्कुशरहित निरङ्कुशशक्तियुक्त, सच्चिदानन्द, सर्वस्व सर्वस्वरूप परमाकाशविग्रह परमः आकाशः एव विग्रहः यस्य सः तत्सम्बुद्धौ परमाकाश-विग्रह परमाकाशशरीरयुक्त।

**समस्तजगदाधारज्योतिर्लिङ्गविजृम्भण ।**
**सदाशिवमुखानेक - दिव्यमूर्तिकलाधर।।४७।।**

समस्तजगदाधारज्योतिर्लिङ्गविजृम्भण समस्तं यत् जगत् तस्य समस्तजगतः आधारं यत् ज्योतिर्लिङ्गं तेन विजृम्भते यः तत्सम्बुद्धौ समस्तानां जगताम् आधाररूपेण वर्तमानस्य ज्योतिर्लिङ्गस्य रूपेण विजृम्भण महेश्वर!, सदाशिवमुखानेव-दिव्यमूर्तिकलाधर सदाशिवस्य मुखानि च तानि अनेकानि तेभ्यः सकाशात् दिव्यमूर्तिरूपकलानां धरः तत्सम्बुद्धौ-सकलनिष्कलात्मक-सदाशिवनीलकण्ठप्रभृतिदिव्यमूर्तित्वस्वीकाररूपकलाधर महेश्वर!

**गुणत्रयपदातीत मलत्रयविनाशन।**
**जगत्त्रयविलासात्मन् श्रुतित्रयविलोचन।।४८।।**

गुणत्रयपदातीत-गुणत्रयस्य यत् पदं तस्य अतीत तत् अतीत्य वर्तमान विद्यमानस्वरूप, मलत्रयविनाशन मलत्रयं विनाशयति इति तत्सम्बुद्धौ मलत्रयविनाशन आणवमायीयकार्मरूपमलत्रयस्य विनाशक, जगत्त्रयविलासात्मन् जगतां त्रयमेव विलासरूपः आत्मा यस्य सः तत्सम्बुद्धौ जगत्त्रय-विलासात्मन्

जगत्त्रयस्य विलास्वरूपक, श्रुतित्रयविलोचन श्रुतीनां त्रयमेव विलोचनं यस्य सः तत्सम्बुद्धौ श्रुतित्रयविलोचन ऋग्वेद यजुर्वेदसामवेदाः इति श्रुतित्रयलोचनत्रययुक्त महेश्वर!

**पाहि मां परमेशान पाहि मां पार्वतीपते।**
**त्वदाज्ञया मयैतावत्कालमात्रं महीतले।।**
**अचारि भवदुक्तानामागमानां प्रसिद्धये।।४९।।**

हे परमेशान मां पाहि रक्ष हे पार्वतीपते मां पाहि रक्ष, त्वदाज्ञया तव आज्ञया मया एतावत्कालमात्रं एतावत्कालपर्यन्तं महीतले भूमण्डले भवदुक्तानाम् भवता उपदिष्टानाम् आगमानां शिवागमानां वीरशैवसिद्धान्त-प्रतिपादकानाम् प्रसिद्धये प्रकाशार्थम् अचारि सञ्चारणं कृतम्।

**अचारि** - चर-गतौ भक्षणे च, कर्मणि लुङ्

अचारि अचारिषाताम् अचारिषत - इत्यादि।

**पाहि**-पा-रक्षणे, लोट्, पातु पातात् पान्तु, पाहि इत्यादि।

**अतः परं स्वरूपं ते प्राप्तुकामोऽस्मि शङ्कर।**
**अन्तरं देहि मे किञ्चिदनुकम्पाविशेषतः।।५०।।**

हे शङ्कर प्रसिद्धनामकसोमेश्वर! अतः परम् इतः परम् अहं ते तव स्वरूपं प्राप्तुकामः प्राप्तुं कामः प्राप्तुकामः अस्मि प्राप्तुमिच्छामि, तस्मात् अनुकम्पाविशेषतः अनुकम्पायाः विशेषात् विशिष्टामनुकम्पां कृत्वा किञ्चित् अन्तरमवकाशं देहि प्रयच्छ।

**देहि** – डु-दाञ् - दाने, लोट्, ददातु दत्तात् दत्ताम् ददतु।
देहि दत्तात् दत्तम दत्त।
ददानि ददाव ददाम।

**इत्युक्ते गणनायकेन सहसा लिङ्गात् ततः शाङ्कराद्**
**वत्सागच्छमहानुभाव भवतो भक्त्या प्रसन्नोऽस्म्यहम्।**
**इत्युच्चैरगदद्वचस्तनुभृतामाश्चर्यमासीत् तदा**
**दिव्यो दुन्दुभिराननाद गगने पुष्पं ववर्षुर्गणाः।।५१।।**

गणनायकेन श्रीरेणुकगणाधीश्वरेण इति उक्ते सति एवंरूपेण प्रार्थिते सति सहसा तत्क्षणादेव ततः अनन्तरं ततः तस्मात् शाङ्करात् शङ्करसम्बन्धिनः लिङ्गात्-भोः महानुभाव निगमागमादिषु महानिश्चयात्मकज्ञानवन् वत्स रेणुकगणाधीश्वराख्यकुमार, भवतः तव भक्त्या नवविधया अपि भक्त्या अहं प्रसन्नः अस्मि सुप्रसन्नोऽस्मि, अतः आगच्छ अत्र आयाहि इति वचः उच्चैः शिवः अगदत् अवादीत्, तदा तस्मिन् समये तनुभृतां शरीरिणां जनानाम् आश्चर्यमासीत्, अपि च गगने दिव्यः दुन्दुभिः देवदुन्दुभिः आननाद सर्वत्र ध्वनितः अभवत् गणाश्च पुष्पं ववर्षुः देवगणाः अपि पुष्पवृष्टिं ववर्षुः।

**आगच्छ** – आ+गम्लृ - गतौ लोट्,

**अगदत्** – गद् - व्यक्तायां वाचि, लङ्,

**आननाद** – आ+णद - अव्यक्ते शब्दे, लिट् - ननाद नेदतुः इत्यादि। ववर्षुः वृष वर्षणे लिटि बहुवचनम्

वृत्तम् – शार्दूलविक्रीडितम्। लक्षणम्—

'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।'

**श्रुत्वा लिङ्गाद्वचनमुदितं शाङ्करं सानुकम्पं**
**संहृष्टात्मा गणपतिरथो ज्योतिषा दीप्यमानः।**
**जातोत्कण्ठैः परमनुचरैर्योगिभिः स्तूयमानो**
**ज्योतिर्लिङ्गं परमनुविशत् स्वप्रकाशं तदानीम्।।५२।।**

अथः पुष्पवृष्टेः अनन्तरं लिङ्गात् श्रीसोमेश्वरलिङ्गात् उदितम् उत्पन्नं सानुकम्पम् अनुकम्पेन सह वर्तमानं सानुकम्पं कृपासहितं शाङ्करं शङ्करादागतं वचनं श्रुत्वा संहृष्टात्मा सन्तुष्टचित्तः सन् गणपतिः रेणुकगणाधीश्वरः ज्योतिषा दिव्येन शिवप्रकाशेन दीप्यमानः दीप्यते इति दीप्यमानः देदीप्यमानः अधिकतया प्रकाशमानः सन् जातोत्कण्ठैः उद्गताः कण्ठाः उत्कण्ठाः जाता उत्कण्ठाः येन तैः जातोत्कण्ठैः सञ्जातकुतूहलैः आश्चर्ययुक्तैः अनुचरैः अनुसृत्य चरन्ति इति अनुचराः तैः स्वामनुसृत्य स्वेन सह आगतैः योगिभिः शिवयोगिभिः परम् उत्कृष्टतया स्तूयमानः स्तूयते इति स्तूयमानः सन् स्तोत्रादीन् क्रियमाणः सन् तदानीं तत्क्षणे एव परं सर्वोत्कृष्टं स्वप्रकाशं

स्वकीयप्रकाशरूपं स्वयं शिववत् ज्योतिःस्वरूपवत्त्वात् स्वस्वप्रकाशयुक्तं ज्योतिर्लिङ्गं सोमेश्वराख्यं ज्योतिर्लिङ्गम् अनुविशत् अनुसृत्य प्राविशत् सामरस्यं प्राप्तवान्। अनुविशत्– अनु+विश - प्रवेशने, लङ्, अविशत् इति रूपम् परम् अत्र **अनुविशत्** = अनु + अविशत् अन्वविशत् इतिस्यात्, तस्मात् 'परमनुविशत्' इति पाठापेक्षया **'परममविशत्'** 'परमं श्रेष्ठतमं ज्योतिर्लिङ्गम् अविशत् प्राविशत् प्रविष्टवान्' इति एव पाठः साधुः इति मेऽभिप्रायः। अन्वविशत् इति पाठस्वीकारे छन्दोभङ्गः। अत्र मन्दाक्रान्तावृत्तम्। लक्षणम् —

'मन्दाक्रान्तावृत्तम्। लक्षणम् –

'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद्गुरू चेत्।'

**लीने तस्मिन् शाङ्करे स्वप्रकाशे**
**दिव्याकारे रेणुके सिद्धनाथे।**
**सर्वो लोको विस्मितोऽभूत्तदानीं**
**शैवी भक्तिः सप्रमाणा बभूव।।५३।।**

दिव्याकारे दिव्यः आकारः यस्य सः तस्मिन् दिव्यस्वरूपवति सिद्धनाथे सिद्धानां नाथः तस्मिन् सिद्धनाथे सिद्धश्रेष्ठे रेणुके श्रीरेणुकगणाधीश्वरे स्वप्रकाशे स्वस्वप्रकाशयुक्ते शाङ्करे शङ्करसम्बन्धिनि तस्मिन् लिङ्गे सोमेश्वरनामके प्रसिद्धे तस्मिन् ज्योतिर्लिङ्गे लीने सति ऐक्यं गते सति, तदानीं सर्वः लोकः सर्वोऽपि जनः विस्मितः अभूत् आश्चर्ययुक्तः अभूत्अपि च तदानीं शैवी भक्तिः शिवभक्तिरपि सप्रमाणा प्रमाणेन सह वर्तमाना सती **बभूव** अभवत्। **बभूव** - भू -सत्तायाम् - लिट्। अत्र शालिनीवृत्तम्– 'शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः।' इति लक्षणम्।

**श्री - वेदागमवीरशैवसरणिं श्रीषट्स्थलोद्यन्मणिं**
**श्रीजीवेश्वरयोगपद्मतरणिं श्रीगोप्यचिन्तामणिम्।**
**श्रीसिद्धान्तशिखामणिं लिखयिता यस्तं लिखित्वा परान्**
**श्रुत्वा श्रावयिता स याति विमलां भक्तिं च मुक्तिं पराम्।।५४।।**

श्रीवेदागमवीरशैवसरणिं श्रीकराः वेदाश्च आगमाश्च श्रीवेदागमाः तेषु

प्रतिपाद्या या वीरशैव-सरणिः एव सरणिः यत्र तं श्रीवेदागमवीरशैवसरणिं मङ्गलकराः ये वेदागमादयः तेषु प्रतिपादितः यः वीरशैवः वीरशैवसिद्धान्तः तस्य सिद्धान्तस्य सरणिः मार्गदर्शकः मार्गप्रतिपादकः अतएव सरणिः इव मार्गः इव वर्तमानः यः तं श्री-सिद्धान्तशिखामणिं, श्रीषट्स्थलोद्यन्मणिं श्रीकरं यत् षट्स्थलं तस्मात् उद्यन् यः मणिः सः मणिरिव वर्तमानः यः तं श्रीषट्स्थलोद्यन्मणिं मङ्गलात्मकं यत् एकोत्तरशतसंख्याकान्तः स्थलान्तर्गतं षट्स्थलं तस्मात् उद्गतः यः मणिरिव मणिः ग्रन्थरूपः यः तादृशं श्रीसिद्धान्त-शिखामणिम्, श्रीजीवेश्वरयोगपद्मतरणिं श्रीकरौ यौ जीवेश्वरौ तयोः यः योगः स एव यत् पद्मं तस्य विकासकरणे तरणिः इव वर्तमानः तरणिः यः तं मङ्गलात्मकयोः जीवेश्वरयोः परमैक्यरूपयोग-पद्मस्य विकासकरणे सूर्यः इव वर्तमानः तरणिरूपः यः तम् श्रीसिद्धान्तशिखामणिम्, श्रीगोप्यचिन्तामणिं श्रीकरं यत् गोप्यं शिवरहस्यं यत् तस्य प्रकाशकः चिन्तामणिः इव वर्तमानः चिन्तामणिः यः तम् श्रीगोप्यचिन्तामणिम् मङ्गलकरं गोप्यं च यत् शिवरहस्यं तस्य अर्थस्य प्रकाशकरणे चिन्तारत्नमिव वर्तमानं चिन्तामणिं श्रीसिद्धान्तशिखामणिंनामकं सर्वेषामपि सिद्धान्तानां शिखामणिरिव वर्तमानं ग्रन्थरूपमिमं सिद्धान्तशिखामणिं तं प्रसिद्धं ग्रन्थं यः स्वयं लिखित्वा परान् लिखयिता लेखयिता इति यावत् लिखयिता इति आर्षप्रयोगात् छन्दसश्च अनुकूलात् इति ज्ञेयम्, यः परान् लेखने प्रचोदयति, अपि च यः स्वयं श्रुत्वा इतरान् श्रावयिता श्रवणे प्रेरयिता, इति सर्वोऽपि सः तादृशः लेखकः लेखयिता श्रोता श्रावकः इत्यादिकः सर्वः अपि विमलां परिशुद्धां भक्तिं शिवभक्तिं परां श्रेष्ठतमां मुक्तिं च लिङ्गाङ्ग - सामरस्यं च याति प्राप्नोति।

*।।इति श्रीमत्-षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ रेणुकविभीषणसंवादे रेणुकशिवलिङ्गैक्यप्रसङ्गो नाम*

*।।एकविंशः परिच्छेदः।।*



॥श्रीः॥

**जीयाच्छ्रीरेणुकाचार्यशिवाचार्य-शिखामणिः।**
**यो वीरशैवसिद्धान्तं स्थापयामास भूतले॥**
**जीयाच्छ्रीदारुकाचार्य-शिवाचार्यशिखामणिः।**
**यो वीरशैवसिद्धान्तं स्थापयामास भूतले॥**
**श्रीविश्वाराध्यआभातिशिवाचार्यशिखामणिः।**
**यो वीरशैवसिद्धान्तं स्थापयामास भूतले॥**
**वृषभेशं नन्दिकेशं श्रीकण्ठेश्वरमेव च।**
**नमामि सर्वदा भक्त्या पार्वतीं शक्तिरूपिणीम्॥**

परमां वात्सल्यमयीं मातरं लिं-सिद्धवीराम्बाम्, मम विद्याभ्यासादिविषये परमवात्सल्यपूर्णहृदयवैभवतया पूर्णमाशीर्वादं कृतवन्तं ब्रह्मसन्द्रमठाधीशं पितरं लिं-बसवाराध्यम्, संस्कृतवेदाद्यध्ययनविषये परोक्षरूपेण मम आदर्शवदादर्शरूपं मातामहं लिं-बेल्लावेमूलम्ठीय रुद्रशास्त्रिणम्, कै.वा.वै. विश्वनाथशास्त्री, लिं-बि.गङ्गप्पार्यः इत्यादीन् मम विद्यागुरून् सर्वानपि मम हृन्मन्दिरे स्मारं स्मारम्, सार्धपञ्चदशवर्षं यावत् मातृवात्सल्यपूर्णहृदयवैभवतः अशनवसनवसति-प्रदानद्वारा संस्कृतवेदाङ्ग्लादिभाषाध्ययनार्थं कृपाशीर्वाददानबलेन एतादृशव्याख्याकरणसामर्थ्यप्रदाने परोक्षरूपेण प्रमुखकारणरूपवताम्, कारुण्यवात्सल्यादि - परिपूर्णहृदयान्तः - करणानां, सञ्चरणशील - प्रत्यक्ष परमेश्वरस्वरूपिणां, महान्यासपूर्वकक्रियमाणशिवपूजाधुरन्धराणां, श्रीसिद्धलिङ्गेश्वर-गुरुकुल - पितामहानां कुलपतीनां, श्रीसिद्धलिङ्गेश्वरकृपाकटाक्षपरिपूर्णपात्राणां, संस्कृतवेदाङ्ग्लादिभाषाविशारदानां विद्वत्प्रियाणां विद्यावाचस्पतीनां श्रीसिद्धगङ्गामहाक्षेत्राधीश्वराणां श्रीमन्निरञ्जनप्रणवस्वरूपिणां श्रीश्रीश्री शिवकुमार-महास्वामिनां परमपवित्रचरणारविन्दयोः सविनयं सश्रद्धं सभक्तिकं सहस्राधिकं प्रणामान् समर्पयित्वा,

शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकस्य श्रीसिद्धान्तशिखामणिनामकस्य परमपवित्रग्रन्थस्यास्य संस्कृतभाषायीव्याख्यानकरणे हृदयपूर्णामाशीर्वादरूपामाज्ञां दत्वा एतद्व्याख्यानकरणे प्रोत्साहं दत्तवतां संस्कृतवेदशिवाद्वैतसिद्धान्तादिषु

परिपूर्णज्ञानवतां संस्कृतकन्नडाङ्ग्लमराठीहिन्दीत्यादिनानाभाषासु प्राप्तविशारदानां विद्यावाचस्पतीत्यादिविरुदाङ्कितानां श्रीमत्काशीज्ञानसिंहासनाधीश्वराणां १००८ जगद्गुरुवर्याणां श्रीश्रीश्रीचन्द्रशेखरशिवाचार्यभगवत्पादानां पवित्रचरणारविन्दयोः सश्रद्धम् भक्तिपूर्वकं सहस्राधिकं प्रणामान् समर्पयित्वा च।

**।।व्याख्यानमिदं परिसमाप्यते।।**

*सर्वेषां हृदि शक्तिविशिष्टाद्वैतसिद्धान्तः दृढं तिष्ठतु,*
*सर्वसौख्यकृते प्रभूततमं कारणं भवतु,*
*सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः*
*।।इति सम्प्रार्थ्य विरम्यते।।*

*।।इति शिवम्।।*

**विद्वान् बि.राजशेखराचार्यः,**
ब्रह्मसन्द्रमठीयः
ब्रह्मसन्द्रग्रामः (पी.ओ.)
कोराहोब्लि, ५७२१२८
तुमकुरुता।।जि।।
कर्नाटकदेशः

ब्रह्मसन्द्रग्रामः
१२.०१.२०१४

## परिशिष्टम् १-३

# अवलोकिताः ग्रन्था

१. सिद्धान्तशिखामणिः– श्रीमरितोण्टदार्यव्याख्या-मराठीव्याख्याद्वयसहितः, काशीप्रकाशनम्।

२. श्रीसिद्धान्तशिखामणिः–श्री मरितोण्टदार्यव्याख्या-हिन्दी-अनुवाद-द्वयसहितः, काशीप्रकाशनम्।

३. सिद्धान्तशिखामणिः– श्रीकाशीनाथशास्त्रिकृत-कन्नडव्याख्यासहितः, पञ्चाचार्यप्रेस्, मैसूर।

४. शिवाद्वैतदर्पणः– श्रीशिवानुभवशिवाचार्यविरचितः, काशीप्रकाशनम्, बि.राजशेखरय्यकृत-कन्नडानुवादसहितः, अयं हस्तप्रतिरूपः, अप्रकाशितः, मुद्रापनीयः।

५. शिवाद्वैतपरिभाषा– श्रीनीलकण्ठशिवाचार्यविरचिताः, काशीप्रकाशनम् बि.राजशेखरय्यकृतकन्नडानुवादसहितः, श्रीरम्भा-पुरीपीठ-प्रकाशितः।

६. वीरशैवेन्दुशेखरः– श्रीसदाशिवशास्त्रिविरचितः (श्रीशिवानन्द-जगद्गुरुभिः), काशीप्रकाशनम्, बि.राजशेखरय्य-कृत-कन्नडानुवादसहितः, श्रीरम्भापुरीपीठतः।

७. तत्त्वप्रकाशिका– भोजदेवविरचिता, बि.राजशेखरय्यकृत-कन्नडानुवादसहिता, वीरशैव-अनुसन्धानसंस्थानम्, बेङ्गलूरुशाखा - इत्यत्र प्रकाशिता।

८. वीरशैवदर्शनदीप्तिः– हस्तप्रतिरूपा, बि.रांजशेखरय्यविरचिता, प्रकाशनीया।

९. विरूपाक्षपञ्चाशिका– विरूपाक्षनामकाचार्यविरचिता, बि.राजशेखरय्यकृत-कन्नडव्याख्यासहिता, हस्तप्रतिरूपा, प्रकाशनीया।

१०. चन्द्रालोकः-वृत्तरत्नाकरश्च-वि.राजशेखरय्यकृत-कन्नडानुवादसहितः, मल्लिकार्जुनग्रन्थप्रकाशनम्, बि.राजशेखरय्य-सन्मानसमितिः, सम्मिलित्वा प्रकाशितः ग्रन्थः। मैसूरु।

११. कुवलयानन्दः– अप्पय्यदीक्षितविरचितः।

१२. हिन्दूदर्शनसारः– कन्नडभाषायां लक्ष्मीपुरं श्रीनिवासाचार्येण विरचितः, मैसूरुविश्वविद्यालयप्रसारांगतः।

१३. अमरकोशः– अमरसिंहविरचितः।

१४. बृहद्धातुरूपावलिः– टि.आर.कृष्णाचार्यविरचितः, कुम्भकोणम्।

१५. तर्कसङ्ग्रहः– अन्नम्भट्टविरचितः, कन्नडानुवादः-बि.राजशेखरय्य, श्रीरम्भापुरीपीठस्थ-श्रीरामवीरशैवसद्बोधनसंस्थानम्।

१६. वीरशैवदर्शनामृतम्– शैवोपनिषत्त्रयस्य कन्नडव्याख्यानम्, व्याख्याकर्ता बि.राजशेखरय्य, श्रीरम्बापुरीपीठस्थ-श्रीमद्वीरशैव-सद्बोधनसंस्थानम्।

१७. सिद्धान्तकौमुदी– भट्टोजीदीक्षितस्य।

१८. पाणिनीयधातुरूपावलिः– विद्वान् जि. विष्णुमूर्तिभट्टस्य।

१९. अङ्गलिङ्गसमायोगः– कन्नडभाषायाम् लेखकः बि.राजशेखरस्य।

२०. सटीकगर्भाधानादिविधयः– श्री नञ्जुण्डस्वामी।

।।इत्यादयः।।



।श्री।।

# व्याख्याकर्तुः संस्कृतकन्नडभाषासाहित्यसेवा

साप्ताहिक-मासिकादिनियतकालिकपत्रिकासु प्रकटितानि लेखनानि, अभिनन्दनग्रन्थेषु स्मरणग्रन्थेषु इत्यादिषु प्रकटितानि धार्मिकादिविषयकाणि लेखनानि इत्यादीनि आदृत्य न्यूनाधिकपञ्चाशल्लेखनानि,

**कन्नडभाषायामनूदिताः केचन संस्कृतग्रन्थाः**

१. दुर्वाददूरीकरणम्
२. वैद्यकीयसुभाषितसाहित्यम्
३. आयुर्वेदीयहितोपदेशः
४. अनुवादचन्द्रिका
५. वीरशैवबालबोधिनी
६. चन्द्रालोकः वृत्तरत्नाकरश्च
७. शिवाद्वैतपरिभाषा
८. वीरशैवेन्दुशेखरः
९. वीरशैवदर्शनामृतम्
१०. तत्त्वप्रकाशिका
११. श्रीकण्ठभाष्यम् (षट् अधिकरणानि)
१२. तर्कसङ्ग्रहः
१३. विरूपाक्षपञ्चाशिका (हस्तप्रतिरूपा, अप्रकटिता)
१४. कुवलयानन्दः (हस्तप्रतिरूपः, अप्रकटितः)
१५. शिवाद्वैतदर्पणः (हस्तप्रतिरूपः, अप्रकटितः) इत्यादयः।

संस्कृतभाषामाश्रित्य नियतकालिकादिषु प्रकटितानि— लेखनानि, संस्कृतभाषायामनूदितानि कानिचन वचनानि, श्रीजगद्गुरु पञ्चाचार्यसुप्रभातम् श्रीचन्नवीरशरणान् प्रति अष्टोत्तरशतनामावलिः श्रीकारशिवयोगिनः प्रति अष्टोत्तरशतनामावलिः

इत्यादयः।।

# प्रशस्तयः सम्मानादयः

१. कर्नाटकराज्यप्रशस्तिः

२. होसपेटेशरणबलगद्वारा 'अलङ्कारशास्त्राभिज्ञः' प्रशस्तिः

३. वि.आर.करिवसवशास्त्रिस्मारकत्वेन 'श्रेष्ठसंस्कृततगुरुवर्यप्रशस्तिः'

४. शिवप्पशेट्टि-कमलम्मस्मारकत्वेन 'शिवकमलसाहित्यप्रशस्तिः' इत्यादि ।

श्रीमद्रम्भापुरीवीरसिंहासनाधीश्वरैः प्रस्तुतजगद्गुरुभिः अनेकवारं गुरुरक्षाप्रदानरूपः सम्मानः,

श्रीमत्काशीज्ञानसिंहासनाधीश्वरैः प्रस्तुतजगद्गुरुभिः अनेकवारं गुरुरक्षाप्रदानरूपः सम्मानः,

अनेकसङ्घसंस्थादिद्वारा अनेके सम्मानाः इत्यलम् ।



॥ श्रीविश्वाराध्यः प्रसीदतु ॥

